अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला–५३

# वैयाकरणसिद्धान्तकल्पतरु

प्रणेता
डॉ. पङ्कजकुमारव्यासः

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 53

# वैयाकरणसिद्धान्तकल्पतरुः

प्रणेता
डॉ. पङ्कजकुमारव्यासः

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं
न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

| | | |
|---|---|---|
| शीर्षकम् | – | वैयाकरणसिद्धान्तकल्पतरु: |
| प्रणेता | – | डॉ. पङ्कजकुमारव्यास: |
| प्रधानसंपादक: | – | आचार्य: श्रीनिवास: वरखेडी<br>कुलगुरु, क.का.सं.वि., रामटेकम् |
| संपादक: | – | आचार्य: मधुसूदन: पेन्ना<br>संचालक: संशोधन–प्रकाशनविभाग:<br>क.का.सं.वि., रामटेकम् |
| संपादकमण्डलम् | – | डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक<br>डॉ. वीना गाणु, नागपुर. |
| प्रकाशनवर्षम् | – | 2020 |
| आवृत्ति: | – | प्रथमा |
| मूल्यम् | – | 450.00 |
| आय.एस.बी.एन. | – | 9788183154055 |
| मुखपृष्ठम् | – | श्री. उमेश पाटील, क.का.सं.वि., रामटेकम् |
| प्रकाशक: | – | कुलसचिव:,<br>कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालय:,<br>प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्. |

एवं

न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek | Prof. Srinivasa Varakhedi
10th January 2020 | Vice Chancellor, KKSU

# Kavikulaguru Kalidas Sanskrit University
# All India Oriental Conference

**100th Year 50th Session**
**10th-12th January, 2020**

## Chief Patron
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

## Patron
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

## AIOC President
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

## AIOC General Secretary
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

## AIOC Local Secretary
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

## Additional Local Secretary
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

## Organising Committee
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek

Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

**Prof. J. Rama Krishna**
Professor
Department of Vyakarana
Tel : 0877-2287649 (O)
Ext. - 218



**Rashtriya Sanskrit Vidyapeetha**
**(Deemed to be University : Established under section 3 of UGC Act, 1956)**
**Accredited with CGPA of 3.71 on four point scale at "A" Grade by NAAC (Cycle-2)**
**Tirupati –517507 (A.P.)**

# शुभाशंसनम्

"शब्दब्रह्मणिनिष्णातः परं ब्रह्माधिगच्छति" इति जयोक्तिः शब्दविद्या मोक्षस्य परमं साधनमित्येतादृशमहत्त्ववती सा सर्वैरप्युपास्या तत्तत्प्रकारैः। यथोक्तं भगवता पतञ्जलिना - चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति - आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन व्यवहारकालेन चेति। तत्रागमस्वाध्यायकालाभ्यां परं भवति प्रवचनकालः। तस्मिन्नेव च काले स्वाध्यायाधीतस्य ग्रन्थलेखनरूपेण परिणतिर्भवति। तस्मादयमपि कश्चन प्रकारः शब्दविद्योपासनायाः। अस्मिन्नेव क्रमे कलियुगप्रत्यक्षविबुधस्य सकललोकोपादान-भूतस्य सकलाभीष्टप्रदायकस्य श्रीहरिप्रियाप्रियस्य भगवतो वेङ्कटाचलाधीशस्याशेषानुग्रह-विशेषेणाधिगतशब्दशास्त्रविद्येनास्मत्प्रियच्छात्रेण श्रीपङ्कजकुमारव्यासेन श्रीवेङ्कटेशस्याङ्घ्रि-मूले प्रतिष्ठितस्य महनीयस्यास्य तिरुपतिस्थराष्ट्रियसंस्कृतविद्यापीठस्य व्याकरणविभागे सहाचार्यपदवीं सम्प्राप्येदानीं "वैयाकरणसिद्धान्तकल्पतरुः" इत्याख्यः स्वकीयो ग्रन्थः प्राकाश्यं नीयत इति विज्ञाय महान्तमानन्दमनुभवति मे चेतः।

सोऽयं वैयाकरणसिद्धान्तकल्पतरुर्नामा ग्रन्थोऽनेन स्वीयबुद्ध्या भूषणसारलघुमञ्जूषादि-ग्रन्थान् समाधृत्य शाब्दबोधीयसिद्धान्तसरणिमनुसृत्य शाब्दिकपन्थानमनुल्लङ्घ्य च व्यरचीति ग्रन्थस्थविषयपर्यालोचनेन ज्ञायते। ग्रन्थोऽयं यथामञ्जूषं प्रकरणक्रममाश्रित्य व्यलेखि। तथा हि – प्रथमतः शाब्दबोधकारणीभूतवृत्तेः सभेदससहकारिकारणनिरूपणपुरःसरं तद्वृत्त्याश्रय-स्यानादिनिधनाख्यस्य स्फोटात्मकशब्दब्रह्मणः स्वरूपमभिवर्ण्य तस्य च सकलस्यापि शब्दस्य मूलभूतं धात्वर्थञ्च सप्रपञ्चं निरूप्य तदनु विभक्त्यर्थ-सुबर्थ-नामार्थ-समासशक्ति-निपातार्थविषयकमतमतान्तराणि सम्यगालोच्य शाब्दिकनये विद्यमानाः समेऽपि सिद्धान्ताः समूलं प्रत्यपादिषत। एवञ्चाहत्य शक्ति-लक्षणा-व्यञ्जना-स्फोट-आकाङ्क्षा-योग्यता-आसत्ति-

तात्पर्य-धात्वर्थ-लकारार्थ-विभक्त्यर्थ-नामार्थ-समासशक्ति-निपातार्थाख्यैश्चतुर्दशभिः प्रकरणैः सुशोभतेऽयं ग्रन्थः। अत्र सर्वेऽपि विषया ग्रन्थकर्त्राऽऽयुष्मता पङ्कजेन सरलया भाषया इदानीन्तनच्छात्रानुद्दिश्य तदुपकारकबुद्ध्याऽनायासेन दुरुहशाब्दिकराद्धान्तानां बोधाय समुपस्थापितास्सन्ति। आर्थिकग्रन्थप्रतिपादित-सिद्धान्तावगमाय विरचितेषु सत्स्वपि बहुविधव्याख्याग्रन्थेषु तत्तद्ग्रन्थप्रतिपादितगहनविषयावगाहने इदानीन्तनच्छात्राः निमज्जिता इवावलोक्यन्ते। अस्ति च तत्र कारणं मूलविषयापेक्षयापि तत्तद्व्याख्याग्रन्थानां प्रौढतरशैल्या प्रणयनमिति। अत आसीदपेक्षा तादृशस्य ग्रन्थस्य यत्र यथासम्प्रदायं मुख्या विषया कालानुगुणं व्याख्याता स्युः। ग्रन्थमेनमवलोक्य साऽपेक्षा पूर्णेत्येतादृग्रचनाप्रयासः श्लाघनीयः। विषयप्रतिपादने ग्रन्थस्येदमपि वैशिष्ट्यं यत् प्रत्येकस्मिन्नपि प्रकरणे ससङ्गति यथाक्रमं सुबोधया शैल्या सह पूर्वपक्षसिद्धान्तपक्षाणामुपस्थापनाय मध्ये शङ्कासमाधानरूपप्रश्नोत्तरशैल्यप्याश्रिता। तस्मान्नैयायिकादिशास्त्रान्तरीयाणां मतानि प्रश्नादिरीत्या पूर्वपक्षीकृत्य तदुत्तरसमाधानपरग्रन्थेन शाब्दिकाः सिद्धान्ताः सम्यग् विविच्य यथासम्प्रदायं विमृष्टाः। एवमेव भूषणादिग्रन्थेष्वागतानां परिष्काराणां लक्षणानाञ्च समन्वयप्रकारोऽपि पदशः सुष्ठु प्रदर्शितः। तस्माद्भूषणसारमञ्जूषाद्यार्थिकग्रन्थाध्येतृणां समेषामपि छात्राणां शोधार्थिनाञ्च महते उपकारायायं ग्रन्थ इत्यभिप्रैमि।

भगवान् कृपाजलनिधिः श्रीभूसमेतः श्रीनिवासः सुप्रीतः सुप्रसन्नो वरदो भूत्वा ग्रन्थकर्तुः सर्वविधोत्तरोत्तराभिवृद्धिमीदृशबहुग्रन्थरचनापटुताञ्च कल्पयत्विति भगवन्तं तं सम्प्रार्थ्य मङ्गलान्याशासे।

तिरुपतिः

जा· रामकृष्णः

जानमद्दि रामकृष्णः

**Dr. B. V. Venkataramana**
Professor,
Department of Nyaya & Vaisheshika
Dean of Shastra Faculty,
Director of Research & PG Studies
**Email:** bv.nyaya@gmail.com



**Karnataka Sanskrit University**
Pampa Mahakavi Road,
Chamarajpet, **Bangalore – 560 018**
**Phone:** 080-2670 1303
**Email:** karnatakasanskrituniversity@gmail.com

# शुभाशंसाः

“मुखं व्याकरणं स्मृतं” “प्रधानञ्च षड्ङ्गेषु व्याकरणम्” इति पाणिनिपतञ्जलिभ्यां कण्ठतः प्रोक्तत्वाद् वेदाङ्गतया परिगणितेषु शिक्षादिषु व्याकरणं प्रधानम् । तच्च व्याकरणं नवविधम्। नवस्वपि पाणिनीयस्य लौकिकवैदिकोभयविधशब्दसाधुत्वप्रतिपादनपरत्वात् तत्प्रतिपादने चाद्दतलघूपायत्वाच्च श्रेष्ठत्वात् पाणिनीयव्याकरणप्रादुर्भावानन्तरमितरेषां पूर्वपरवर्तिव्याकरणानां प्रचारपथात् तिरोभाव एव जातः। पाणिनिप्रणीतव्याकरणानुसारेणैव तदनन्तरकालिकसंस्कृतवाङ्मयानि प्रवृत्तानीत्यपि वक्तुं शक्यते। पाणिनिसूत्राणां भाष्यवार्तिकतव्याख्यानादिरूपेण बहुग्रन्थानां पश्चात्कालिकैर्निर्माणेन पाणिनीयं शब्दशास्त्रमभिवर्धितमिति।

व्याकरणशास्त्रस्य द्वयी गतिः प्रक्रियानिरूपणम्, पदपदार्थनिरूपणं चेति सर्वेषां विदितमेव। तदनुसारेण व्याकरणेऽस्मिन् निर्मिता ग्रन्थाः शाब्दिका आर्थिकाश्चेति द्वेधा विभक्तुं शक्यन्ते। प्रकृतिप्रत्ययविभागेन सुबन्ततिङन्तपदनिष्पादनौपायिकप्रक्रियाप्रधाना ग्रन्थाः शाब्दिका इति, प्रकृतिप्रत्ययार्थनिष्कर्षपूर्वकं तदन्वयबोधप्रदर्शनपरा ग्रन्था आर्थिका इति कथ्यन्ते। आर्थिकग्रन्थमिश्रत्वादेव वेदाङ्गतया प्रसिद्धमपि व्याकरणं दर्शनग्रन्थेष्वप्यन्तर्भावितं पश्चात्तनैः। आर्थिकग्रन्थाः शाब्दबोधग्रन्था इत्यपि व्यपदिश्यन्ते। तत्र पदपदार्थनिरूपणपरग्रन्थेषु वैयाकरणभूषणसारः, वैयाकरणसिद्धान्तलघुमञ्जूषा चेति ग्रन्थद्वयमत्यन्तं प्रसिद्धम्। एतयोरध्ययनं नातीव सुलभं कार्यम्। यतो हि अत्र अध्ययने शास्त्रान्तराध्ययनसंस्कारोऽपि अपेक्षितो भवति। अतः छात्राः अत्र काठिन्यमनुभवन्ति। इदं

मनसि निधाय मम शिष्येण विदुषा पङ्कजकुमारव्यासेन वैयाकरणसिद्धान्तकल्पतरुरिति नाम्ना कश्चन महान् प्रबन्धः निर्मितः। यत्र द्वयोः ग्रन्थयोः विद्यमानः सर्वोऽपि विषयः सङ्गृहीतः। स च समग्रोऽपि विषयः अत्यन्तं सरलया रीत्या प्रश्नोत्तररीत्या चोपस्थापितः। ये छात्राः तद्ग्रन्थद्वयस्य अध्ययने क्लिश्यन्ति तानयं ग्रन्थः साधूपकरोति। एतत्प्रयासं विहितवते पङ्कजकुमाराय नितरामभिनन्दनानि विज्ञापयामि। आगामिकाले एवमेव तस्य सारस्वतसेवा अनुवर्ततामिति च कामये।

बेंगलुरु(कर्नाटकम्) इत्थं

बी.वी.वेङ्कटरमणः

# ग्रन्थेऽस्मिन्...

**"प्रधानं च षड्ङ्गेषु व्याकरणम्, प्रधाने हि कृतो यत्नः फलवान् भवति"** इति भाष्येण लोकेऽस्मिन् सर्वासामपि विद्यानां शब्दविद्या प्रधानभूतेति स्पष्टमेवाभिव्यनक्ति भगवान् पतञ्जलिः। वेदोपनिषदादिशास्त्रेषु निहितस्य निखिलस्यापि ज्ञानस्य शब्दमयत्वाच्छब्दशास्त्रमन्तरा न हि कस्यापि शास्त्रस्यावगतिरपि भवति। तदिदं शब्दशास्त्रं शब्दज्ञानोपायभूतमत एव भाष्यारम्भे **"अथ शब्दानुशासनम्" केषां शब्दानां ? लौकिकानां वैदिकानाञ्चेत्यादिसमाधानेन** साधुशब्दान्वाख्यामेवात्र शास्त्रे **"साध्वनुशासनेऽत्र शास्त्रे" "साधुभिर्भाषितव्यं नासाधुभिः"** इत्यादिवचोभिर्व्याकरणशास्त्रस्य साधुशब्दा एव विषया इत्यायातम्। अग्रे पुनः **"शब्देनैवार्थोऽभिधेयो नापशब्देन, एवं क्रियमाणोऽभ्युदयकारि भवति"** इत्यादिवदतो भाष्यकारस्य साधुशब्दप्रयोगेनैव मोक्षावाप्तिरूपफलमपि सिध्यतीत्यत्र तात्पर्यम्। तदाह भाष्यकारः – **"एकः शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः शास्त्रान्वितः स्वर्गे लोके च कामधुग् भवतीति"**। तथैव भर्तृहरिरपि वैयाकरणनिकाये भाष्यवदपरप्रमाणभूतवाक्यपदीये ग्रन्थेऽस्य स्मृतित्वमङ्गीकृत्य-

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः।।**

इत्यस्यां कारिकायां मोक्षस्येदमाद्यं सोपानमिति कथयन् शास्त्रमिदं सर्वशास्त्राण्यतिशेत इति महत्त्वमस्य प्रतिपादयमास। यद्यपि शब्दशास्त्रमिति नाम्नैव तत्त्वप्रतिपादकतया शब्दा एवात्र विषयास्तथापि

**यदधीतमविज्ञातं निगदेनैव शब्द्यते।**
**अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्।। इति।**

**अनर्थकं माधिगीष्महीत्यध्येयं व्याकरणमिति "उत त्वः पश्यन्न ददर्श वाचम् उत त्वः श्रृण्वन्न श्रृणोत्येनाम्" इति ऋङ्मन्त्रव्याख्यानप्रसङ्गे "अपि खल्वेकः पश्यन्नपि न पश्यति अपि खल्वेकः श्रृण्वन्नपि न श्रृणोति"** इति च भाष्योक्त्या शब्दार्थयोरविना-

भावाच्चार्थज्ञानमपि शब्दशास्त्राधीनमेवेत्यप्यायातम् । एवन्तर्हि यथाऽत्र शब्दो विषयस्तथैवार्थोऽपीति स्वीकार्यम् । तथा सति शब्दोच्चारणेन तद्वाच्यः कश्चनार्थोऽप्युपतिष्ठते । ततः तयोः सम्बन्धं पुरस्कृत्य कश्चन बोधोऽपि श्रोतुर्जायते । अमुमेव शाब्दबोधनाम्ना व्यवहरन्ति शास्त्रज्ञाः । ते च एतादृग्बोधं प्रति केनापि कारणेन भाव्यमिति कृत्वा तादृशबोधं प्रति वृत्तिविशिष्टं ज्ञानं हेतुरिति उररीकुर्वन्ति । एतादृगार्थिकविषयषान् प्रतिपादयितुं सर्वेऽपि भिन्नसम्प्रदायाः शास्त्रकर्तारः स्वीयसम्प्रदायमवलम्ब्य विभिन्नान् ग्रन्थान् निरमासिषुः । शास्त्रस्येयं दार्शनिकी परम्परा यत्रार्थिकान् विषयान् शास्त्रकृतः समालोचयन्ति । यद्यपि भाष्यकृदवतरणात् प्राग् व्याकरणशास्त्रे केवलं प्रक्रियाक्रममाश्रित्यैव बहुधा यत्नो व्यदधुः पूर्ववर्तिनस्तथापि तदुत्तरवर्तिनस्तु भर्तृहरिप्रभृतय आर्थिकेष्वपि विषयेषु चिन्तनं प्रारभन्त । तेन कश्चन नूतनोऽपि कल्पः शास्त्रचिन्तनपरम्परायां समजनि । तत्फलत्वेनैव शाब्दबोधविषयप्रतिपादका: ग्रन्थाः प्रादुरभूवन् । तेषु च धात्वर्थाख्यातार्थविचारः, सुबर्थविचारः, स्फोटविचारः, शक्तिविचार इत्यादयोंऽशा: विस्तरेण विचर्चिताः । त एवांशा न्यायमीमांसादिदर्शनान्तरग्रन्थेष्वपि बहुधा समालोचिता इति पूर्वमेवाकथयम् । तस्यां सरण्यां न्यायशास्त्रे जगदीशतर्कालङ्कारकृतशब्दशक्तिप्रकाशिका, गदाधरभट्टाचार्यकृतशक्तिवादव्युत्पत्तिवादौ, उपाध्यायगोकुलनाथकृतपदवाक्यरत्नाकरः, गिरिधरभट्टाचार्यविरचितविभक्त्यर्थनिर्णयः, मीमांसाशास्त्रे च गागाभट्टस्य भाट्टचिन्तामणिः, खण्डदेवस्य भाट्टरहस्यमित्यादयो ग्रन्थाः प्रसिद्धाः । शाब्दिकनिकाये विद्यमानार्थिकग्रन्थेषु कौण्डभट्टप्रणीतवृहद्वैयाकरणभूषणम, तत्सारभूतवैयाकरणभूषणसारो, नागेशभट्टविरचितसिद्धान्तलघुमञ्जूषा, परमलघुमञ्जूषेत्यादयो ग्रन्थाः प्राप्तख्यातयो विद्यन्ते । शाब्दिकनये भाष्यानुसारिसिद्धान्तप्रतिपादकत्वादेषामध्ययनाध्यापनपरम्पराऽद्यावधिरविच्छिन्नास्ति । परमेते समेऽपि ग्रन्था विषयगाम्भीर्याद्ध्येतृणामतीव दुरूहाः । तस्मात् क्लेशमिमं परिहर्तुं कालान्तर एषां ग्रन्थानां व्याख्यानमारभन्त विद्वांसः । परन्तु एतेषु व्याख्यानेषु प्रौढशैल्या अनुसरणात् पदार्थविवेचनवैपुल्याच्चाधुनिकच्छात्राणां न विद्यन्ते बोधगम्यान्येतानि । यद्यपि समये समये केचन

विद्वांसोऽकार्षुः कानिचनार्वाचीनव्याख्यानान्यपि, तेषु कानिचन राष्ट्रभाषायामपि। तथापि यदि संस्कृतेनैव तत्सर्वमधीयीरन् संस्कृतच्छात्रा तर्हि संस्कृतसंस्कारोऽनुवर्तेत ध्रुवं तेषु। पश्यामो वयं तान् बहुत्र यन्मातृभाषायां सम्यक् पदार्थान् परिशीलयन्तोपि संस्कृतेन तत्त्वकथने बिभ्यत इव वेपन्ते। तस्मात् संस्कृतेनैव तेषां चिन्तनाभ्यासः स्यात्तेन दुरूहा अपि पदार्था तेऽनायासेनाधिगन्तुं पारयेयुरिति मनसि निधायाहं गुरुचरणस्मरणपूर्वकं भूषणसारलघुमञ्जूषास्थसिद्धान्तान् परिशील्यातीव सरलया विधया यावदपेक्षितं साम्प्रतं तावद्यथाशाब्दिकसम्प्रदायं यथामति ससङ्गति छात्रोपकारकत्वेन समेषां मुख्यानां सिद्धान्तानामेकत्र समावेशं विदध्यामित्यचिन्तयम्। तेन चिन्तनेन विधित्सितं कार्यमधुना यथाप्रतिज्ञं 'वैयाकरणसिद्धान्तकल्पतरुः' इति ग्रन्थरूपेणोपस्थापयामि।

## प्रकृतग्रन्थः

संज्ञयैव ज्ञायत यदत्र वैयाकरणसिद्धान्ता एव मुख्या विषयाः प्रतिपाद्यतया। चतुर्दशभिः प्रकरणैः समवेतोऽयं ग्रन्थः। अत्र सन्ति शक्ति-लक्षणा-व्यञ्जना-स्फोट-आकाङ्क्षा-योग्यता-आसत्ति-तात्पर्य-धात्वर्थ-लकारार्थ-विभक्त्यर्थ-नामार्थ-समासशक्ति-निपातार्थसिद्धान्तनिरूपणाख्यानि प्रकरणानि। एतेषु प्रकरणेषु प्रपञ्चिता विषया आचार्यस्तरेऽधीयानानां छात्राणां पाठ्यक्रमे भूषणसारः सिद्धान्तलघुमञ्जूषा चेति ग्रन्थद्वयमधिकृत्य प्रायः सर्वत्र विश्वविद्यालयेषु अध्याप्यन्ते। अत एकेनैव ग्रन्थेन ग्रन्थद्वयस्याप्यध्ययनं कर्तुं शक्यमिति पूर्वोक्तग्रन्थद्वयस्थसिद्धान्तानेकत्र समावेशयम्। यत्र तूभयोर्मतभेदः तमत्र पृथग्रूपेण प्रादर्शिषम्। तावता सर्वमपि पूर्वविचारितमेवात्र विचारितमिति किं वा नूतनमत्र प्रस्तुतमिति तु नैव आक्षिपेयुः। तत्रैवं सविनयं निवेदयामि यत् 'कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमा' इति न्यायमाश्रित्य छात्राणामुपकाराय ताँस्तान् सिद्धान्तान् स्वातन्त्र्येण स्वभाषया सुबोधया च शैल्या प्रास्ताविषम्। यद्वा सिद्धान्तकौमुद्याः सत्त्वेऽपि तत्कर्तृशिष्यप्रवरेण वरदराजेन मध्यकौमुदी लघुकौमुदी च निर्मिता छात्रसौकर्याय तथैवैतस्मिन् कर्मणि प्रवृत्तिरिति वा सुधियोऽनुगृह्णन्तु।

# कार्तज्ञ्यविनिवेदनम्

जन्मान्तरीयपुण्यहेतुना, कलौ दुर्गावतारभूतायाः खोडियारदेव्याः करूणावशादसीमितगुरुकृपाबलेन च परमकारुणिकस्य सकलजगद्धेतुभूतस्य निर्विशेषविशेषस्य शेषविभूषणभूषितविष्णोरवतारभूतस्य शेषाचलश्रीनिवासस्य भगवतो वेङ्कटेशप्रभोः कृपाकटाक्षं सम्प्राप्य तत्प्रेरणया मया विरचितो वैयाकरणसिद्धान्तकल्पतरुः इत्याख्यो ग्रन्थः सम्प्रति प्रकाश्यत इति दत्तप्रेरणाय भगवते श्रीनिवासाय प्राथम्येन मम प्रणामकुसुमानि समर्पयामि ।

अस्या रचनाया आरम्भादेव तत्तत्कठिनस्थलानामवगाहने च दिग्दर्शनं कृतवद्भ्यो मां शब्दशास्त्रमध्याप्य मृत्पिण्डाद् घटीकरणमिव जीवनं मे सार्थकीकृत्य विद्याजगति अनस्तित्वस्य ममास्तित्वं प्रकल्प्योपकृतवद्भ्यो पदवाक्यप्रमाणज्ञानामपरनागेशत्वेन ख्यातानां महामहोपाध्यायानां श्रीमतां पेरिसूर्यनारायणशास्त्रिचरणानामत्यन्तप्रियान्तेवासिभ्यः प्रथितयशस्केभ्यो वैयाकरणाग्रगण्येभ्यो गुरुचरणेभ्य आचार्येभ्यः श्रीमद्भ्यो जानमद्दि रामकृष्णमहोदयेभ्यः, परमशाब्दिकाचार्यकोम्पल्लसत्यनारायणशास्त्रिचरणेभ्यः परमगुरुभ्योऽधिगतशब्दविद्येभ्यो तथैव विविधशास्त्रनिष्णातेभ्यः श्रीमद्भ्यः का.इ.देवनाथानाचार्येभ्यः सम्प्राप्तन्यायविद्येभ्यो गुरुभ्यः श्रीमद्भ्यो बी.वी. वेङ्कटरमणचरणेभ्यश्च स्वीयमाधमर्ण्यमाविष्कृत्योभयोश्चरणारविन्दयोर्मुहुर्मुहुः प्रणामान् विनिवेदयन्नात्मानं धन्यं सम्भावयामि ।

प्रकाशनात् प्राक् सकलमपि कल्पतरुमवलोक्य गुरुभिः श्रीमद्भी रामकृष्णमहोदयैः स्वीयाभिप्रायाविष्करणपुरस्सरममूल्यैराशीर्वचोभिरुपकृत इति तदर्थं तेषां चरणारविन्दयोरशेषप्रणामाञ्जलीन् समर्पयामि ।

तथैव अल्पीयसि समये सिंहावलोकनरीत्या कल्पतरुमान्तं दृष्ट्वा स्वीयशुभाशंसनसन्देशेन उपकृत इति गुरुभ्यो वेङ्कटरमणाचार्येभ्यो धन्यतावचांसि प्रकटयामि ।

तदनु तिरुपतौ ममाध्ययनकालादारभ्यः शास्त्रेऽन्यत्रकर्मणि च नूतनचिन्तनेनेतरेभ्यः किञ्चिद्वैलक्षण्यं सम्पादनीयं सर्वदेत्यादिरीत्या प्रचोदयन्ति

तदा तदा रामटेकस्थितस्य कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयस्य कुलगुरुवो न्यायवेदान्तभाषाशास्त्रादिविद्यासु पारङ्गता आचार्यश्रीनिवास-वरखेडीमहाशयाः तत्रत्यविश्वविद्यालयीयप्रकाशनयोजनायाः संरक्षकाश्च। एतैः तत्रत्यविश्वविद्यालयीयप्रकाशनपरियोजनायां प्रकाशनायाङ्गीकृतोऽयं ग्रन्थ इति मे सौभाग्यम्। अस्तेभ्यो सविनयं कार्तज्ञ्यमाविष्करोमि।

तिरुपतिस्थराष्ट्रियसंस्कृतविद्यापीठस्य कुलपतयः आचार्याः वि. मुरलीधर-शर्ममहोदयाः मम नियुक्तिसमये स्वकरकमलाभ्यां नियुक्तिपत्रं ददतः 'सततं त्वयाऽध्यापनप्रकाशनादिकार्याणि कर्तव्यानि' इति आशीःपरकवचोभिः सम-प्रेरयन्निति तेषां वचनं मनसि निधाय सत्वरमेव ग्रन्थप्रकाशनाय प्रावर्तिषि। तेनात्रत्यव्याकरणविभागे सहाचार्यपदे सेवायै प्रवेशात्परमयं प्रथमो ग्रन्थः फलत्वेन दृश्यते, तस्मात् प्रेरणाप्रदातृभ्यः छात्रप्रियेभ्यः परमशाब्दिकेभ्यस्तेभ्यो मामकीनस्नेहकुसुमानि समर्पयामि।

रामटेकस्थितस्य कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयस्य प्रकाशन-योजनायाः परियोजनाधिकारिणः प्रधानसम्पादकाः कुलसचिवचराः प्राच्यपाश्चा-त्त्योभयविद्याप्रवीणा आचार्याः पेन्नामधुसूदनमहोदयाः तेभ्योऽपि नमोवाक्पुरस्सरं धन्यवादान् ज्ञापयामि।

टङ्कितसामग्रीं प्राप्यातीवाल्पीयसि काले यान्त्रिकभाषया (लेटेक्-माध्यमेन) ग्रन्थमेनं सज्जीकृत्य दत्तवन्तं व्याकरणाचार्यकक्ष्यायां मम सहाध्यायिनं संस्कृतज्ञः सन्नपि सङ्गणकभाषायामतीवप्रावीण्यं भजन्तं डॉ. अनिलकुमारनामानं भृश-मभिनन्दामि जीवने तस्य सर्वविधसाफल्यं भवतु इति कामनया।

शास्त्रोक्तं सुहृल्लक्षणमन्वर्थयन् किमपि मदनपेक्षमाणो बहुधा मामुपाकार्षीत् रामटेकविश्वविद्यालस्य ज्योतिषविभागे सहायकाचार्यरूपेण कार्यं कुर्वन् मराठे इत्युपाह्वो दिनकरोऽयं मे सन्मित्रम्, स एव ग्रन्थप्रकाशनविषये प्रथमं मामसूचय-दिति तस्मै स्नेहाञ्जलिं प्रयच्छामि।

एवमेवास्य ग्रन्थस्य प्रणयने तत्तद्ग्रन्थीयपूर्ववर्तिटीकाभ्योऽपि साहाय्यमवश्य-

मेव लब्धमिति तत्तट्टीकाप्रणेतृणां विदुषां कृते सादरं नतिततयः।

स्मरामि च मम सहधर्मिणीं श्रीमतीं मेघां, तस्यै धन्यवादवचांसि न्यूनान्येव। तस्याः साहाय्यं विना कार्यमिदमसम्भवमेव, मासद्वये शीघ्रं कार्यं समापनीयमिति दृष्ट्या एतस्मिन्कार्यप्रसङ्गे सार्द्धैकवर्षात्मिकायाः पुत्र्या लावण्यश्रियः सर्वमप्युत्त-रदायित्वं निर्वहन्ती मह्यं कार्यकरणाय सौकर्यं स्वातन्त्र्यञ्च कल्पितवतीति तस्यै सौभाग्यं कामये।

अज्ञानतो प्रमादवशाद्वा स्युः त्रुटयोऽत्र त्वरया मुद्रणदोषेणापि। तत् क्षाम्यन्तु विद्वज्जना इति सम्प्रार्थ्य विरमाम्यत्र।

**यद्यत्र सौष्ठवं किञ्चित्तद्गुरोरेव मे नहि।**
**यद्यत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्नहि॥**

तिरुपतिः
मार्गशीर्षशुक्लदशमी

इत्थं गुरुचरणचञ्चरीकः
**पङ्कजकुमारव्यासः**

# विषयानुक्रमणिका

॥ श्रीगणेशाय नमः ॥

# वैयाकरणसिद्धान्तकल्पतरुः

यस्याः कृपाकटाक्षाद्यातोऽहमभीप्सितं फलं सकलम् ।
दुर्गावतारभूतां प्रणौम्यहं खोडियाररूपाम्बाम् ।। १ ।।
मुनित्रयशाब्दिकसिद्धमताश्रितकल्पतरुं सुखदं वितनोमि ।
गुरोः करुणैव हि हेतुरिहास्ति यया धिषणाश्रयता च ममापि ॥ २ ॥

## अथ शक्तिसिद्धान्तनिरूपणम्

तत्र भाष्ये "अथ शब्दानुशासनम्" इत्यादिना पाणिनीयेऽत्र साधुशब्दान्वाख्यानमिति प्रतिज्ञाय "अथ गौरित्यत्र कः शब्दः?" इति प्रश्नेन कोऽसौ शब्द इति जिज्ञासिते "येनोच्चारितेन सास्नालाङ्गुलककुदखुरविषाणिनां संप्रत्ययो भवति, स शब्दः" इति समादधानः शेषावतारो भगवान् पजञ्जलिः स्फोटात्मकश्शब्द इति सिद्धान्तयामास। तत्र यद्यपि "प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते" इति समाधानेन ध्वन्यात्मकः शब्द इत्यपरोऽपि पक्ष आस्थितः। तथापि ध्वनिरनित्यः सावयवोऽर्थाभिव्यक्तावक्षमः केवलं स्फोटाभिव्यञ्जकः, स्फोटस्तु ध्वन्यभिव्यक्तोऽर्थाभिव्यक्ति-मूलकः। लोके तादृशस्यैव वृत्त्याश्रयस्यार्थबोधजनने शक्तत्वात्। स्फुटत्यर्थोऽस्मादिति स्फोटः, स्फुट्यतेऽभिव्यज्यते वर्णैरिति वा स्फोट इति व्युत्पत्तेश्च। एवञ्च वृत्तेरन्यतमरूपा बोधजनकत्वाख्या वाच्यवाचकभावापरपर्याया सिद्धान्तयिष्यमाणा वा काचिच्छक्ति-र्वर्तते यया शब्दश्रवणानन्तरं कश्चिद्बोधो जायत इति। स एव च शाब्दबोध इत्युच्यते। शाब्दाज्जातः शाब्द इति

स चासौ बोधश्चेति शाब्दबोध इति व्युत्पत्तिसिद्धः सोऽर्थः। यथा घट इति शब्द-श्रवणेन कश्चित् पदार्थः कम्बुग्रीवादिमान् बुद्धावुपस्थितो भवति। तत्र घटशब्दस्य श्रवणे घटपदवाच्यस्य कम्बुग्रीवादिमत एवोपस्थितिः, न तु पटपदवाच्यस्य तन्तु-समवेतस्य। कुत एवमिति चेल्लोके सर्वमपि कार्यजातं प्रति किमपि कारणं भवतीति सार्वजनीनोऽयमनुभवोऽन्वयव्यतिरेकनियममूलकः। स च तत्सत्त्वे तत्सत्त्वं, त-दभावे तदभावरूपः। यथा वह्नौ सत्त्वे दाहः, तदभावे तु नेतिवत् प्रकृतेपीदं सिद्धं भवति यच्छब्दश्रवणमात्रेण न कस्यचिदपि बोधो भवेत्, तत्रावश्यं केनापि कारणेन भाव्यम्। तर्हि शाब्दबोधरूपकार्यं प्रति किं कारणमिति जिज्ञासायां शास्त्रकाराः क-श्चित्कार्यकारणभावं कल्पयन्ति। तथा हि-

**शाब्दबोधे कार्यकारणभावविचारः –**

**"तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिपरूपित-वृत्तिविशिष्टज्ञानं हेतुः"**। अत्रेदं ज्ञातव्यं – यद् यद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्य-तावच्छेदकः, एवं यो धर्मो यस्यावच्छेदकः स तेन धर्मेणावच्छिन्नो भवति। यथा घटो लक्ष्यः तत्र विद्यमानो धर्मो घटत्वम्, तथा च यद्धर्मावच्छिन्नो लक्ष्यः = घटत्व-धर्मावच्छिन्नो घटस्तस्मात् स धर्मः = घटत्वाख्यो धर्मो लक्ष्यतावच्छेदकः, एवं यो धर्मः = घटत्वाख्यो धर्मो यस्यावच्छेदकः = घटस्यावच्छेदकः स घटस्तेन धर्मेण = घटत्वाख्येन धर्मेणावच्छिन्नो भवति। अनया रीत्या उक्तस्य परिष्कृतकार्यकारण-भावस्य समन्वय इत्थं भवति – घट इति उच्चरिते अयं घट इति बोधो जायते। अत्र घट इत्यस्य यो धर्मो घटत्वं, तेनावच्छिन्नो घटः तद्विषयकशाब्दबुद्धित्वावच्छिन्नो घटविषयकशाब्दबुद्धित्वावच्छिन्नो यः शाब्दबोधो घटोऽयमिति शाब्दबोधः, तं प्रति तस्य घटस्य यो धर्मो घटत्वं तेनावच्छिन्नो घटः, तेन घटेन निरूपिता या वृत्तिः = व्यापारस्तस्या विशिष्टं ज्ञानं कारणं भवति। एवञ्च घटत्वविशिष्टोऽयं घट इति बोधो घटशब्दाद्भवति। तस्माद्घटपदात् पटविषयको बोधो न।

**अत्र प्रश्नः** – शब्दश्रवणानन्तरं शब्दनिरूपितवृत्तेर्ज्ञानवत एव पुरुषस्य बोधो जायत उत वृत्तिज्ञानरहितस्य पुरुषस्यापि?

**अत्र समाधानम्** – शब्दश्रवणानन्तरं शब्दनिरूपितवृत्तेर्ज्ञानवत एव पुरुषस्य बोधो जायते, न तु वृत्तिज्ञानरहितस्य पुरुषस्य। तादृशस्य पुरुषस्य शब्दश्रवणानन्तरं वृत्तिविशिष्टज्ञानाभावेऽपि यदि शाब्दबोधः सम्भवेत्तर्हि शब्दस्यैव प्रमाजनकत्वेन सर्वैः शब्दैः समेषां श्रोतृणां बोधो जायेत। अयं हि उक्तकार्यकारणभावस्वीकाराल्लब्धोऽर्थः। तथा च शाब्दबोधं प्रति वृत्तिविशिष्टज्ञानं कारणमिति फलितम्। अत्रेदमवधेयं यद्यथा दाहं प्रति वह्नेः स्वरूपेण कारणत्वं तद्वद्वृत्तेः शाब्दबोधं प्रति स्वरूपेण कारणत्वं नास्ति। तथा सति सर्वेषामेव बोधापत्तिः स्यात्। **अस्यायमर्थः** – ज्ञानविषयीभूतायाः एव वृत्तेः कारणत्वम्। यतो घटपदनिष्ठवृत्तिमजानतः पुरुषस्य (यो घटपदवाच्यं न जानाति तादृशस्य) घटपदश्रवणेऽपि बोधो नैव जायते। एवमेव तत्तद्विषयकशाब्दबोधं प्रति तद्वन्निरूपितवृत्तिज्ञानस्य कारणत्वाङ्गीकारादेव 'गुड' इति पदस्योच्चारणे प्रकारतया मधुरत्वस्य न भानं शाब्दबोधे इति समर्थसूत्रभाष्यमपि सङ्गच्छते। केऽयं प्रकारता विशेष्यतेत्युक्तौ एवं ज्ञायतां यद् 'अयं घट' इति श्रवणेऽयं पुरोवर्ती पदार्थो घटोऽस्तीति ज्ञानं भवति। अत्र ज्ञाने पुरो विद्यमानो घटो विशेष्यं घटत्वञ्च प्रकारः। अयमेव प्रकारीभूतो धर्मो भावो जातिर्वा त्वतलप्रत्ययाभ्यामुच्यते। तद्धि घटत्वविशिष्टा या जातिस्तयाऽवच्छिन्नो घट इति पदार्थविशेष इति बोधो भवति। अत्र विशेष्यता घटनिष्ठा, प्रकारता च घटत्वनिष्ठा। एवञ्चास्मिन् बोधे घटो विशेष्यतया विषयः, घटत्वं तु प्रकारतया विषयः। समानरीत्या गुडपदोच्चारणे गुडत्वविशिष्टा या जातिस्तयाऽवच्छिन्नो गुडपदवाच्यः कश्चित्पदार्थविशेषः। तत्र गुडत्वाख्या जातिः प्रकारतया भासमानो धर्मः। यद्यपि गुडो मधुरो भवति तस्मान्मधुरत्वमपि तत्र प्रकारः। तथापि यद्धर्मप्रकारकवृत्तिज्ञानं तद्धर्मप्रकारकस्यैव बोधः। तेन प्रकृते गुडत्वप्रकारकबोध एव। मधुरत्वं तु गुडो मधुरः, इक्षुविकारत्वादित्यनुमानेन ज्ञानविषयः। न तु शब्देन।

**शाब्दबोधीयकार्यकारणभावस्वरूपे पदकृत्यम् -**

**अत्र प्रश्नः** – तद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुरिति मात्रं कार्यकारणभावस्वरूपं भवतु। कार्यदले **तद्धर्माव-**

**च्छिन्नमिति** विशेषणपदस्य निवेशः किमर्थः ?

**समाधानम्** – यदि केनचित् पुरुषेण विशेषणविशेष्यभावो विपरीततया गृहीतः अर्थात् घटे विशेषणज्ञानं घटत्वे च विशेष्यज्ञानं तस्य जातं तर्हि घटपदं घटावच्छिन्नघटत्वे शक्तमिति ज्ञानाद्धटत्व-विशिष्टविपरीतबोधवारणाय **तद्धर्मावच्छिन्नमिति** विशेषणपदं योज्यं कार्यदले। तद्धर्मावच्छिन्न'इति विशेषणपदयोजिते तु तद्धर्मावच्छिन्न-त्वस्य घटे एव सम्भवात्, घटत्वे तदभावाच्च न विपरीतबोधः। यतो धर्मो नाम प्रकारीभूतो जातिरुच्यते। तेन घट एव घटत्वाख्येन धर्मेणावच्छिन्नो भवति।

एवन्तर्हि तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुरिति कार्यकारणभाव-स्वरूपे ज्ञानं वृत्तिविशिष्टत्वेन विशेष्यते। अत्र कारणदले **वृत्तिवैशिष्ट्यं** कीदृशमिति चेत्? उच्यते – वृत्तिविशिष्टज्ञानमित्यत्र ज्ञाने **वृत्तिवैशिष्ट्यं** सम्बन्धद्वयेन बोध्यम्। तत्राद्यः (१) स्वविषयको-द्बुद्धसंस्कारसामानाधिकरण्यसम्बन्धः। (२) द्वितीयः स्वाश्रयपद-विषयकत्वसन्बन्धः। उभयत्र स्वपदेन वृत्तिः स्वीकार्या।

**तत्र प्रथमस्यार्थः** – स्वविषयकः = स्वसम्बद्धः (वृत्तिविषयकः) य उद्बुद्धः = जाग्रतः संस्कारः = पूर्वानुभवजन्यं ज्ञानं, तेन सामा-नाधिकरण्यमुद्बुद्धसंस्कारस्य पदज्ञानस्य चैकाधिकरणं वृत्तेरिति।

**अयं भावः** – यत्र श्रोतुः पदस्य श्रावणप्रत्यक्षं, वृत्तेश्च संस्कार-जन्यस्मरणात्मकं ज्ञानं जातं तत्र पदरूपे विषये विषयतासम्बन्धेन वृत्ति-विषयकोद्बुद्धसंस्कारः पदज्ञानञ्च वर्तते, उभयोरपि ज्ञानयोः पदविषयकत्वेन सामानाधिकरण्यं नाम पदरूपैकाधिकरणवृत्तित्वं वर्तते यत उभयविधज्ञानं पदविषयकमेव। अयं स्वविषयकोद्बुद्ध-संस्कारसामानाधिकरण्यसम्बन्ध एतदर्थम-ङ्गीकार्यो यद्यत्रैकस्य वृत्तिज्ञानं वर्तते, अपरस्य तु पदज्ञानं तत्र वृत्तिज्ञानपदज्ञानयोः सामानाधिकरण्याभावाच्छाब्दबोधो नैव भवति।



**द्वितीयस्य तु** – स्वाश्रयं = स्वस्याः (वृत्तेः) आश्रयं = यत्पदं तद्विषयकत्वम-

र्थात् यत्पदं वृत्तेराश्रयभूतं तदेव पदं पदज्ञानस्यापि विषयः स्यात्। अन्यथा श्रोतुः सत्यपि वृत्तिज्ञाने तदाश्रयभूतपदस्य ज्ञानाभावे शाब्दबोध एव न स्यात्। तेन शाब्दबोधे स्वविषयको-द्बुद्धसंस्कारसामानाधिकरण्यसम्बन्धः, स्वाश्रयपदविषयकत्व-सन्बन्धश्च आवश्यकौ। एतदुभयसम्बन्धेन ज्ञाने वृत्तेर्वैशिष्ट्यमावश्यकम्।

**तत्र प्रथमसम्बन्धस्य फलम्** – एवञ्च प्रथमसम्बन्धस्वीकारादेव अगृहीतवृत्तिकस्य = वृत्तिज्ञानरहितस्य शाब्दबोधो नैव भवति। वृत्तिविषयकसंस्कारस्तस्य नास्तीत्यतः। यथा कस्यचित् पुरुषस्य घटपदस्य कस्मिन्नर्थे शक्तिरिति यदि तेन न गृहीतं तर्हि घटपदस्य श्रवणानन्तरमपि तस्य बोधो न सम्भवति। एवमेव उद्बुद्ध-संस्कार इत्यस्य त्विदं फलं यद्विस्मृतवृत्तिकस्यापि (गृहीताऽपि वृत्तिर्विस्मृता येन तादृशस्य) शाब्दबोधो नैव भवति। तादृशस्य उद्बुद्धसंस्कारो नास्तीत्यतः। अत्र हि केनचिद् घटपदस्य कस्मिन्नर्थे शक्तिरिति ज्ञात्वाऽपि विस्मृता शक्तिस्तर्हि तादृशवृत्तेरुद्बुद्धसंस्काराभावादित्यर्थः (पदं श्रुत्वापि तस्य बुद्धौ न स्फुरति यदस्य पदस्यामुष्मिन्नर्थे शक्तिर्मया ज्ञाता आसीदिति)।

**द्वितीयसम्बन्धस्य फलम्** – यत् पदं श्रुतं तदेव पदमजानतः पुरुषस्यापि शाब्दबोधो नैव भवति। यतस्तत्र पदे विषयतया पदज्ञानं वर्तते, तस्माद्यदि श्रूयमाण-पदविषयकं ज्ञानमेव तस्य नास्ति चेत् को वा बोधः स्यात्तस्य। यदि कश्चित्पुरुषः हस्तचेष्टादिसंकेतेनाप्यर्थं ज्ञातुं समर्थः, परन्तु पदज्ञानं तु तस्य नास्ति तर्ह्यपि तस्य शाब्दबोधो नैव भवति। यथा केनचिद्वृद्धेन कञ्चिद्बालं प्रति पुरो विद्यमानं घटमुद्दिश्य तत्घटमानेतुं हस्तसंकेतः कृतः, तावता स बालो घटमानयति। परन्त्वयं पदार्थो घटपदवाच्य इति तद्वाचकं घट इति पदमजानतस्तस्य घटपदश्रवणेन बोधो नैव भविष्यति।

**पुनः प्रश्नः** – तत्र स्वाश्रयपदविषयकत्वसन्बन्ध इति द्वितीयसम्बन्धे 'स्वाश्रयत्व'निवेशस्य नाम तद्धर्मावच्छिन्ननिरूपितवृत्त्याश्रयत्वस्य किं फलम्?

**समाधानम्** – द्वितीयसम्बन्धे यदि स्वाश्रयत्वनिवेशो न क्रियते तर्हि घटपदं श्रुत्वा शब्दाश्रयत्वेनोपस्थितस्याऽऽकाशस्य बोधोऽपि स्यात्। यतः शब्दगुणाश्रय

आकाशः, शब्दः समवायसम्बन्धेन आकाशे भवतीत्यर्थः। अतः घटादिशब्दं श्रुत्वा तदाश्रयभूताकाशस्य बोधवारणाय स्वाश्रयत्वनिवेशः क्रियते। कृते तु स्वाश्रयत्वनिवेशे घटपदे आकाशत्वावच्छिन्नार्थनिरूपितवृत्त्याश्रयत्वं नास्तीत्यतो घटपदान्नाकाशबोधः। आकाशत्वावच्छिन्नार्थनिरूपितवृत्त्याश्रयत्वं तु आकाशपदस्यैव वर्तते।

एवमेव घटपदस्योच्चारयिता चैत्रस्तत्पदोच्चारणकर्त्ता वर्तते अतः स तत्पदस्यजनको जातः। तर्हि घटपदश्रवणेन तत्पदोच्चारणकर्तुरपि बोधो भवतु, इति चेन्न, तत्पदोच्चारणकर्तुः चैत्रस्य यो बोधस्तस्य चैत्रत्वधर्मविशिष्टचैत्रशब्देनैव सम्भवात्। घटपदस्य घटत्वावच्छिन्ने घटे शक्तत्वाच्च। न तु चैत्रत्वावच्छिन्ने चैत्रे इति।

**अत्रेदं ज्ञातव्यम्** – विस्मृतवृत्तिकस्य शाब्दबोधो नैव भवतीत्युक्तम्। तस्य स्मरणस्यैवाभावात् संस्कारोऽपि नोदेति। एतादृशसंस्कारस्यानुमानं वृत्तेर्या स्मृतिः तद्वारा, वृत्तिस्मृतेरनुमानं तु शाब्दबुद्धिद्वारा। संस्कारो यद्यपि न प्रत्यक्षविषयस्तथापि तस्य किमपि कारणं स्यादेव। कारणं विना लोके कस्यापि कार्यस्या-ऽसम्भवात्। शाब्दबोधस्तु प्रत्यक्षविषयः, तर्हि शाब्दबोधरूपकार्यस्य कारणं वृत्तिस्मृतिरित्यङ्गीकरणीयम्। यतो वृत्तिस्मृतिरस्ति ततः संस्कारोऽपि तस्याः कारणमित्यङ्गीकार्यम्। अत एव संस्कारजन्यं ज्ञानं स्मृतिरित्युच्यते। एवञ्च वृत्तिस्मृतेः संस्कारस्यानुमानं भवतीति सुस्पष्टम्।

**शक्तेः त्रैविध्यम्** - एतावता शाब्दबोधं प्रति वृत्तिः कारणमिति विस्तरेणास्माभिः यथासम्प्रदायं प्रतिपादितम्। सा च वृत्तिस्त्रिविधा भवति। तथा हि शक्तिः, लक्षणा व्यञ्जना च।

**अत्र शङ्का** - यद्विशेषज्ञानं प्रति सामान्यज्ञानस्यादावपेक्षितत्वाद् वृत्तित्वसामान्यं नाम वृत्तिर्नाम का? इत्यनुक्त्वा साक्षादेव कथं तद्भेदानामुपन्यासः क्रियत इति चेद् -

**अयमत्र समाधिः** – पदपदार्थसम्बन्धरूप एव वृत्तिसामान्य-पदार्थः प्रसिद्धोऽतो विशिष्य तत्स्वरूपमनुक्त्वैव तद्विशिष्टानां भेदानामुपन्यासः क्रियत आदौ। शक्तिल-

क्षणाव्यञ्जनासु वृत्तित्वं हि सामान्यधर्मः। शक्तित्व-लक्षणात्व-व्यञ्जनात्वरूपाश्च विशेषधर्माः। तत्र शक्तिलक्षणाव्यञ्जनारूपभेदेषु य आद्यो भेदः शक्तिनामकः, तस्य स्वरूपविषयेऽपि भिन्नभिन्नशास्त्रकाराणां मतानि पृथक्-पृथग् वर्तन्ते। तत्स्वरूपं न्यायमते किमिति प्रथमं विचार्य तत्र प्रसक्तान् दोषान् निवार्य चाग्रेऽस्माकं वैयाकरणानां मते शक्तिस्वरूपं किमिति प्रतिपादयिष्यामः।

**नैयायिकमते शक्तिस्वरूपम्-**

**अत्र तार्किकाः** – "अस्माच्छब्दादयमर्थो बोद्धव्य" इत्याकारा "इदं पदमिममर्थं बोधयतु" इत्याकारा वा 'ईश्वरेच्छा' शक्तिः लाघवात्। सैव सङ्केतः सम्बन्धः।

**अयमाशयः** – नैयायिका ईश्वरेच्छरूपां शक्तिं स्वीकुर्वन्ति। सा द्विविधा। "अस्माच्छब्दादयमर्थो बोद्धव्य" इत्याकारा पदप्रकारकाऽर्थविशेष्यिका, "इदं पदमिममर्थं बोधयतु" इत्याकारा अर्थप्रकारकपदविशेष्यिका च। अत्रेत्थं समन्वयः – अस्मात् = उच्चार्यमाणघटपदात्, अयमर्थः=जात्याकृतिविशिष्टव्यक्तिरूपः कम्बुग्रीवादिमान् पदार्थः, बोद्धव्यः = ज्ञातव्य इत्यर्थः। अत्र प्रथमलक्षणे अस्मादिति 'इदं'शब्दादुच्चार्यमाणपदस्य परामर्शः क्रियते। तस्य चाभेदेन विशेषणविशेष्यभावेन शब्देऽन्वयः। शब्दशब्दोत्तरपञ्चमीविभक्तेर्जन्यत्वमर्थः। तत्र जन्यत्वे शब्दस्य निरूपितत्वसम्बन्धेनान्वयः। जन्यत्वस्य च बोद्धव्यपदघटकबुधधात्वर्थे बोधे आश्रयतासम्बन्धेनान्वयः। बोधस्य च निरूपितत्वसम्बन्धेन तव्यप्रत्ययार्थविषयतायामन्वयः। विषयतायाश्च स्वरूपसम्बन्धेनार्थेऽन्वयः। तेन समुदितार्थ एवं फलति – इदम् (उच्चार्यमाण) अभिन्नशब्दनिरूपितजन्यतावद्बोधनिरूपितविषयतावान् (विषयताश्रयः) अर्थ इति पदप्रकारकार्थविशेष्यिका ईश्वरेच्छा शक्तिरिति।

एवमेव द्वितीयलक्षणे "इदं पदमिममर्थं बोधयतु" इत्यत्र इदं = उच्चार्यमाणं पदं = घट इति पदम्, इमं = निर्दिश्यमानम्, अर्थं = कम्बुग्रीवादिमत्पदार्थं, बोधयतु = जनयतु इति समन्वयः। अत्रापि इदं शब्देनोच्चार्यमाणपदस्य परामर्शः। तस्य चाभेदेन विशेषण विशेष्यभावेन पदेऽन्वयः। इमम् इत्यत्र अदस्-शब्देन अर्थस्य परामर्शः, अदस्-शब्दार्थस्यार्थेनाभेदान्वयः, द्वितीयार्थो विषयत्वम्।

तत्र विषयत्वेऽर्थस्य निष्ठत्वसम्बन्धेनान्वयः। विषयत्वस्य च निरूपकत्वसम्बन्धेन बुधधात्वर्थे बोधेऽन्वयः, विषयताया ज्ञाननिरूपितत्वात्। बोधस्य च निरूपितत्वसम्बन्धेन जनकत्वे रूपे आख्यातार्थेऽन्वयः। जनकत्वस्य च स्वरूपसम्बन्धेन पदेऽन्वयः तिङन्तस्थले प्रथमान्तार्थविशेष्यकबोधस्यैव नैयायिकैस्स्वीकृतत्वात्। तेन इदम्(निर्दिश्यमान)अर्थनिष्ठविषयतानिरूपकबोधनिष्ठजन्यतानिरूपितजनकतावत्(जनकताश्रयः)पदम् इति अर्थप्रकारकपदविशेष्यिकेश्वरेच्छाशक्तिरिति फलति। एवञ्च पदप्रधाना, एतत्पद-जन्यो बोध एतदर्थनिष्ठविषयतानिरूपको भवतु'इति बोधविशेष्यिका तथा चैतदर्थनिष्ठविषयता एतत्पदजन्यबोधनिरूपिता भवतु' इति विषयताविशेष्यिका नानाविधेश्वरेच्छा शक्तिरिति। अत्र शब्दप्रकार-कार्थविशेष्यिकाऽर्थप्रकारकपदविशेष्यिका च येश्वरेच्छा तस्या एव सङ्केतरूपेण ग्रहणाच्छक्तिसङ्केतयोरैक्येन लाघवञ्च वर्तते। अन्यथा पदार्थद्वयरूपकल्पनया गौरवं स्यात्। इत्थं तामेवेश्वरेच्छारूपं सङ्केतं पदपदार्थयोः सम्बन्धं शक्तिं मन्यन्ते नैयायिकाः।

**अत्र प्रश्नः** – उक्तरीत्या विषयतासम्बन्धेनेच्छावत्त्वमेव वाचकत्वं वाच्यत्वं वा वक्तव्यम्, तस्येच्छावत्त्वस्येच्छाविषये पदेऽर्थे सम्बन्धे बोधे सर्वत्र सत्वात् पदस्यार्थस्य च वाचकत्ववाच्यत्वव्यवस्थाया निर्णयः कथं भवेदिति? **अयं भावः** – उक्तेश्वरेच्छायां घटकीभूतेषु पदेऽर्थे सम्बन्धे बोधे चेश्वरेच्छा विषयतासम्बन्धेन वर्तते, यत एते सर्वेऽपि पदार्था ईश्वरेचेछायां विषयाः। एवञ्च विषयतासम्बन्धेन ईश्वरेच्छावत्त्वमेव वाच्यत्वं वाचकत्वं वा वक्तव्यम्। तथा सति कथमुच्यते पदस्यैव वाचकत्वम्, अर्थस्यैव वाच्यत्वमिति?

**अत्रोत्तरम्** – यद्यपि पूर्वोक्तरीत्या पदमर्थौ बोधश्च त्रय एव शक्तेर्विषया इति, तथापि शाब्दबोधस्य प्रत्यक्षतया जनकत्वेन पदमेव वाचकं, बोधविषयत्वेनार्थ एव वाच्य इति न कोऽपि क्लेशो वाच्यवाचकत्वव्यवस्थायाम्। ईश्वरेच्छारूपबोधनिष्ठा या जन्यता वर्तते, तन्निरूपिता या जनकता तज्जनकताश्रयः शक्तिविषयः पदमेव वाचकम्। एवमेव पदजन्यो यो बोधः तद्विषयरूपो यच्छक्तिविषयो योऽर्थः स एव

वाच्यः।

**पुनः प्रश्नः** – लोके गामानयेत्यादिव्यवहारदर्शनेन शक्तिग्रहो वाक्य एव भवति, न तु पदे। तर्हि पदस्य वाचकत्वं कथमुच्यते?

**समाधानम्** – यद्यपि लोके गामानयेत्यादिव्यवहारात् प्रथमं शक्तिग्रहः =सङ्केतज्ञानं वाक्य एव भवति। तथापि प्रक्रियानिर्वाहाय वाक्यांशत्वेन कल्पिताभ्यामावापोद्वापाभ्यां (आवापः = पदान्तर-स्वीकारः, उद्वापः = विद्यमानपदपरित्यागः) तेषु तेषु गाम्, आनय इत्यादि पदेषु शक्तिग्रहः क्रियते। यथा गामानय वाक्ये आङः प्रक्षेपेण गोरानयनरूपार्थः स्वीक्रियते, आङो निष्कासनेन गोर्नयनमित्यर्थः स्वीक्रियते। तद्वदेव वाक्येऽपि प्रथमं शक्तिग्रहस्ततः कस्यचित्पदस्य त्यागेनावशिष्ट एकस्मिन्नपि पदे शक्तिग्रहो जायते।

**नैयायिकमतखण्डनम्** -

नैयायिकोक्त ईश्वरेच्छारूपशक्तिरेव सङ्केतः स एव सम्बन्धश्चेति मतमयुक्तम्। शक्तिरूपत्वेनाभिमताया ईश्वरेच्छायाः सम्बन्धित्वेन गृहीतयोः शब्दार्थयोर्मध्ये आश्रयतायाः = आधाराधेयभावस्य इच्छाया अनियामकत्वात्। तेनायं सम्बन्ध एव न सम्भवति। यतः "सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे च सत्याश्रयतया विशिष्टबुद्धिनियामकः" इत्यभियुक्तैरुच्यते। यथा घटवद्भूतलम् इत्यादौ संयोगरूपः सम्बन्धः सम्बन्धिभ्यां घटभूतलाभ्यां भिन्नो, द्विष्ठो घटभूतलोभयनिष्ठो घटनिरूपितसंयोगाश्रयो भूतलमिति विशिष्टबुद्धिनियामकश्च। तद्वन्नात्र घटशब्द इच्छावान्, नापि तस्यार्थ इच्छावान्। इच्छा हि चेतनस्य धर्मः। घटादिष्वचेतनेषु तस्या अभाव स्पष्ट एव। तेनेश्वरेच्छा न सम्बन्धः। सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयसम्बन्ध्याश्रित एकश्च। स च इच्छायां नास्त्येव।

**कौण्डभट्टमते शक्तिस्वरूपम्**–

कौण्डभट्टो वैयाकरणमतोन्मज्जनस्थकारिकाव्याख्यानभूतवैयाकरणभूषणाख्यग्रन्थे शक्तेः स्वरूपमित्थमाह –



**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।**

**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥ इति।**

अस्या अयम्भावः – इन्द्रियाणां = चक्षुरादीनां, स्वविषयेषु = चाक्षुषेषु घटादिषु, यथाऽनादिर्योग्यता = तदीयचाक्षुषादिकारणता तथा शब्दानामपि अर्थैः सह तद्बोधकारणतैव योग्यता, सैव शक्तिरित्यर्थः। एवञ्च अनादिबोधकारणतारूपा बोधजनकत्वरूपा वा शक्तिरिति दीक्षितानुसारी पन्थाः कौण्डभट्टस्य। यथाह शब्दकौस्तुभे दीक्षितः – घटादिबोधजननसामर्थ्यमेव घटादिपदानां शक्तिरिति। शब्दार्थयोः सम्बन्धो योग्यता। वस्तुतो बोधजनकत्वं शक्तिरिति स्वसिद्धान्तो भर्तृहरेरपि सम्मत इत्याशयेन सम्बन्धसमुद्देशे स्थितां २९तमां हरिकारिकामुदाजहार प्रमाणत्वेन। न तु स्वरचितेयं कारिका दीक्षितस्य।

**नागेशभट्टमते शक्तिस्वरूपम् –**

नागेशोऽपि ईश्वरेच्छा शक्तिरिति नैयायिकोक्तं नाङ्गीकरोति। यतः सम्बन्धत्वेनाभिमता या इच्छा सा शब्दार्थरूपसम्बन्धिद्वयाद् भिन्न एवेश्वरे तिष्ठति। सम्बन्धस्तु सम्बन्धिद्वयनिष्ठो भवति, इयन्तु  शब्दार्थरूपसम्बन्धिद्वयाद्भिन्न एवेश्वरे वर्तते, अतोऽस्या इच्छायाः सम्बन्धत्वमपि न। अतः पदपदार्थयोः सम्बन्धान्तरमेव शक्तिरिति स्वीकार्यम्। सा च वाच्यवाचकभावापरपर्याया इति। अत्र वाच्यम् इत्युक्ते पदं, वाचकम् इत्युक्ते पदार्थः।

अत्रेदं ज्ञातव्यं यद्वाच्यत्वं न बोधविषयत्वरूपं, नापि वाचकत्वं बोधजनकत्वरूपमिति, अपितु अखण्डोपाधिरूपं पदार्थान्तरमेव वाच्यवाचकत्वे वर्तेते इति। ते उभे अपि वाच्यवाचकरूपशब्दार्थो-भयनिष्ठे भवतः। वाच्यत्वन्तावदर्थनिष्ठः, वाचकत्वमपि केवलं शब्दनिष्ठः, तस्मादेकनिष्ठत्वाद्बोधविषयत्वरूपं बोधजनकत्वरूपमिति वा सम्बन्धः भवितुं नार्हति। सम्बन्धो हि द्विष्ठो भवतीति पूर्वं निरूपितमेव। अनया रीत्यैकनिष्ठत्वात् सम्बन्धत्वाभावरूपपूर्वोक्त-दोषस्य तदवस्थत्वाद् बोधविषयत्वरूपं बोधजनकत्वरूपमिति वा न शक्तिरनयोः सखण्डत्वात्। अत एव वाच्यवाचकभावापरपर्यायरूपः कश्चनाखण्डोपाधिरेव सम्बन्धान्तरम्। अखण्डोपाधिर्हि शब्दार्थोभय-निष्ठः कश्चनानुगतधर्मविशेषः, यस्तावच्छब्दार्थोभयनिष्ठो भवति

न तु शब्देऽर्थे वा पृथक्-पृथक्। बोधविषयत्वरूपं बोधजनकत्वरूपं वा क्रमशः अर्थनिष्ठः शब्दनिष्ठश्च पृथक्-पृथग् भवतः न तूभयनिष्ठे अनुगततया। तस्मात् तयोः कस्यचिदेकतरस्यापि सम्बन्धकोटौ अप्रविष्टत्वात् ते त्यक्त्वा नागेशभट्टो वाच्यवाचकभावापरपर्यायं सम्बन्धान्तरमेव शक्तिरिति अङ्गीकरोति। अनेन दीक्षिताद्यभिमतं बोधजनकत्वरूपशक्तिस्वरूपमपि प्रत्युक्तमित्यायातम्।

**शक्तेर्ग्राहकं तादात्म्यम् –**

अस्या वाच्यवाचकभावरूपायाः शक्तेर्ग्राहकं = बोधकं भवति इतरेतराध्यासमूलकं तादात्म्यम्। तदेव च सम्बन्धः। अनेन तादात्म्यस्य शक्तिग्राहकत्वमेव न तु शक्तित्वमित्यपि स्पष्टम्। तत्र को नामाध्यास इति चेद् "इतरस्मिन् = अन्यस्मिन् इतरधर्मावभासः = अन्यधर्मावभासः"। यथा शुक्तौ रजतत्वावभासः, स्फटिके जपाकुसुमलौहित्यावभास इत्यादि। एतन्मूलकं तादात्म्यमेव शक्तेः बोधकं भवति। तादात्म्यं नाम "स एव आत्मा यस्य तदात्मा, तदात्मनो भावः तादात्म्यम्" अथवा "तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्" इति। यथा स्फटिकभिन्नत्वे सति स्फटिकादभेदेन प्रतीयमानत्वं लोहितादेस्तादात्म्यम्। पदपदार्थावपि (शब्दार्थौ) इतरेतराध्यासवत्त्वात् परस्परतादात्म्यपरौ। एवञ्च लोहितपदार्थस्फटिकपदार्थयोस्तादात्म्यमिव पदपदार्थयोरपि 'अयं घटः' इत्याकारकं तादात्म्यमध्यासमूलकमेव न तु वास्तविकम्। एतच्च अनुमानप्रक्रियया ज्ञातुं शक्यते। अनुमानप्रकारश्चेत्थम् – शब्दार्थौ परस्परतादात्म्यवन्तौ, इतरेतराध्यासवत्त्वात्। अत्र शब्दार्थौ पक्षः, तादात्म्यं साध्यं, इतरेतराध्यासो हेतुः। अयं हेतुरन्वयव्यतिरेकी। यस्य हेतोरन्वयव्यतिरेकव्याप्तिः सम्भवति स अन्वयव्यतिरेकी भवति। अनुमानप्रक्रियायां हेतुर्व्याप्यः, साध्यश्च व्यापको भवति। व्याप्तिप्रदर्शनवेलायां यच्छब्देन साकं व्याप्यस्य प्रयोगः, तच्छब्देन साकं व्यापकस्य प्रयोगः क्रियते। यत्र यत्र हेतुः (व्याप्यः) तत्र तत्र साध्यं(व्यापकः)इति व्याप्तिस्वरूपम्। यत्र यत्र हेतुस्तत्र तत्र साध्य-मित्यन्वयव्याप्तिः। यत्र यत्र साध्याभावस्तत्र तत्र हेत्वभाव इति व्यतिरेकव्याप्तिः। अन्वयव्याप्तौ यद्व्यापकं तदभावो व्यतिरेकव्याप्तौ व्याप्यं भवति। यथा पर्वतो

वह्निमान् धूमात् इत्यत्र पर्वतः पक्षः, वह्निः साध्यः, धूमश्च हेतुः। दृष्टान्तेऽस्मिन् यत्र यत्र धूमस्तत्र तत्र वह्निः, यथा महानसे इत्यन्वयव्याप्तिः। यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावो यथा महाह्रद इति व्यतिरेकव्याप्तिः। एवञ्च प्रकृतानुमाने अन्वयव्याप्तिस्तु – यत्र यत्र इतरेतराध्यासस्तत्र तत्र तादात्म्यम्, यथा – गुणगुणिनोः, नीलो घट इत्यादौ। व्यतिरेकव्याप्तिस्तावत् – यत्र यत्र तादात्म्याभावस्तत्र तत्रेतरेतराध्यासाभावो यथा – घटपटयोः। शब्दार्थयोरितरेतराध्यासत्वस्वीकारादेव गौरिति शब्दः, गौरित्यर्थः, गौरिति ज्ञानमित्यादिव्यवहारः सङ्गच्छते। अत्रार्थे योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्द इति पातञ्जलयोगसूत्रभाष्यसम्मतिरप्यस्ति इति वक्ष्यतेऽग्रे।

**तादात्म्यस्य द्विष्ठत्व-सम्बन्धत्वप्रतिपादनम् –**

अस्य तादाम्यस्य द्विष्ठत्वं सम्बन्धत्वञ्च सम्प्रति प्रतिपाद्यते। सम्बन्धो हि सम्बन्धिद्वयाद्भिन्नः सम्बन्धिद्वयनिष्ठो भवतीति पूर्वमुक्तमेव। तदनुसारेणेदं तादात्म्यमप्युभयनिरूपिततादात्म्यवान् उभय इत्यर्थपदयोर्व्यवहाराद्विष्ठमिति सम्बन्ध इति च सिध्यति। स च सम्बन्ध उभयनिरूपिततादात्म्यवानुभय इत्युक्ते उभयेन = पदेन पदार्थेन च, निरूपितं = निर्दिष्टं, यत्तादात्म्यं तद्वानुभयः पदं पदार्थश्चेति अर्थपदयोः = वाच्यवाचकयोर्व्यवहारात् पदपदार्थरूप-सम्बन्धिद्वयभिन्नः, पदपदार्थरूपसम्बन्धिद्वयनिष्ठस्तेन सम्बन्धत्वमपि तस्य सिद्धम्।

**अत्र प्रश्नः** – अनया रीत्या तादात्म्यस्य द्विष्ठत्वे सम्बन्धत्वे च सिद्धे सत्यपि तस्य शक्तेः सम्बन्धत्वे किं नियामकम्? इति चेत् -

**अत्रोत्तरम्** – शक्तेरपि = वाच्यवाचकभावापरपर्यायरूपवृत्तेरपि, कार्यजनकत्वे शक्तिभिन्नस्तादात्म्याख्यसम्बन्ध एव नियामकः। तेन तादात्म्यस्य शक्तेस्सम्बन्धत्वं स्पष्टमेव। यथा दीपादिगतप्रकाशकत्व-शक्तिसत्त्वेऽप्यालोकविषयसम्बन्धे सत्येव वस्तुप्रकाशकत्वं सिध्यति नान्यथा।

अयमाशयः – यथा दीपे प्रकाशकत्वशक्तिर्भवति परन्तु स वस्तूनां प्रकाशने तावता न समर्थो भवति यावता दीपवस्तुनोः शक्त्यतिरिक्तसंयोगादिसम्बन्धो न जा-

यते। तयोः संयोगसम्बन्धाभावे दीपगतशक्तेर्वस्तुप्रकाशकत्वं न सिध्यति। एवञ्च तस्या दीपगत-शक्तेर्यत्कार्यं = फलं (वस्तुप्रकाशनं दर्शनं वा) तादृशफलजनकत्वं तदैव भवति यदा दर्शनादेर्ये विषया घटपटादयः तैः सह शक्तेः संयोगादिसम्बन्धो जायते। संयोगादिसम्बन्धाभावे तु न तस्याः शक्तेः प्रकाशकत्वमित्यनुभवसिद्धोऽयं विषयः। तद्वद् घटशब्दादि-गतशक्तेरपि शाब्दबोधरूपकार्यजनने सम्बन्धसत्त्वे ए-वार्थबोधकत्वं नान्यथा। स च सम्बन्धो नात्र संयोगादिरपित्वनुमानेन शब्दार्थयोः तादात्म्यमेवेति स्वीकर्तव्यम्।

**शब्दार्थयोस्तादात्म्यसम्बन्ध इत्यत्र हरिकारिकाप्रमाणम् –**

एवञ्च शक्तेः कार्यजनकत्वे सम्बन्धस्यैव नियामकत्वमित्यर्थे हरिसम्मतिरप्य-स्ति। तदुक्तं हरिणा वाक्यपदीये –

**उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते।**
**शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः॥ इति॥**

(वाक्यपदीयम् ३-३-६)

**अस्या हेलाराजीयव्याख्या –** उपकारः = उपकार्योपकारकयोः बोधशक्त्योः उपका-रस्वभावः सम्बन्धः यत्र अस्ति, तत्र धर्मः = शक्तिरूपः कार्यं दृष्ट्वाऽनुमीयते। असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारको गुणानामपि द्रव्याश्रितत्वनियामको भवति।

**हेलाराजस्यायमाशयः** - यस्य उपकारः क्रियते स उपकार्यः शाब्द-बोधः, उपकारकश्चोपकारकसाधकश्शक्तिरिति। तयोरुपकार्यो-पकारकयोः = शाब्दबोधस्तद्बोधकशक्तिरित्यनयोरुपकारस्वभावरूप-सम्बन्धो यत्र शब्दादौ वर्तते तत्र शक्तिरूपो धर्मः कार्यं = शाब्द-बोधादिकार्यं दृष्ट्वाऽनुमीयते। यथा लोके दाह-रूपं कार्यं दृष्ट्वाऽग्नौ दाहकत्वशक्तिरनुमीयते। सा च शक्तिरग्निहस्तयोः सम्बन्ध एव दाहं जनयति, एवमेव बोधरूपं कार्यं दृष्ट्वा शब्दनिष्ठा शक्तिरनुमीयते। तत्र पदपदा-र्थयोस्तादात्म्यरूपसम्बन्धो नियामक इति भावः। असौ सम्बन्ध एव शब्दादिनिष्ठा-नां शक्तीनामपि शाब्दबोधादिकार्यजनने शक्तिः=उपकारकः, एवमेव रूपरसादीनां

गुणानामपि द्रव्याश्रितत्व-नियामक इत्युक्ते गुणा द्रव्याश्रिता भवन्ति गुणगुणिनोश्च समवायो भवतीत्यस्य नियामकः ।

**पदपदार्थयोरिव वाक्यवाक्यार्थयोरपि तादात्म्यसम्बन्ध इति निरूपणम्** – अयं हि पूर्वनिरूपितः तादात्म्यसम्बन्धः न केवलं पदपदार्थयोरेव भवति अपितु वाक्यवाक्यार्थयोरपि । अत्र च न्यायभाष्यकारस्य वचनमपि प्रमाणम् । तथा हि – **"समयज्ञानार्थश्चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम् । वाक्यलक्षणाया वाचोऽर्थलक्षणम्" ।**

**अस्यायमर्थः** – समयज्ञानार्थं = वाच्यवाचकभावद्योतकतादात्म्यरूपसङ्केतज्ञानार्थं, पदलक्षणायाः = पदं लक्षणं स्वरूपं यस्याः तस्याः पदस्वरूपायाः, वाचः = वाण्याः, अन्वाख्यानं = प्रकृतिप्रत्ययतत्तदर्थपुरस्सरं बोधकं, व्याकरणं नाम शब्दशास्त्रमिति । वाक्यलक्षणायाः = वाक्यस्वरूपाया वाचः अन्वाख्यानं = बोधकं, अर्थलक्षणं = वाक्यार्थबोधकं तर्कमीमांसादिशास्त्रमिति । अनेन वाक्यलक्षणाया वाच इति कथनेन शाब्दबोधोपकारिका शक्तिः वाक्यावयवभूतवर्णसमुदायेषु पदेष्विवार्थपरिसमापकवाक्येष्वपि ईश्वरसमयः = ईश्वरसङ्केतोऽस्तीति स्फुटं प्रतिपादितं भवति । तस्मात् पदपदार्थयोर्वाक्यवाक्यार्थयोश्चेतरेतराध्यासः सङ्केतः तन्मूलकं तादात्म्यञ्च सम्बन्ध इति समुदितार्थः । अयमेवार्थः पतञ्जलिप्रणीत-योगसूत्रभाष्यादपि लभ्यते । तथा हि - **"सङ्केतस्तु पदपदार्थयोरितरे-तराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः" इति ।** (पातञ्जलयोगभाष्यम् - ३-१७) ।

इतरेतराध्यासरूपः स्मृत्यात्मकः = स्मृतिविषय आत्मा स्वरूपं यस्य सः = स्मर्यमाण इत्यर्थः । एवञ्च स्मृतिविषयो ज्ञात सङ्केत एव शक्तेर्बोधको भवति ।

**अत्र शङ्का** – इतरेतराध्यासरूप इत्यत्र 'रूप'पदोपादानेन सङ्केतस्याध्यासत्वमेव लभ्यते, न तु अध्यासमूलकत्वम् । तथापि कथमध्यासमूलकत्वं वर्ण्यत इति चेत् –



**अत्र समाधानम्** – रूप्यते बोध्यते इति करणघञन्तरूपशब्देन अध्यासो

रूपं बोधको यस्येति बहुव्रीहिणाऽध्यासबोध्यत्वस्य लाभः। अथवा रूप्यते बोध्यतेऽसौ इति कर्मघञन्तरूपशब्दस्य अध्यासशब्देन तृतीयातत्पुरुषसमासः। अध्यासेन रूपः (बोध) इति यावत्।

**शक्तिविषयकनैयायिकमतदूषणम्** –

इतः प्राग्विवेचितः "अस्माच्छब्दादयमर्थो बोद्धव्य" इत्याकारः पदप्रकारकार्थविशेष्यकः, "इदं पदमिममर्थं बोधयतु" इत्याकारः अर्थप्रकारकपदविशेष्यको वेश्वरसङ्केतः(इश्वरेच्छा) इति नैयायिकमतं न युक्तम्। संकेतस्य शक्तिग्राहकत्वेन मुख्यशक्तित्वाभावात्। यतः "अयमेतच्छक्यः" = अयमर्थ एतत्पदस्य शक्यः, "अत्रास्य शक्तिः" = अस्मिन्नर्थेऽस्य पदस्य शक्तिरित्याकारकस्संकेतः शक्त्य-पेक्षया भिन्नरूपेण प्रसिद्धः। सङ्केतो यदि शक्तिरूपः स्यात्तदाऽत्र घटकतया शक्तिनिवेशो न स्यात्, स्वस्य स्वघटकत्वाभावात्। सङ्केतस्य शक्त्यपेक्षया भिन्नत्वे न्यायवाचस्पत्योक्तिरपि प्रमाणम्। तथा हि – "सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः संकेतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्संकेतः" इति। (न्यायवाचस्पत्यम् – सामयिकः शब्दादर्थप्रत्ययः वै.सू. ७-२-२० इति सूत्रे)। **अस्यायमर्थः** – सर्गादिभुवां = सृष्टेः प्रारम्भकाले गृहीतजन्मनां महर्षिदेवतानाम् ईश्वरेण "अस्यायं वाचकः" "अस्मादयं बोद्धव्यः" इति साक्षादेव कृतः संकेतः तद्व्यवहाराच्चास्मदादीनामपि सुग्रहः = सुबोधः सुलभो वा संकेतः।

योगवाचस्पत्येऽपि समानतया वचनमुपलभ्यते – **"सर्वे च शब्दाः सर्वार्थाभिधानसमर्था इति सर्वैरर्थैः सर्वेषां शब्दानां सम्बन्धः, ईश्वरसङ्केतस्तु प्रकाशकः"** इति।

एवमेव संकेतस्य शक्त्यपेक्षया भिन्नत्वे पातञ्जलभाष्यमपि प्रमाणम्। तथा हि – **"स्थितोऽस्य वाचकस्य वाच्येन सह सम्बन्धः, सङ्केतस्तूक्तरूप ईश्वरस्य स्थितमेवार्थमभिनयति यथावस्थितः पितापुत्रयोः सम्बन्धः सङ्केतेनावद्योत्यते 'अयमस्य पिता' 'अयमस्य पुत्रः'** इत्यादिः।"



एतद्विषये हरिकारिकापि प्रमाणम्। यथोक्तं वाक्यपदीये ब्रह्मकाण्डे २३तमका-

रिकायां शब्दार्थसम्बन्धमाश्रित्य –

**नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः ।**
**सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ॥ इति ॥**

एवञ्चोक्तप्रमाणैः सिद्धमिदं यत् सङ्केतस्तु शक्तितो भिन्न एव शक्तिग्राहकः स इति दिक् ।

**तादात्म्यस्य निरूपकत्वेन आश्रयत्वेन च संज्ञाविशेषनिरूपणम् –**

एतावता पदपदार्थयोः तादात्म्यसम्बन्धः निरूपितः सम्प्रति तस्य निरूपकत्वेन आश्रयत्वेनेति सम्बन्धविशेषेण संज्ञाविशेषः उच्यते । तथा हि – तादात्म्यस्य निरूपकत्वेन विवक्षितोऽर्थः शक्यः, आश्रयत्वेन विवक्षितः शब्दः शक्त इति ।

**शब्दार्थयोस्तादात्म्ये लौकिकशास्त्रीयप्रमाणप्रदर्शनम् –**

अनयोः पदपदार्थयोः तादात्म्ये लौकिकव्यवहारोऽपि प्रमाणं वर्तते – अत एव लोके "श्लोकमश्रृणोत्" अथ "अर्थं श्रृणोति" "अर्थं वदति" इत्येतादृशोऽध्यासात्मकव्यवहारो दृश्यते । श्लोकं = शब्दरूपं श्लोकं श्रुतवान् ततोऽर्थं श्रृणोति अर्थं वदति इत्यादि व्यवहारस्तदैव सङ्गच्छते यदा शब्दार्थयोस्तादात्म्यम् । अन्यथा तयोः तादात्म्याभावे शब्दस्यैव श्रावणप्रत्यक्षविषयत्वादर्थस्य श्रवणं कथमपि न युज्यते । एवमेवोच्चारणविषयोऽपि शब्द एव तथापि अर्थे शब्दत्वमारोप्यार्थं वदतीति व्यवहारः ।

एतयोस्तादात्म्यविषयेऽधुना शास्त्रीयं प्रमाणमुच्यते – "ओमित्येकाक्षरं ब्रह्म" "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः" "वृद्धिरादैच्" इति शक्तिग्राहकश्रुतिस्मृतिविषये सामानाधिकरण्येन प्रयोगश्च शब्दार्थयोस्तादात्म्यं सूचयति ।

**अयं भावः** – "ओमित्येकाक्षरं ब्रह्म" इत्यत्र 'ओम्' इति वर्णपर्यायः, स च 'ब्रह्म' इत्यस्य वाचकः । न तु तद्वर्ण एव ब्रह्म तथापि वर्णमात्रे ब्रह्मत्वारोपात्सिद्धमिदं शब्दार्थयोस्तादात्म्यमिति । एवमेव "रामेति द्व्यक्षरं नाम" इत्यादावपि 'राम' इति शब्दे तद्वाच्यस्य दाशरथेः रामस्यारोपादेव पिनाकिनो मानभङ्गस्य सम्भवः । व्याकरणशास्त्रेऽपि पाणिनिना "वृद्धिरादैच्" (१-१-१) इति सूत्रे आ-ऐ-औ-वर्णानां

वृद्धिसंज्ञा विहिता। तच्च वृद्धेः आ-ऐ-औ-वर्णानां परस्परं तादात्म्येनैव सिद्ध्यति नान्यथा। अनेन लौकिकेन शास्त्रीयप्रमाणेन च सिद्धं शब्दार्थयोस्तादात्म्यमिति।

**तादात्म्यस्वरूपम् –**

एतावता शब्दार्थयोस्तादात्म्यं निरूपितमस्माभिः। अधुनैतस्य स्वरूपं किमिति निरूप्यते। तथा हि - **तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति भेदाभेदसमनियतम्।**

अस्य शब्दार्थस्थले समन्वयं कुर्मः – शब्दपक्षे तस्मादर्थाद् भिन्नत्वे सति तदभेदेन = अर्थापेक्षयाऽभेदेन प्रतीयमानत्वं शब्दस्य, एवमेवार्थपक्षे तस्माच्छब्दाद्भिन्नत्वे सति शब्दापेक्षयाऽभेदेन प्रतीय-मानत्वमर्थस्य। तच्च भेदाभेदसमनियतम्। भेदेऽभेदे च समान-रूपेणनियतभावस्तस्य तादात्म्यस्येति भावः। अत्र भेदाभेदयोरत्यन्तं विरोधात् कथं भेदाभेदसमनियतत्वं तादात्म्यस्येति तु न शङ्कनीयम्, अभेदस्याध्यस्तत्वात् = आरोपितत्वान्नोभयोर्विरोध इति तात्पर्यम्।

**अत्र तार्किकाः** – शब्दार्थयोस्तादात्म्यस्वीकारे तदाश्रितानि कार्याण्यपि प्रसक्तानि भवेयुः, यथा कश्चिन्मधुशब्दमुच्चारयति चेत्तस्य मुखे माधुर्यरसास्वादप्रसङ्गः, एवमेव वह्निशब्दोच्चारणे तु मुखे दाहापत्तिप्रसङ्गश्च स्यादिति दोषमुद्भावयन्ति।

**एतद्दोषपरिहारविषये वैयाकरणाः** – तादात्म्ये भेदाभेदयोः पूर्वमेवास्माभिरुपपादितत्वाद् नाम वस्तुतो भेद एव तत्र, अभेदस्तु आरोप्यते इति प्राङ्निरूपपितत्वादस्माकं मते नैते दोषा इति वदन्ति। किञ्चेदमत्र ज्ञातव्यम् - दाहं प्रति वह्नेः, माधुर्यं प्रति मधुरपदार्थस्य च संयोगेन कारणत्वादत्र तु मुखादावर्थस्य तेन सम्बन्धेनाभावान्न कश्चिद्दोषः। यथा वा गङ्गायां घोष इत्यादौ तटे गङ्गात्वारोपेऽपि तेन स्नानादिकार्यं न सम्भवति तद्वत् प्रकृतेऽप्यभेदस्यारोपितत्वेऽपि तदाश्रितं कार्यं न सम्भवति तेन न कुत्रापि विरोधः।

**बौद्धपदार्थनिरूपणपुरस्सरं वैयाकरणमतदृढीकरणम् –**

सम्प्रति नैयायिकोक्तशङ्कां निवार्य वैयाकरणमतं दृढीकर्तुं परमसिद्धान्तत्वेन बौद्धपदार्थनिरूपणं क्रियते यथामञ्जूषम् – वस्तुतस्तु बौद्ध एव शक्यः पदमपि स्फोटा-

त्मकं प्रसिद्धम्। अस्यायं भावः – वैयाकरणानां मते द्विविधौ शब्दार्थौ बौद्धौ बाह्यौ च। तत्र बौद्धार्थेन सह बौद्धशब्दस्य तादात्म्यम्। न तु बौद्धबाह्ययोः। बौद्ध इत्यस्य बुद्धिरूपाधिकरणदेशस्थ इत्यर्थः, न तु बुद्धिविषयः। यतः बाह्योऽपि पदार्थो बुद्धिविषय एव भवति। अत एव बौद्धार्थस्य स्फोटात्मकशब्दस्यैव तादात्म्यमङ्गीक्रियते। तेन बौद्धे वह्न्यादावर्थे दाहादिशक्तिमत्त्वाभावाद्दाहरूपकार्यादर्शनाद्दाहजनिकायाः शक्तेरप्य-भावः कल्प्यते। पदार्थस्य बौद्धत्वस्वीकारे प्रमाणमप्यस्ति - **शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः (योगसूत्रम् १-९) इति सूत्रम्।** एतद्विकल्पसूत्रमपि बौद्धपदार्थस्वीकार एव सङ्गच्छते। अस्य सूत्रस्य **योगवाचस्पत्यानुसारेणायमर्थः – "शब्दज्ञानमात्रेणानुपाती बुद्धावनुपतनशीलो वस्तुशून्यो बाह्यार्थरहितो विशेषेण कल्प्यत इति विकल्पः, बुद्धिपरिकल्पितः इति।"** अर्थात् शब्दजन्यज्ञानानन्तरं वस्तुतत्त्वमनपेक्ष्य बुद्धावनुपतनशीलोऽध्यवसायो विकल्पः वस्तुशून्य इति। बौद्धार्थत्वाङ्गीकारे प्रमाणान्तरं प्रदर्श्यतेऽधुना –

**एष बन्ध्यासुतो याति खपुष्पकृतशेखरः।**
**कूर्मक्षीरचयेस्नातः शशश्रृङ्गधनुर्धरः॥ इति।**

श्लोकस्यार्थस्तु सुलभ एव – आकाशपुष्पं शिरसि धृत्वा, कूर्मक्षीरकुण्डे स्नात्वा, शशश्रृङ्गेन निर्मितधनुः स्वीकृत्य कश्चिद्बन्ध्या-सुतो यातीति। प्रकृतश्लोके बन्ध्यासुतः, खपुष्पं, कूर्मक्षीरं, शशश्रृङ्ग इत्यादि ये पदार्था वर्णिता तेषामस्माकं शाब्दिकानां मते बाह्यत्वेन शून्यत्वे = अप्रसिद्धत्वेऽपि बुद्धिपरकल्पितवाच्यार्थत्वमादाय अर्थवत्त्वादेव प्रातिपदकत्वात् सुबादिविभक्त्युत्पत्तिः।

यदि बौद्धपदार्थो नाङ्गीक्रियते नैयायिकोक्तरीत्या तर्हि बन्ध्यायाः सुतोत्पत्तेः सुतरामसम्भवाद्यानक्रियायामसम्भवः। आकाशे पुष्पाणा-मभावात्, कूर्मपत्नीनां = कच्छपीनां क्षीरस्यासम्भवेन तत्समुदाये स्नानासम्भवात्, शशस्य श्रृङ्गाणामेवाभावात्तन्निर्मितधनुषोऽप्यसम्भ-वाच्चैतादृशानां कस्याप्यर्थस्यासम्भवेन प्रातिपदिकत्वं न स्यादेव, तदभावे च विभक्त्युत्पत्तिरपि नेत्यपि बोध्यम्।



अत्र **केचिन्नैयायिकाः** शशश्रृङ्गस्याप्रसिद्धत्वादप्रसिद्धप्रतियोगि-

काभावस्यास्वीकाराच्छशशृङ्गमित्यादौ प्रातिपदकत्वं न सिध्येदित्या-शङ्क्य महीष्यादीनां शृङ्गं प्रसिद्धं, शशोऽपि प्रसिद्धः। तेन शृङ्गे शशीयत्वस्य (शश-सम्बन्धित्वस्य) भ्रमाद्बाह्यार्थस्याभावेऽपि भ्रम-विषयमर्थमाश्रित्य प्रातिपदकत्वं साधयन्ति। (नैयायिकैः यस्य अभावस्य प्रतियोग्यप्रसिद्धस्तादृशोऽभावो नाङ्गीक्रियते। यथा घटाभावे घटः प्रतियोगी स च प्रसिद्धः, अतो घटाभावः स्वीक्रियते। परन्तु यदा शशशृङ्ग एवाप्रसिद्धस्तर्हि तस्याभावोऽप्यप्रसिद्ध एव इत्यभिप्रायोऽप्रसिद्धप्रतियोगिकाभावस्य।)

**अत्र वैयाकरणः** – भवदुक्तरीत्याऽत्र शृङ्गे शशीयत्वभ्रम इत्यादिना न निर्वाहः। शशशब्दवाच्यस्य जन्तुविशेषस्य दर्शनरूप-बाधसत्त्वेन तदभावस्य वक्तुमशक्यतया एकदेशस्य (अभावस्य) आनर्थक्येन तद्विशिष्टस्य (शशविशिष्टस्य) शृङ्गस्याप्यर्थवत्त्वाभावात् प्रातिपदिकत्वं न सिद्ध्यति। यथा शुक्तिं रजतत्वेन जानतोऽपि पुरुषस्य शुक्त्या रजतसम्बन्धिकार्यं कर्तुमशक्यतया भ्रमस्य वास्तविककार्यनिर्वाहकत्वासम्भवेनार्थवत्त्वाभावात्प्रातिपदकत्वाप्राप्तौ शशशृङ्गमित्यत्र स्वाद्यनुत्पत्तिरित्यर्थः। शृङ्गे शशीयत्वभ्रमस्थले वास्तविकार्थवत्त्वाभावात्तत्प्रयुक्तं कार्यं प्रातिपदकत्वं न स्यादिति इतोऽपि स्पष्टतया विवेचितम्।

**अर्थपदयोस्तादात्म्ये व्यवहारोपपत्तिः** –

अधुना **अर्थपदयोस्तादात्म्ये व्यवहारोपपत्तिः** प्रदर्श्यते। तथा हि – अर्थपदयोस्तादात्म्य एव तत्तदर्थतादात्म्यापन्नः = तेन तेन अर्थेन तादात्म्याध्यस्तः स स शब्दो भिन्न इति हेतोरर्थभेदाच्छब्दभेद इति व्यवहारो युज्यते। समानाकारमात्रेण = समानानुपूर्व्या तु एकोऽयं शब्दो बह्वर्थ इति व्यवहारः।

**अस्यायं भावः** – शब्दानां हि स्वस्वविशिष्टार्थेनाभेदरूपेणा-ऽन्वयाच्छब्दो हि शब्दान्तराद्भिद्यते। तेन ह्यर्थवैभिन्न्येन शब्दवैभिन्न्यमुपजायते। एतामर्थकृतभिन्नतामाश्रित्य शब्दानां भिन्नताप्रतीतेः शब्दनानात्ववादः प्रतिष्ठापितः। यथा हि – ग्रामशब्दोऽयं बह्वर्थः। ग्रामः शालासमुदायो ग्रामो दग्ध इत्यादौ, ग्रामो वात्परिक्षेपः ग्रामं प्रविष्ट इत्यादौ, ग्रामो मनुष्या ग्रामो गत इत्यादौ, ग्रामः स्थलं ग्रामो लब्ध

इत्यादौ। इत्थं ह्यर्थभिन्नतामाश्रित्यैकस्मिन्नेव शब्देऽपि भिन्नता कल्प्यते।

अन्ये सत्यामप्यर्थवैभिन्नतायां शब्दस्य रूपाकृतिं वाऽऽश्रित्य शब्दैकत्ववादं प्रतिष्ठापयन्ति। अभेदपक्षेऽस्मिन्नैकश्च शब्दो बह्वर्थ इति कल्प्यते, यथा अक्ष इति बिभीतके, इन्द्रिये, रथभागे, द्यूते, पाशे चार्थे वर्तते। एवमेव हरिशब्दस्तु रवौ, भेके, विष्णौ इत्यादिषु चतुर्दशार्थेषु कोशादिषु प्रसिद्धः। इत्थं शाब्दिकनये शक्तिस्वरूपस्य निरूपणं शब्दार्थयोस्तादात्म्यादिनिरूपणपुरस्सरं विवृतम्। अथ अपभ्रंशेषु शक्तिरस्ति न वा, तेषां साधुत्वासाधुत्वनिर्णयाय उत्तरग्रन्थः प्रवर्तते।

**अपभ्रंशेषु शक्तिसाधननिरूपणम्** –

अथेदानीमालोच्यते यदियं शक्तिः साधुष्विवापभ्रंशेष्वपि भवतीति। लोके शब्दस्य प्रयोगोऽर्थगत्यर्थ इति। अर्थञ्च यथा शब्दोऽवगमयति तथाऽपशब्दोऽपि। एवञ्च लोकव्यवहारस्य साधन-भूतोऽयं शब्दः साधुत्वासाधुत्वेनोभयथाप्यर्थं बोधयति। तथापि साधुशब्देनैवार्थोऽभिधेयो नासाधुना यथा भगवान्भाष्यकारोऽप्याह पस्पशायां भाष्ये "समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते – "शब्देनैवार्थोऽभिधेयो नापशब्देनेति।" कश्शब्दः कश्चापशब्द इति निर्णयस्तु शिष्टप्रयोगानुसारी। अपशब्दो हि लोके शिष्टाप्रयुक्तः प्रयोगभ्रष्टोऽपभ्रंशरूपेणान्यस्मिन्प्रयुज्यमानः। किन्तर्हि एवं प्रयुज्यमानैरपशब्दैरपि शक्तिबोधो जायते? इति चेत्, सत्यम्। तच्छङ्कितं भाष्ये – "किं शब्दोपदेशः कर्त्तव्यः, आहोस्विदपशब्दोपदेशः, आहोस्विदुभयोपदेशः? इति। एवं प्रश्ने - भगवान्भाष्यकारोऽन्यतरोपदेशेन कृतं स्यात्। तद्यथा "भक्ष्यनिय-मेनाभक्ष्यप्रतिषेधो गम्यते। पञ्च पञ्च नखा भक्ष्याः" इत्युक्ते गम्यत एतदतोऽन्येऽभक्ष्या इति। अभक्ष्यप्रतिषेधेन च भक्ष्यनियमः। तद्यथा – अभक्ष्यो ग्राम्यकुक्कुटः अभक्ष्यो ग्राम्यशूकरः, इत्युक्ते गम्यत एतदरण्यो भक्ष्य इति। एवमिहापि।

यदि तावच्छब्दोपदेशः क्रियते, गौरित्येतस्मिन्नुपदिष्टे गम्यत एतद् – गाव्यादयोऽपशब्दा इति। अथाप्यपशब्दोपदेशः क्रियते, गाव्यादिषूपदिष्टेषु गम्यत एतद् – गौरित्येष शब्द इति। इत्थं समादधौ। अनेन शङ्कासमाधानपरभाष्येण गम्यत एत-

दपशब्देष्वपि शक्तिः = वाच्यवाचकभावपर्याया शक्तिर्वर्तत एव। अन्यथा 'गाव्यादिषूपदिष्टेषु गम्यत एतद्गौरित्येष शब्द' इति कथनं भाष्यकारस्यासङ्गतं स्यात्। एतद्भाष्यकारसिद्धान्तं मनसिकृत्य अन्येषामपभ्रंशेषु शक्तिमनङ्गीकुर्वतां केषाञ्चन मतं निराकृत्य वैयाकरणमतमुपस्थाप्यते –

**अपभ्रंशेषु शक्तिसाधकं परमलघुमञ्जूषाकारमतम् –**

सा च शक्तिः साधुष्विवाभ्रंशेष्वपि शक्तिग्राहकशिरोमणे-र्व्यवहारस्य तुल्यत्वात्। व्यवहारशब्देन पूर्वजन्मानुभूतशक्तिस्मृतिः। अत एव बालानां तिरश्चां चान्वयबोधः। न हि तेषां तदैव तत्सम्भव इति।

अस्यायमाशयः – पूर्वोक्तरीत्या भाष्यप्रामाण्यात् सा वाच्यवाचकभावापरपर्यायाशक्तिर्यथा साधुशब्देषु असाधुशब्देष्वपि तथैव। असाधुशब्देष्वपि शक्तिग्राहकशिरोमणेः = शक्तेः बोधकेषु प्रधानभूतस्य व्यवहारस्य समानतया विद्यमानतया सा शक्तिः तत्राङ्गीकार्या एव।

**अत्र प्रश्नः** – यदि व्यवहारदर्शनमेव शक्तिग्राहकं स्यात्तदा जन्मसमय उत्पत्तिकाले व्यवहारबोधकशशब्दज्ञानाभावाच्छक्तिग्रहो न स्यात्तर्हि कथमुच्यते शक्तिग्राहकशिरोमणेर्व्यवहारस्यापभ्रंशेष्वपि तुल्यत्वमित्यादि?

**अत्रोत्तरम्** – यदि व्यवहारे शक्तिग्रहाभावस्तदेष्टसाधनत्व-ज्ञानाभावेन बालानां स्तनपानादौ प्रवृत्तिरेव न स्यात्। अत एतादृशव्यवहारदर्शनेन प्रवृत्तिञ्च विलोक्य पूर्वजन्मन्यनुभूतायाः शक्तेः स्मरणं कल्प्यते। एवञ्च एतादृशप्रवृत्तिरूपकार्यं प्रति केनापि कारणेन भाव्यं, कारणाभावे कार्याभाव इति सिद्धान्तात्, तच्च कारणं पूर्वजन्मानुभूतशक्तिस्मरणमेव नान्यदिति भावः। पूर्वजन्मनि अनुभवविषयीकृता या शक्तिः सैव संस्काररूपेण स्थिता तस्याः स्मरणं वर्तमानजन्मन्यपि, एवञ्च जन्मान्तरीयं व्यवहारदर्शनं हि स्वसंस्कारद्वारा शक्तिस्मारकं भवतीति पूर्वोक्तस्य पूर्वजन्मानुभूतेत्यादेरर्थः। तस्मादेव च बालानां तिरश्चां = जडानां पशुपक्ष्यादीनामन्वयबोधो नाम पदार्थज्ञानं भवति। पश्वादीनां स्वजात्यनुसारेणैव प्रति-नियता भवति काऽपि प्रतिभा यया तेषामपि अनादिवासनयैव तद्ग्रह इति तिरश्चामित्यस्याशयः।

परन्तु न तेषां बालादीनां जन्मन आद्ये काल एव शक्तिज्ञानस्य सम्भवः, तस्मिन् समये शक्तिग्राहकसामग्र्यभावात्। एतावता स्वमतं निरूप्यापभ्रंशेषु शक्तिविषयकं नैयायिकमतमनूद्य निराकर्तुमुपक्रम्यते –

**नैयायिकमतानुवादः –**

अत्र नैयायिका असाधुशब्देन साधुशब्दस्मरणद्वारा अर्थबोध इति वदन्ति। यदा व्युत्पन्ना असाधुशब्दान् शृण्वन्ति तदा ते साधुशब्दान् संस्मृत्य बोधं कुर्वन्ति। एवञ्च तेषां बोधः साधुशब्दस्मरणद्वारा। यदा चाव्युत्पन्ना अज्ञा असाधून् शब्दान् शृण्वन्ति तदा ते शक्तिभ्रमाद्बोधं कुर्वन्तीत्यर्थः।

**प्राचीननैयायिकास्तु** व्याकरणसंस्कृते साधुशब्द एव शक्तिः, नापभ्रंशे। न च तथा सति अपभ्रंशाद्बोधो न स्यादिति शङ्कनीयम्। व्युत्पन्नस्य साधुशब्दस्मरणाद्बोधोत्पत्तेः। उक्तञ्च वाक्यपदीये न्यायमतानुवादप्रतिपादिकासु कारिकासु –

**ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः।**
**तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः॥**
**न शिष्टैरनुगम्यन्ते पर्याया इव साधवः।**
**ते यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः॥**
**अम्बाम्बेति यदा बालः शिक्षमाणः प्रभाषते।**
**अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः॥**
**एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते।**
**तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते॥ इति।**

**कारिकाणामयं भावः** – ते असाधुशब्दा अनुमानेन = साधुशब्दस्मरणेन, प्रत्ययस्य = ज्ञानस्य उत्पत्तौ कारणानि भवन्ति। तथा च साधुशब्दस्मरणपूर्वकं साधुशब्दतादात्म्यमापन्ना इव अर्थं बोधयन्ति। साधुशब्दसादृश्यात् शक्तित्वमारोप्यतेऽथवा तत्सादृश्यात् तत्र भ्रमो भवति। अथवा शब्दा अर्थस्य तादात्म्यं वाच्यवाचकभावरूपं सम्बन्धं प्राप्ता इव अर्थबोधका भवन्ति। इव शब्दाद्वास्तविकी प्राप्तिर्नास्तीति ज्ञायते। यतश्च व्याकरणादिना शास्त्रेण शिष्टैश्च तेऽपभ्रंशाः पर्यायसाधुशब्दा इव

नाङ्गीक्रियन्ते, अतो न ते वाचकाः। लोकेऽपि अम्बाम्बेति अव्यक्तभाषिणा बालेन प्रयुक्तः शब्दः तत्साधुशब्दं जानतामेवार्थबोधको दृश्यते। अत एव तदज्ञैः किमयं भाषत इति प्रश्नः क्रियते।

तस्मादपभ्रंशाः साधुशब्दस्मरणद्वारा अर्थबोधकाः, न साक्षादिति युक्तम्। अव्युत्पन्नस्य बोधस्तु शक्तिभ्रमात्। तथा हि – प्रथमतस्तु व्युत्पन्नोऽपभ्रंशात् साधुशब्दं बुद्ध्वा व्यवहृतवान्। तद्व्यवहारं पश्यतः पामरस्यापभ्रंशे शक्तिभ्रमो जातः। तथा जातपूर्वभ्रमादुत्तरभ्रम इति क्रमेण शक्तिभ्रमादेव पामराणां बोधः।

**नव्यनैयायिकास्तु** यद्यप्यपभ्रंशस्य साक्षाद्वाचकत्वं नेच्छन्ति। अथापि शक्तत्वमेव साधुत्वमिति नाङ्गीकुर्वन्ति। ते त्वित्थमभिप्रयन्ति – वृत्तिमत्त्वं न साधुत्वम्। सङ्केताद्यज्ञानेऽपि साधुत्वव्यवहारात्। समासादौ शक्त्यभावेन साधुत्वनापत्तेः। तदर्थं तत्र सङ्केतस्वीकारे सङ्केतस्यैव शक्तित्वेन शक्त्यापत्तेश्च। प्रकृतिप्रत्ययसमुदायस्यासङ्केतितत्वेनासाधुतापत्तेः। प्रत्येकं शक्तिमा-दाय साधुत्वेन च बाधते इतिवत् बाधतीत्यस्यापि साधुत्वं स्यात्। तस्मान्न सङ्केतितत्वं साधुत्वम्। किन्तु व्याकरणनिष्पाद्यत्वम्। यस्मिन्नर्थे यः शब्दो व्याकरणेन निष्पादितः, स तस्मिन्नर्थे साधुः। डित्थादिपदानामप्युणादिप्रकरणव्युत्पादितत्वमस्तीति न दोषः। न च साधुत्वज्ञानं शाब्दबोधे वा कारणम्। यस्य तादृशज्ञानं नास्ति तस्यापि शाब्दबोधोदयात्। किन्त्वसाधुत्वनिश्चयः प्रतिबन्धकः। अत एव साधुशब्देऽपि असाधुत्वनिश्चये सति बोधः प्रतिबध्यते। एवञ्च गाव्यादेरसाधुत्वनिश्चयान्न वाचकत्वं, किन्तु शक्तिभ्रमाद्वा साधुशब्दस्मरणाद्वा बोध इति।

**नैयायिकोक्तस्य खण्डनम् –**

यन्नैयायिकैरुक्तम् – साधुशब्दस्मरणेनासाधुशब्दादर्थबोध इति तदयुक्तम्। साधुशब्दस्य स्मरणं विनापि लोकेऽर्थबोधोऽनुभूयते अतः स्मरणे मानाभावात्तेषां मतं न स्वीक्रियते। किञ्च तस्य अपशब्दोपस्थापितार्थस्य वाचको यः साधुशब्दः तस्य ज्ञानरहितानां जनानां शाब्दबोध एव न स्यात्, दृश्यते च बोधस्तेषामपि। अतो न साधुशब्दस्मरणस्यावश्यकता।

इत्थं **वैयाकरणा** नैयायिकानां पूर्वोक्तं सर्वमपि निराकृत्य अपभ्रंशेष्वपि शक्तिरस्त्येवेति वदन्ति। शक्तिग्राहकेषु मुख्यस्य व्यवहारस्य साध्वसाधुसाधारण्यात्। न च साधुस्मरणाद्बोधः। तद्वाचकसाधुशब्दमजानतां बोधानापत्तेः। साधुशब्दमजानतामपि बोधानुभवात्। किञ्च कुत्रचित् साधुशब्दस्य ज्ञातस्यापि बोधकत्वं न दृश्यते। उक्तञ्च हरिणा –

**पारम्पर्यादपभ्रंशाः विगुणेष्वभिधातृषु।**
**प्रसिद्धिमागता येषु तेषां साधुरवाचकः॥ इति।**

एवञ्च यस्य साधुशब्दस्यापभ्रंशाः प्रसिद्धिङ्गतास्तत्र साधुशब्दस्यैव वाचकत्वं नास्ति चेत्तादृशः कश्चन स्मृतः साधुशब्दः कथं वाऽर्थबोधं जनयेत्? अतः साधुशब्दस्मरणेनासाधुशब्दादर्थबोध इति तदयुक्तमेव।

**शक्तिभ्रमाद्बोध इत्यस्य खण्डनम् –**

शक्तिभ्रमाद्बोध इति तु न युक्तम्। यस्मिन् ज्ञाने उत्तरकाले यस्य बाधो दृश्यते तत्रैव भ्रमस्स्वीक्रियते तद्वति तत्प्रकारकज्ञानस्यैव भ्रमत्वात्। गगर्यादिशब्दानां श्रवणानन्तरम् 'इमे गगर्यादिशब्दा वाचकत्वाभाववन्तः' इति ज्ञानं न कस्यापि जायते। अतोऽत्र भ्रमस्योपपादनमेव न कर्तुं शक्यते।

किञ्च घटत्वादिविशिष्टघटादिरूपार्थनिरूपिताया घटादिपद-वृत्तित्वेन गृहीतायाः शक्तेः भिन्नानुपूर्वीकत्वरूपविशेषदर्शनसत्त्वेन गगरीपदादौ भ्रमानुपपत्तेः। अत एवासाधूनामपि बोधकत्वेन शक्तत्वादेवान्येनोच्चारिते साधुशब्दे संस्कृतज्ञानरहितानां स्त्रीशूद्र-बालादीनामर्थविषयकसंशय उत्पन्ने सति तस्य साधुशब्दस्यापभ्रंशोच्चारणेन तेषामर्थनिर्णयेन संशयो दूरीभवति।

किञ्च "शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति विकार एनमार्या भाषन्ते शव इति" इत्यादिभाष्यात्तत्तद्देशनियतसंस्कृतेषु शक्त्यनापत्तिः। यदि च तेषु तत्तद्देशनियतेषु संस्कृते शक्तिरङ्गीक्रयते, तर्ह्यपभ्रंशेषु शक्त्यस्वीकारे प्रमाणाभावादपभ्रंशेष्वपि शक्तिः सिद्ध्यति।



**अपभ्रंशानां वाचकत्वे आर्यम्लेच्छाधिकरणसङ्गतिः –**

अपभ्रंशेषु शक्तिस्वीकारादेव आर्यम्लेच्छाधिकरणमपि सङ्गच्छते। अन्यथा एकस्यैवार्थस्य मुख्यत्वात्, अन्यस्य गौणत्वाच्च, पूर्वपक्षासङ्गतिः। तत्र हि "यवमयश्चरुर्भवति" इति वाक्ये यवशब्देन दीर्घशूकविशेषो निर्दिष्टो वा, प्रियङ्गुविशेष उद्दिष्टो वेति सन्देहे उभयथाप्यर्थस्य प्रसिद्धत्वात् **"तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिस्स्यात्" जै.सू. १-३-८** इति विकल्पापत्तिः पूर्वपक्षिणा शङ्किता। तदनन्तरं **"शास्त्रस्थानां तन्निमितत्वात्" जै.सू. १-३-९** इति सिद्धान्त उक्तः। शास्त्रस्थानां शिष्टाणामार्याणां या प्रसिद्धिः सैव न्याय्येति दीर्घशूकविशेष एवात्राभिप्रेत इति निश्चीयते। तस्मादपभ्रंशानां वाचकत्वं मीमांसकैरभ्युपगतमेव। तवापभ्रंशेषु शक्तिमनङ्गीकर्तुर्नैयायिकमते यत्प्रतिपादितं म्लेच्छा अपभ्रंशशब्दान् एव प्रयुञ्जते, अतस्तेषां म्लेच्छानां यो बोधो भवति स साधुशब्दभ्रमादेव। एवञ्चायं बोधः शक्तिभ्रमजन्य इति वक्तव्यम्। तथा च शुक्तौ रजतत्वभ्रमवान् पुरुषः तेन रजतेन किञ्चिदपि कार्यं कर्तुं न प्रभवति। तस्य ज्ञानं न किमपि साधकं भवति तथैव म्लेच्छानां प्रसिद्धिः भ्रममूलिका एव। तस्मादपभ्रंशानां वाचकत्वं भवताऽपि अङ्गीकार्यम्।

**अपभ्रंशानां वाचकत्वे भाष्यादिप्रमाणानि –**

अपभ्रंशानां वाचकत्वे भाष्यप्रमाणानि वाक्यपदीयकारस्य सम्मतिश्च वर्तते। तथा हि - **"सिद्धे शब्दार्थसम्बन्धे" "लोकतोऽर्थप्रयुक्ते शब्दप्रयोगेण शास्त्रेण धर्मनियमः"** इति वार्त्तिकं रचयतो वार्त्तिककारस्य **"समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते, शब्देनैवार्थोऽभिधेयो नापशब्देनेति", "एवं क्रियमाणमभ्युदयकारि भवति"** इति वदतो महाभाष्यकारस्य **"वाचकत्वाविशेषे वा नियमः पुण्यपापयोः"** इति कारिकां रचयतो वाक्यपदीयकारस्य चापभ्रंशानां साक्षादेव बोधकत्वमिष्टम्।

**साधुत्वनिर्वचनम् –**

इत्येतावतोच्यमानं साधुत्वं नाम कीदृशमिति जिज्ञासा जायते यत्तावदपभ्रंशेषु नास्ति। एवं जातायां जिज्ञासायामुच्यते - **साधुत्वं च व्याकरणान्वाख्येयत्वं पुण्यजनकतावच्छेदकधर्मवत्त्वं वा। तद्भिन्नत्वमसाधुत्वमिति।**

अस्यार्थः – व्याकरणान्वाख्येयत्वं = व्याकरणेन शब्दशास्त्रेणाऽन्वाख्येयत्वं व्युत्पादनमार्गेणानुसंधेयत्वम्। पुण्यजनकतावच्छेदकधर्म-वत्त्वम् इत्यस्य तु पुण्यस्य = सुकृतस्य या जनकता = हेतुत्वं तदवच्छेदकं = तद्विशिष्टो यो धर्मः तद्वत्वमिति।

**शक्तिभेदनिरूपणम् –**

सामान्याद् विशेषं प्रति इति न्यायानुसारेण शक्तेः स्वरूपं सामान्यतः प्रतिपाद्य विशेषजिज्ञासायां तद्भेदाः कथ्यन्ते। तदित्थं – तस्याः शक्तेः त्रयो भेदा भवन्ति **रूढिः, योगः योगरूढिश्चेति।**

**रुढिः** – रुढेः लक्षणं तु **"शास्त्रकल्पितावयवार्थमानाभावे समुदायार्थनिरूपितशक्तिः। यथा मणिनूपुरादौ।"** शास्त्रेण व्याकरणशास्त्रेण कल्पिता ये अवयवाः प्रकृतिप्रत्यार्थरूपाः तेषां येऽर्थाः तेषामर्थस्य यन्मानं तद्विरहतयैव समुदायेन निरूपिता या शक्तिः सैव रूढिरित्युच्यते। यथा मणिः इति पदे शब्दार्थक'मण्'धातोः औणादिके इन् प्रत्यये मणिशब्दः निष्पद्यते। किन्तु सः अवयवलभ्यशब्दकर्तृरूपार्थस्य स्थाने समुदायार्थत्वेन रत्नविशेषं बोधयति। एवमेव 'नूपुर' इति स्तुत्यर्थकात् 'नू'(णू)-धातोः सम्पदादित्वात् क्विपि नूः अग्रगमनार्थकात् 'पुर्'धातोः इगुपधत्वेन कप्रत्यये कित्त्वेन गुणाभावे पुरः नुवः नूपुरः इति सिद्ध्यति। किन्तु स्तुतिसम्बन्ध्यग्रगमनकर्त्रथस्य स्थाने भूषणविशेषं समुदायार्थत्वेन बोधयति।

**योगः** – योगलक्षणन्तु **शास्त्रकल्पितावयवार्थनिरूपिता शक्तिः। यथा पाचकादौ।** व्याकरणशास्त्रेण कल्पिता ये अवयवाः प्रकृतिप्रत्ययार्थरूपाः तेषां योऽर्थः तेन निरूपिता निर्धारिता या शक्तिः सा योगरूढिः इति तदर्थः। यथा पाचक इत्यत्र पाकार्थकात् पच्'धातोः "ण्वुल्तृचौ" इति कर्तर्यर्थे ण्वुल्प्रत्यये वोरकादेशे उपधावृद्धौ 'पाचक' इति सिध्यति तस्यार्थः पाककर्ता इति शास्त्रकल्पितावयवार्थ एव सः।

**योगरुढिः – शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिः। यथा – पङ्कजपदे।** व्याकरणशास्त्रेण विभक्ता ये प्रकृतिप्रत्ययरूपावयवाः, तेषां येऽर्थास्तैरन्वितो विशिष्टः, विशेष्यभूतः योऽर्थः तेन निरूपिता निर्धारिता या श-

क्तिः सा योगरूढिरिति लक्षणार्थः। पङ्के जात इत्यर्थे पङ्कोपपदपूर्वकाज्जन् धातोः सप्तम्यन्तोपपदयोगे "सप्तम्यां जनेर्डः" इति डप्रत्यये टिलोपे पङ्कज इति सिध्यति। तत्र शास्त्रकल्पितावयवाः पङ्क+जन्+ड इत्येते। तदर्थः पङ्कजनिकर्तृरूपार्थः तेन अन्वितो यो विशेष्यभूतार्थः पद्मरूपार्थः तेन निरूपिता शक्तिः पङ्कजशब्दे इति लक्षणसमन्वयः।

**अत्र प्रश्नः** – यत्र पङ्कजशब्दात् कुमुदादिपङ्कजातवस्तु बोधस्तत्र भवतु साधारण्येन शक्तिः, यत्र तु पद्मरूपविशेषबोधस्तत्र लक्षणा भवतु। एवञ्च लक्षणया एव निर्वाहे किमर्थं समुदायरूपशक्तिस्वीकरणम्?

**अत्रोत्तरम्** – पद्मेऽनुपपत्तिसन्धानं सम्बन्धप्रतिसन्धानञ्च विना न लक्षणावसरः। अयमर्थः – पद्मरूपे अर्थे पङ्कजशब्दस्य नापि अन्वयानुपपत्तिः नैव च वाच्यार्थेन तस्य कोऽपि सम्बन्धः। तेन पङ्कजशब्दस्य पद्मेऽर्थेऽन्वयाभावात् सम्बन्धाभावाच्चात्र शक्तिरेव न लक्षणा। लक्षणा तु तत्रैव यत्रान्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा प्रतिसन्धानं विना, शक्यसम्बन्धप्रतिसन्धानं विना च वाच्यार्थस्य न सम्भवः। यथा गङ्गायां घोष इत्यादौ शक्यस्य प्रवाहरूपार्थस्य तीररूपलक्ष्यार्थेन सम्बन्धः। तथैव गङ्गायां घोषस्यासंभवात्तत्र प्रवाहरूपार्थे घोषपदनिरूपिताभीरपल्लीरूपार्थस्यान्वयस्यानुपपन्न-त्वात्तत्र लक्षणा। न तादृशः कश्चन सम्बन्धः पङ्कजपदस्य पद्मरूपार्थे, नापि अन्वयानुपपत्तिः। एवञ्च नात्र लक्षणा।

**अत्र कश्चन विशेषः** – क्वचित्तात्पर्यग्राहकवशात् केवल रूढ्यर्थस्य केवलयोगार्थस्य च बोधः। यथा "भूमौ पङ्कजमुत्पन्नम्" इत्यादिस्थले पङ्कजशब्दः योगार्थं त्यक्त्वा केवलं रूढ्यर्थं बोधयति, भूमौ तस्योत्पत्तिकथनात्, न तु पङ्के। एवमेव "कह्लारकैरवमुखेष्वपि पङ्कजेषु" नाम कह्लारं सौगन्धिकं ह्रस्वकमलं कैरवं कुमुदं तन्मुखेषु इत्याद्यर्थः, एषु स्थलेषु पङ्कजशब्दः रूढिमनपेक्ष्य केवलयोगार्थमवयवरूपार्थमेव बोधयति। कह्लारकैरवादौ रूढ्यनुसारेण कमलत्वाऽभावात्। एतत्सर्वं "आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्"(पा. सू. ६-१-१९) इति सूत्रे भाष्ये स्प-

ष्टम्।

अधुना प्रसङ्गान्नैयायिकोक्तो **यौगिकरूढाख्यः** तुरीयो भेदोऽपि प्रदर्श्यते – अश्वगन्धादिपदमोषधिविशेषे रूढम्, तत्र अश्वगन्धस्य मनागपि न संसर्गस्तथापि रूढित्वेन शक्तमिदमोषधिविशेषस्य बोधकम्। अश्वसम्बन्धिगन्धवत्तया वाजिशालाबोधे यौगिकम्, अत्र त्वश्वसम्बन्धिनी या गन्धवत्ता तया वाजिगतगन्धयुक्तत्वेन वाजिनां शाला इति बोधो जायते। इदं यौगिकरूढं नाम यौगिकञ्च तद्रूढञ्चेति एवमेव पदं क्वचिद्यौगिकत्वेन क्वचिच्च रूढत्वेनार्थस्य बोधकस्तस्माद्यौगिकरूढमित्युच्यते। एवं मण्डपपदं गृहविशेषे रूढम्, मण्डपानकर्तरि यौगिकम्।

**शक्तिनियामकाः संयोगादयः –**

उपर्युक्तरीत्या प्रतिपादिता या त्रिविधा शक्तिः सा क्वचित् तात्पर्यग्राहकवशात् केवल रूढ्यर्थस्य केवलयोगार्थस्य च बोधिका भवति। एवं रीत्या यदा नानार्थान् बोधयति तदा सा संयोगादितात्पर्यग्राहकैरस्य पदस्यास्मिन्नर्थे शक्तिर्नियता सत्सु नानार्थेष्वित्येतदर्थनिश्चायका ये संयोगादयः, तैर्नियम्यते निश्चयीक्रियते। ते च संयोगादयो वाक्यपदीये वर्णिताः। तथा हि –

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ इति।**

(वाक्यपदीयम्, २/३१७-३१८)

एवञ्च संयोगः, विप्रयोगः, साहचर्यं, विरोधिता, अर्थः, प्रकरणं, लिङ्गं, शब्दस्यान्यस्य सन्निधिः, सामर्थ्यं, औचिती, देशः, कालो, व्यक्तिः, स्वरादयश्च शब्दार्थस्यानवच्छेदे = शब्दबोध्यार्थस्य अनिश्चये (नानार्थकेषु शब्देषु तत्र कतमोऽर्थोऽभीष्ट इति सन्देहे जाते) विशेषस्मृतिहेतवः = विशेषो विवक्षितो योऽर्थः तस्य स्मृतेः ज्ञानस्य कारणानि भवन्तीति। उक्तमपि हरिणा –



**वाक्यात् प्रकरणादर्थादौचित्याद् देशकालतः।**

**शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात्॥ इति।**

(वाक्यपदीयम्, २/३१४)

एतेषां सोदाहरणं विवरणमित्थम् –

संयोगो नाम प्रसिद्धसम्बन्धः। अस्योदाहरणं सवत्सा धेनुरिति। सवत्सा वत्ससहिता धेनुः नवप्रसूता गौः। अत्र केवलो धेनुशब्दो नवप्रसूतगोमहिषीस्त्र्यादिवाचको हैमकोषे प्रसिद्धः, तस्यानेकार्थस्य वत्सशब्देन गवि वाचकत्वं नियम्यते। यदा तु नवप्रसूता गौरिति प्रसिद्ध एव गवि धेनुशब्द इत्युच्यते तदा सशङ्खचक्रो हरिरित्युदाहरणान्तरं बोध्यम्। तत्र हि हरिशब्दस्य विष्णौ, सिंहे, रवौ, भेके इत्यादिरीत्या चतुर्दशस्वर्थेषु विद्यमानत्वात् शङ्खचक्रपदेन शङ्खचक्रसंयोगेन स्वत्वादिसम्बन्धस्य बोधकत्वात् विष्णौ शक्तिर्नियम्यते।

विप्रयोगो नाम विश्लेषः। अस्योदाहरणम् अवत्सा धेनुरिति। अत्रापि वत्सविश्लेषेण वत्सपदेन गवि शक्तिर्नियम्यते धेनु पदस्य। अथवा पूर्वोक्तरीत्या विप्रतिपत्तिश्चेदस्मिन् उदाहरणे तदा अशङ्खचक्रो हरिरित्युदाहरणान्तरम्।

साहचर्यं नाम सादृश्यं सदृशयोरेव सहप्रयोग इति नियमात्। उदाहरणन्तु रामलक्ष्मणौ इति। अत्र लक्ष्मणसाहचर्येण दाशरथावेव रामपदस्य शक्तिः नियम्यते। तत्र राम इति पदं जामदग्न्यबलरामादिषु नानार्थेषु वाचकम्।

विरोधिता मैत्र्यभावः सहानवस्थानञ्च। रामार्जुनगतिस्त-योरित्युदाहरणम्। अत्र रामार्जुनयोरिव तयोर्गतिरिति कस्यचिदुप-मायां सदृशलक्षणया विरोधाद् भार्गवकार्तवीर्ययोरेव बोधः। अर्जुनविरोधित्वाद् रामो भार्गव एव न तु दाशरथ्यादिः, तद्वध्यत्वाच्च अर्जुनः कार्तवीर्य एव न पाण्डवादिः। तद्वत्तयोर्योद्ध्रोः या गतिर्दशा तत्सादृश्यवर्णनायोदाहरणमिदम्।

अर्थो नाम प्रयोजनम्। एतदुदाहरणन्तु "अञ्जलिना जुहोति", "अञ्जलिना सूर्यमुपतिष्ठते" इत्यादि। अत्र वाक्ययोः जुहोत्यादिपदार्थवशात् अञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वमिति। आद्ये होमकरणतारूपसामर्थ्यवशाद्वर्तुलगर्तरूपाञ्जल्यर्थे नियमनम्, द्वितीये तूपस्थानरूपसामर्थ्यवशादञ्जलिपदस्य तद्रूपेण करतलान्त्य-

संयोजनं यथाञ्जलिर्भवेदित्यर्थे नियमनम्।

प्रकरणं तु बुद्धिस्थत्वमिति। यथा सैन्धवमानयेत्यादौ सैन्धवपदस्य लवणेऽश्वे च शक्तत्वेपि भोजनप्रकरणवशाल्लवणस्य, यात्रारूपप्रकरणवशादश्वस्य च बोधः।

लिङ्गं व्यावर्तकधर्मविशेषः। अस्योदाहरणम् "अक्ताः शर्करा उपदधाति" इत्यादौ "तेजो वै घृतम्" इति घृतरूपस्तुति-रूपाल्लिङ्गादक्ताः इत्यस्य घृतसाधन-काञ्जनपरत्वम्। अक्ता इत्यस्य लिप्ता इत्यर्थः। लेपस्तु येन केनापि भवति परन्तु, 'तेजो वै घृतम्' इति घृतगुणप्रशंसनपरकात् लिङ्गात् अक्ता इति घृतेनाक्ता इत्यर्थे नियमन्।

अन्यस्य शब्दस्य सन्निधिर्नाम स्वेतरस्यैकार्थबोधकस्य पदस्य सान्निध्यात् समभिव्याहारादर्थनियमनमित्यर्थः। अत्रोदाहरणं रामो जामदग्न्य इति। जामदग्न्य-पदसन्निधानाद् रामः परशुरामः। जमदग्निसुतत्वेन तस्य प्रसिद्धत्वान्नात्र दाशरथ्यादीनां ग्रहणम्।

सामर्थ्यं हि कारणता। अभिरूपतराय कन्या देयेति यथा। अत्रोदाहरणेऽभिरूपतराय सर्वतोभावेन योग्यायेत्यर्थः, अभिरूपशब्दनिष्ठसामर्थ्यवशात् प्रतीयते इदम्। अभिरूपशब्दो हि कमनीययोग्यानुकूलादिषु नानार्थेषु वर्तते। प्रकृते तु अभिरूपपदनिष्ठकन्यादानयोग्यत्वसामर्थ्यवशात्तस्य वाचकत्वमभि-रूपतरेऽर्थे नियम्यते कन्यादानकरणत्वस्य तत्रैव सत्त्वात्।

औचिती = औचित्यं हि योग्यता। अस्योदाहरणं कारिकयाऽनया सङ्गृह्योच्यते। तथा हि –

**यश्च निम्बं परशुना छिनत्ति यश्चैनं मधुसर्पिषा।**
**यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः॥**

इत्यादौ परशुना इत्यस्य च्छेदनार्थत्वम्, मधुसर्पिषा इत्यस्य सेचनार्थत्वं, गन्धमाल्याद्यैरित्यस्य पूजनार्थत्वम्। अत्रायं भावः – परशोश्छेदन एव, मधुसर्पिषोः सेचन एव, गन्धमाल्यादीनां पूजन एव योग्यताऽस्तीति परशुना छिनत्ति, मधुसर्पिभ्यामभिषिञ्चति, गन्धमाल्याद्यैश्च पूजयतीति औचित्याद्बोधः।

देशो नाम ग्रामादिस्थानम्। यथा भात्यत्र परमेश्वर इत्यादौ राजधानीरूपदेशात् परमेश्वरपदं राजबोधकम्। परमेश्वर पदं नानार्थकमीश्वरे, राजनि सामर्थ्यवति जने च प्रसिद्धः, किन्तु राजधानीरूपदेशबलात्तदन्वयाय राजनि निर्धार्यते।

कालस्तु दिवसादिसमयः। चित्रभानुर्भाति इत्यादौ रात्रौ अग्नौ दिवा सूर्ये। 'चित्रभानुर्विरोचनः' 'चित्रभानुर्विभावसुः' इत्यमरकोशाच्चित्रभानुपदं यद्यपि अग्निसूर्योभयशक्तं तथापि रात्रिरूपकालादग्नेर्बोधकम्, दिवारूपकालज्ञानात् सूर्यस्य बोधकम्।

व्यक्तिः लिङ्गमिति। मित्रो भाति, मित्रं भाति इत्यादौ आदौ पुंसि विद्यमानत्वात् सूर्यस्य, अन्त्ये क्लीबे विद्यमानत्वात् सुहृदो बोधकः।

स्वरः उदात्तादिः। तैः उदात्तादिस्वरैः 'स्थूलपृषतीमनड्वा-हीमालभेत' इत्यादौ तत्पुरुषबहुव्रीह्यर्थनिर्णयः। स्थूला चाऽसौ पृषती इति तत्पुरुषः, स्थूलानि पृषन्ति यस्या इति बहुव्रीहिः। अनयोरर्थविवेकनिर्णयः पूर्वपदप्रकृतिस्वरेण बहुव्रीहिरिति निश्चीयते, "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इति सूत्रेण। अन्तोदात्तश्चेत्तत्पुरुषः, "समासस्य" इति सूत्रेणान्तोदात्तस्वरः। सिद्धान्तेऽत्र बहुव्रीहिः स्वीक्रियते।

कारिकायां स्वरादय इति आदिशब्दोऽपि पठितः। तेन षत्वसत्वणत्ववक्तृबोद्धव्यवैशिष्ट्यप्रतिभादिसहकारादिभिरप्यर्थनिर्णय इति तात्पर्यम्।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ
शक्तिसिद्धान्तनिरूपणम् ॥

# अथ लक्षणासिद्धान्तनिरूपणम्

वृत्तिभेदनिरूपणप्रसङ्गे वृत्तेस्त्रिषु भेदेषु प्रथमस्य शक्तेः तत्सम्बद्धस्य च सर्वस्यापि विषयस्य प्रतिपादनात् परं लक्षणावृत्तिसिद्धान्तः प्रतिपाद्यते। तत्र का नाम लक्षणेति चेदत्र -

**तार्किकाः** – स्वशक्यसम्बन्धो लक्षणा। स्वस्य स्वसम्बन्धस्य शक्यस्य नाम शक्त्युपस्थापितार्थस्य सम्बन्धो लक्षणेति कथ्यते। तेन शक्यार्थसम्बद्धत्वमेव लक्षणायाः स्वरूपमिति फलितम्। शक्तं पदं 'स्व' शब्देन ग्राह्यं, एवञ्च स्वस्य = पदस्य, शक्यस्य = शक्त्युपस्थापितार्थस्य, सम्बन्धः = सामीप्यादिः यथायोग्यस्मबन्धः स एव लक्षणेत्यर्थः।

यदा तु "शक्यसम्बन्धः लक्षणे"ति उच्यते तदा शक्त्युपस्थापितार्थस्य यः सम्बन्धः सामीप्यादिस्तस्य लाक्षणिकेन सहेति बोध्यम्। शक्यपरम्परासम्बन्धो लक्षणेति तात्पर्यम्।

गङ्गायां घोष इत्यादौ समन्वयः – स्वं नाम गङ्गापदं, तस्य यः शक्यार्थः शक्त्या उपस्थापितोऽर्थः प्रवाहरूपार्थः, तेन सह यः सामीप्याख्यः सम्बन्धः तीरस्य इति गङ्गापदे लक्षणा सिद्ध्यति तेन प्रतिपादितोऽर्थो लक्ष्यार्थः तीररूपार्थ इति।

**लक्षणाभेदाः** –

**गौणी शुद्धा च** – सा पूर्वोक्ता लक्षणा द्विविधा। गौणी शुद्धा चेति। तत्राद्या – **स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थ-प्रतिपादिका गौणी**। द्वितीया तु – **तदतिरिक्तसम्बन्धेन शक्य-सम्बन्ध्यर्थप्रतिपादिका शुद्धा।**

अनयोर्विवरणम् – **स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन** = स्वं लाक्षणिकत्वेनाभिमतं पदं, तेन निरूपितं निर्दिष्टं यत् सादृश्याधिकरणत्वं सादृश्यस्य गुण-

साम्यस्य यदधिकरणत्वमाधारत्वं तस्य सम्बन्धः **तेन शक्यसम्बन्ध्यर्थप्रतिपादिका** = शक्यसम्बन्धी वाच्यार्थसम्बद्धो योऽर्थः तस्य प्रतिपादिका बोधयित्री गौणी गौणाख्यलक्षणावृत्तिरिति। यथा 'सिंहो माणवकः'। अत्र हि सिंहपदस्य शक्यार्थो मृगेन्द्रः। स्वपदेनात्र सिंहपदमेवाभिप्रेतम्। सिंहे ये हि शौर्यादिगुणाः तत्सदृशा एव शौर्यादिगुणा माणवकेऽपि। अतोऽत्र माणवके सिंहनिरूपितसादृश्यमस्ति। तत्सादृश्याधिकरणं माणवकः। अत एतादृशसादृश्याधिकरणत्वरूपसम्बन्धेन माणवकस्यार्थबोधो लक्षणयैव भवति। सैषा गुणसादृश्याश्रितत्वेन गौणीत्युच्यते।

अथ **तदतिरिक्तसम्बन्धेन** = तस्मात् सादृश्याद् अतिरिक्तो यः सम्बन्धः सामीप्यादिस्तेन। **शक्यसम्बन्ध्यर्थप्रतिपादिका** = शक्यसम्बन्धी वाच्यसम्बद्धो योऽर्थः तस्य प्रतिपादिका **शुद्धा** शुद्धाख्यावृत्तिरिति। शुद्धायां कार्यकारणभावादिसम्बन्धोऽपेक्षितो भवति। यथा 'आयुर्घृतम्' इत्यत्र घृतस्यायुर्वृद्धिकारणत्वेन कार्यकारणभावसम्बन्धमाश्रित्य घृतशब्दः तत्सम्बद्धायुषं लक्षणया बोधयति।

**जहल्लक्षणाऽजहल्लक्षणेति प्रकारान्तरेण भेदनिरूपणम् –**

प्रकारान्तरेणापि सा द्विविधा। जहत्स्वार्थाऽजहत्स्वार्था च।

जहत्स्वार्था – **स्वार्थपरित्यागेनेतरार्थाभिधायिका जहत्स्वार्था।** जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था लक्षणा। स्वार्थयस्य = स्वशक्यार्थस्य परित्यागः = उपेक्षा, त्यजनम् तेन, इतरस्य = अपरस्य परन्तु सम्बद्धार्थस्याभिधायिका बोधिकेति यावत्। तत्परित्यागश्च शक्यार्थस्य लक्ष्यार्थान्वयिनाऽनन्वयित्वं द्वयोः क्रियायामेकत्रान्वयाभाव इत्यर्थः। अत एव गां वाहीकं पाठय इत्यादिस्थले गोसदृशलक्षणायामपि न गोः तदन्वयिपाठनक्रियायामन्वयः।

अजहत्स्वार्थाः – स्वार्थसंवलितपरार्थाभिधायिकाऽजहत्स्वार्था। न जहति पदानि स्वार्थं यस्यां सा अजहत्स्वार्था लक्षणा। जहति इति शतृप्रत्ययान्तम्। तिङन्तमिति तु न भ्रमितव्यम्। स्वार्थेन = स्वशक्यार्थेन संवलितः = मिश्रितः यः परार्थः अन्यपदार्थः तस्याभिधायिका बोधयित्रीति यावत्। अस्योदाहरणानि छत्रिणो यान्ति, कुन्तान् प्रवेशय, यष्टीः प्रवेशय, काकेभ्यो दधि रक्ष्यताम् इत्यादीनि।

छत्रिणो यान्ति इत्यत्र छत्रिसहितसेनाया बोधः । यद्यपि तत्र छत्रिणोऽच्छत्रिणश्च युगपद्गच्छन्ति, किन्तु समूहे छत्रिणोऽधिकाः सन्ति । अतस्तदर्थबोधनायात्र लक्षणा स्वीक्रियते ।

कुन्तान् प्रवेशय इत्यत्र कुन्तास्त्रसहितपुरुषस्य बोधः । अत्र वाक्येऽचेतनपदार्थस्य कुन्तस्य प्रवेशनासम्भवात् कुन्तास्त्रसहित-पुरुषान् प्रवेशयेति बोधनाय लक्षणा ।

यष्टीः प्रवेशयेत्यत्र यष्टिसहितपुरूषस्य बोधः । अत्रापि वाक्ये पूर्ववद् यष्टिसहितस्य पुरुषस्य प्रवेशने तात्पर्यम् ।

काकेभ्यो दधि रक्ष्यतामित्यत्र काकसहितसर्वदध्युपघात-कस्य च बोधो भवति । अत्र न केवलं काकेभ्यो रक्षणम्, अपितु काकेन सह ये ये दध्युपघातका बिडालादयस्तेषां समेषामपि बोधः ।

पूर्वोक्तलक्षणस्य एकत्र समन्वयं पश्यामः स्वार्थेन = स्वशक्यार्थेन छत्रि पदस्य यः शक्यार्थः छत्रवान् पुरुषः, तेन संवलितः = मिश्रितः यः परार्थः अन्यपदार्थः अच्छत्रिरूपार्थः तस्याभिधायिका बोधयित्री इत्यनया रीत्याऽन्यत्रापि ।

**लक्षणाया निमित्तानि –**

अधुना पूर्वोक्ताया लक्षणाया भेदान् निरूप्य तस्या निमित्तानि कानीत्युच्यते । तानि चात्र कारिकया सङ्गृहीतानि तथा हि –

**तात्स्थ्यात् तथैव ताद्धर्म्यात् तत्सामीप्यात् तथैव च ।**
**तत्साहचर्यात् तादर्थ्याज्ज्ञेया वै लक्षणा बुधैः ॥ इति ।**

अनया कारिकया लक्षणा तात्स्थ्यादिनिमित्तिका भवतीति वर्ण्यते । तात्स्थ्यादिनिमित्ते सत्येव लक्षणा भवति नान्यथेति तात्पर्यबोधिका कारिकेयम् । कारिकायां तत्पदेन सर्वत्रशक्यार्थस्य ग्रहणम् । तत्रैकैकस्याः सोदाहरणं विवरणम् –

**तात्स्थ्यात्** – तत्र शक्यार्थे तिष्ठतीति तत्स्थस्तस्य भावस्तात्स्थ्यं तस्मान्निमित्ताल्लक्षणा भवतीति योज्यम् । यथा मञ्चा हसन्ति, ग्रामः पलायितः इत्यादिस्थलेषु शक्यार्थस्य मञ्चस्याचेतनत्वेन हसनक्रियाऽसम्भवात्, ग्रामशब्दार्थस्य चाचेत-

नत्वात् पलायन-क्रियाकर्तृत्वासम्भवाल्लक्षणया क्रमशो मञ्चस्था ग्रामस्थाश्च पुरुषा बोध्यन्ते।

**ताद्धर्म्यात्** – तस्य शक्यार्थस्य धर्म इव धर्मो यस्य तद्धर्मस्य भावः ताद्धर्म्यं तस्मान्निमित्ताल्लक्षणेति पूर्ववद्योज्यम्। यथा सिंहो माणवकः, गौर्वाहीकः इत्यादि। अत्र यः सिंहः स माणवको न, यस्तु माणवकः स न सिंहोऽतो माणवकेन सिंहपदशक्यार्थस्य वन्यजीवविशेषस्यान्वयाभावेन सिंहपदस्य तत्सहजातशौर्यादिगुणेऽर्थे लक्षणा येन शौर्यादिगुणविशिष्टस्य माणवकस्य बोधः। एवमेव वाहीकेन सह गोपदशक्यार्थस्यान्वयाभावेन गोपदस्य तत्सहजात-जाड्याद्यवगुणेऽर्थे लक्षणा तेन जाड्याद्यवगुणविशिष्टस्य वाहीकस्य बोधः।

**तत्सामीप्यात्** – तस्य शक्यार्थस्य सामीप्यं नैकट्यं तस्मान्निमित्तादिति। यथा गङ्गायां घोष इत्यादि। अत्र गङ्गापदशक्यार्थप्रवाहे घोषपदवाच्यस्याऽऽभीरपल्लीरूपस्यासम्भवाद् वाक्ये तस्यान्वयासम्भवेन तत्समीपवर्तिनि तटेऽर्थे लक्षणा तत्सामीप्यात्।

**तत्साहचर्यात्** – तस्य शक्यार्थस्य साहचर्यं सहस्थितिः तस्मान्निमित्तात्। यथा यष्टीः प्रवेशयेत्यादि। अत्र यष्टिपदशक्यार्थ-दण्डस्य प्रवेशनकार्यासम्भवेन वाक्येऽन्वयाभावत्तत्साहचर्येण तद्धारिपुरुषे लक्षणा।

**तादर्थ्यात्** – तस्य शऽक्यार्थस्य अर्थः प्रयोजनं तदर्थः तस्य भावस्तादर्थ्यं तस्मात्, तस्मै इदं तदर्थं तस्य भावः तादर्थ्यमिति वा तस्मात्। यथा इन्द्रार्था स्थूणा इन्द्र इत्यादि। अत्र स्थूणपदशक्यार्थस्य स्तम्भस्य इन्द्रपदेन सहान्वयाभावात् तादर्थ्यात्तन्निमित्तकेऽर्थे लक्षणा।

**लक्षणाबीजम्** –

इत्येतावता लक्षणायाः निमित्तानि निरूपितानि, तानि निरूप्य सम्प्रति लक्षणायां बीजं किमिति विचार्यते। तत्राद्यं मतं – **अन्वयानुपपत्तिप्रतिसन्धानं लक्षणाबीजम्।** अयमर्थः – अन्वयस्य वाक्ये शक्यार्थोपयुक्ताया अनुपपत्तिः असङ्गतिः तस्या प्रतिसन्धानं विचार इति। तल्लक्षणाया बीजम्। यदा वाक्ये शक्या-

र्थौ हि नान्वयं लभते तदैव लक्षणाविषय उदेतीति भावः। यथा गङ्गायां घोषः इत्यत्र गङ्गापदस्य प्रवाहरूपशक्यार्थो घोषेण नान्वयं लभते, प्रवाहे घोषस्य कथमप्यसम्भवात्। तेनात्र लक्षणास्वीकारात् गङ्गापदात् तत्समीपवर्तितटबोधः। परन्तु अन्वयानुपपत्तेः कथञ्चित् परिहारात् पक्षेऽस्मिन् काचिन्न्यूनता वर्तते। सा न्यूनता केति अनुपदं वक्ष्यते, न्यूनतायाः कारणात् तल्लक्षणाबीजं भवितुं नार्हतीत्यतः द्वितीयः सिद्धान्तपक्ष उक्तः शास्त्रकारैः – **वस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसन्धानमेव तद्बीजमिति।** अन्यथा 'गङ्गायां घोषः' इत्यादौ घोषादिपद एव मकरादिलक्षणापत्तिस्तावताऽप्यन्वयानुपपत्तिपरि-हारात्। गङ्गायां पापी गच्छतीत्यादौ गङ्गापदस्य नरके लक्षणापत्तेश्च।

**अस्यायं भावः** – तात्पर्यस्य वक्तुराशयस्यानुपपत्तिरसङ्गतिः तस्याः प्रतिसन्धानं विचार एव लक्षणाबीजम्। यद्येवं न स्वीक्रियेत तर्हि गङ्गापदस्य प्रवाहरूपार्थस्य घोषपदेऽन्वयानुपपत्तौ घोषपदे एव मकरार्थे लक्षणा सम्भवति। यतो हि घोषपदे मकरलक्षणायामपि अन्वयोपपत्तिर्भवत्येव प्रवाहेऽपि मकरसम्भवात्। किन्तु तेन यत्प्रयोजनमादाय लक्षणा समुपास्यते सत्यपि वाचके शब्दे तत्तु न संसूचितं भवति। घोषपदे मकरलक्षणाऽपि सामीप्यसम्बन्धेनैव। तथैव गङ्गायां पापी गच्छति इत्यादावपि अन्वयोपपत्तिपरिहारः गङ्गापदस्य नरके लक्षणया भवितुमर्हति। अतोऽन्वयानुपपत्तिप्रतिसन्धानं न लक्षणाबीजम्।

तात्पर्यानुपपत्तिपक्षस्वीकारे तु एते दोषा न सम्भवन्ति। यतोऽस्माकं मते तु पापी पदस्य भूतपूर्वपापावच्छिन्नलक्षकत्वे = पूर्वं पापमाचरितं येन तादृशावच्छिन्ने तद्विशिष्टे लक्षणया न दोषः। किञ्च 'नक्षत्रं दृष्ट्वा वाचं विसृजेदि'त्यत्र नक्षत्रदर्शनस्य सर्वथा-ऽसम्भवाभावादन्वयानुपपत्तिस्तु नास्ति कदाचिद्दिवसकालेऽपि नक्षत्रदर्शनस्य सम्भवात्। अतस्तात्पर्यानुपपत्त्या एव अत्र लक्षणा सम्भवति।

**अत्र केचिद्** – सर्वत्र तात्पर्यानुपपत्तिरपि न सम्भवति। 'आयुर्वै घृतमि'त्यादावन्वयानुपपत्तिमात्रेणापि लक्षणायाः सम्भवः। अतोऽन्वयानुपपत्तिरपि लक्षणाबीजमस्तु इति वदन्ति। परन्तु लक्षणायां बीजद्वयस्वीकारो गौर-

वास्पदं स्यादत एकेनैव तात्पर्यानुप-पत्तिरूपकेनानुगमकेन लक्षणाऽस्तु। एवञ्च तात्पर्यानुपपत्तिप्रति-सन्धानमेव लक्षणाबीजमिति निश्चप्रचम्।

**जहदजहल्लक्षणा -**

पूर्वोक्तेन लक्षणाभेदान् लक्षणाबीजञ्च निरूप्याधुना प्रसङ्गात् केषाञ्चन प्राचां मतमुद्धृत्यापरमपि जहदजहल्लक्षणाख्यो भेदो प्रतिपाद्यते। तदित्थं – विशिष्टार्थबोधकशब्दस्य पदार्थैकदेशे लक्षणायां जहदजहल्लक्षणेति व्यवहरन्ति वृद्धाः। वाच्यार्थे किञ्चिदंशत्यागः, किञ्चिदंशपरिग्रहश्च। अत्र ग्रामैकदेशे पटैकदेशे च दग्धे 'ग्रामो दग्धः' 'पटो दग्धः' इति व्यवहारः। तत्त्वमसि इत्यत्र सर्वज्ञत्वाल्पज्ञत्वयोः त्यागः, शुद्धचैतन्ययोरभेदान्वयः। इदं प्राचीनानां विशिष्य वेदान्तिनां च मतमनूद्यते। ते तु – तत्त्वमसीति महावाक्ये तत्पदवाच्यसर्वज्ञत्वविशिष्टचैतन्यांशत्वम्पदवाच्याल्पज्ञत्वविशिष्टचैतन्यांशयोरेको विशिष्टार्थो बोध्यस्तदर्थं तयोरेकदेशस्य सर्वज्ञत्वाल्पज्ञत्वांशस्य त्यागे, शुद्धचैतन्ययोर्ग्रहणे एकदेशे चैतन्यांशे लक्षणया उभयोरभेदान्वयेन जीवब्रह्मणोरैक्यं प्रतिपादयन्ति। एवमेव ग्रामैकदेशे पटैकदेशे च दग्धे 'ग्रामो दग्धः' 'पटो दग्धः' इति व्यवहारोऽपि अग्निना दग्धस्य भागस्य ग्रहणमवशिष्टस्य भागस्य त्याग इत्यनया रीत्या ग्रामो दग्ध इत्यादौ लक्षणामुपपादयन्ति। इयमेव भागलक्षणेति उच्यते वेदान्तिभिः।

**लक्षणाविषयकमीमांसकमतानुवादः –**

एतावता स्वशक्यसम्बन्धो लक्षणेति तार्किकसम्मतं लक्षणास्वरूपं प्रत्यपादि। तन्मते शक्यसम्बन्धो लक्षणेति स्वीकारे वाक्ये लक्षणा न सम्भवति। यतस्तत्रास्माभिर्निरूपितमासीद्यच्छक्यसम्बन्धो नाम शक्यार्थसम्बन्धत्वं लक्षणेति। शक्यार्थो हि शक्त्युपस्थापितोऽर्थः, शक्तत्वं च पदस्यैव न तु वाक्यस्य। नैयायिकैश्च वाक्ये शक्तिर्नाङ्गीक्रियते, अतस्तन्मते वाक्ये लक्षणाया असम्भवाद् मीमांसका वाक्ये लक्षणां साधयितुं लक्षणास्वरूपमित्थं वर्णयन्ति – **स्वबोध्यसम्बन्धो लक्षणा।** स्वं = वाक्यादि तेन बोध्यो = बोधविषयो योऽर्थः पदार्थो वाक्यार्थो वा तेन सह यः सम्बन्धः

सामीप्यादिस्थितिस्तल्लक्षणावृत्तिविषय इत्यर्थः। अयं हि गभीरायां नद्यां घोष इत्यादिवाक्येषु अपेक्षितोऽतोऽवश्यमभ्युपेयोऽयमिति। स च पदलक्षणायां कथमपि न सम्भवति। तत्र हि गभीरत्वविशिष्टा या नदी तत्तीरे घोष इत्यर्थः सम्मतः। तत्र वाक्ये "गभीरायां नद्यामि"त्यत्र सप्तम्यन्तार्थयोः समानविभक्तिकत्वादभेदान्वय इष्टः। अत्र यदि गभीरपदे तीरलक्षणा क्रियते तदा 'तीराभिन्ना नदी' इति बोधः स्यात् स चासङ्गतः, तीरनद्योरभेदस्य बाधादनन्वयापत्तिरूप-दोषश्च भवति। अस्तु तर्हि नदीपदे तीरलक्षणा स्वीक्रियतामिति चेत् तदपि न सम्भवति तथा सति गभीराभिन्नं तीरमिति बोधः स्यात्, किन्तु न हि तीरं गभीरं गभीरत्वं तु नद्या धर्मः। अतोऽत्रापि अनन्वयापत्तिरूपदोषोऽस्ति एव। एवं तर्हि प्रत्येकं पदद्वये लक्षणा स्वीक्रियतामिति गभीरपदस्य गभीरतीरे, नदीपदस्य नदीतीरे। एवमपि 'गभीरतीराभिन्नं यन्नदीतीरं तत्र घोषः' इति बोधः स्यात्, न तु अभीष्टः 'गभीराभिन्न (गभीरत्वविशिष्ट) नदीतीरे घोष' इति। तेन मतमिदमपि न समीचीनम्।

यदि चोच्येत नदीपदस्यैव गभीरनदीतटे लक्षणा भवतु, गभीरपदं तात्पर्यग्राहकं भवत्विति, तथाप्यत्र मते विनिगमनाविरहाद् गभीरपदस्य लक्षणा नदीपदञ्च तात्पर्यग्राहकमित्यपि वक्तुं शक्यतेऽत इदमपि न समीचीनम्।

एतत्सर्वविधानुपपत्तिपरिहाराय एव मीमांसकैः स्वबोध्यसम्बन्धो लक्षणेति स्वीकृतम्। तेन समुदाये लक्षणा। एवञ्च प्रकृते गभीरायां नद्यामिति समुदायेन बोध्यो योऽर्थः गभीरत्वावच्छिन्ननदीपदार्थः, तस्य सम्बन्धः तीरे इति गभीरायां नद्यां घोष इति वाक्येन गभीराभिन्ननदीतीरे घोष इत्यर्थो लक्षणया सिद्ध्यति।

**प्राचीननैयायिकाभिमतलक्षितलक्षणा –**

यत्र तु शक्यार्थस्य परम्परारूपसम्बन्धा लक्षणा सा लक्षितलक्षणेति प्राचीननैयायिकैः कश्चिदपरोऽपि भेदः वृत्तेः अङ्गीक्रियते। यथा द्विरेफादिपदेषु। तदुच्यते "द्विरेफपदस्य स्वलक्ष्यभ्रमरशब्दवाच्यार्थे लक्षणायां लक्षितलक्षणेति व्यवहारः। स्वबोध्यपदवाच्यत्वं सम्बन्ध" इति। स्वं नाम द्विरेफपदं, तल्लक्ष्यं = लक्षणाविषयः भ्रमरशब्दः, तद्वाच्यार्थो मधुपस्तस्मिन् मधुपेऽर्थे लक्षणेति। अत्र द्विरेफो रौति इ-

त्यादिस्थले द्वौ रेफौ यस्य भ्रमरशब्दस्य तस्य च रौतिक्रियायां कर्तृत्वान्वयानुपपत्त्या तात्पर्यानुपपत्त्या वा लक्षितलक्षणया भ्रमरपदवाच्यो मधुपो बुध्यते।

**अस्यायमाशयः** – द्विरेफ इति पदं द्वौ रेफौ यत्र यस्य वेति व्युत्पत्त्या योगार्थत्वेन प्रथमं रेफद्वययुक्तं पदं बोधयति ततश्च लक्षणया रेफद्वययुक्तत्वेन भ्रमरपदं लक्षयति। लक्षिते चेत्थं द्विरेफपदाद् भ्रमरशब्दे तस्य वाच्यार्थभूतमधुपार्थं बोधयति। तेन लक्षिते लक्षितस्य वा लक्षणेत्यत्र लक्षितलक्षणा। इयं हि शक्यार्थस्य परम्परासम्बन्धरूपेत्येतदङ्गीकुर्वतां मतम्। स्वबोध्यपद-वाच्यत्वञ्चात्र स्वं द्विरेफपदं तद्बोध्यं भ्रमरपदं तद्वाच्यत्वं भ्रमररूपार्थे इति। भ्रमरपदे लक्षणाया अभावे तु तस्य योऽर्थो मधुपरूपार्थस्तस्य द्विरेफपदनिष्ठवृत्त्यानुपस्थापितत्वेन 'द्विरेफो रौती'त्यादौ रौतिक्रियायां कर्तृत्वान्वय एव न स्यादिति द्विरेफपदस्य लक्षितलक्षणाङ्गीकार्या।

**वैयाकरणास्तु** द्विरेफपदेन रथन्तरवद् रूढिशक्त्यैव भ्रमरार्थो बोध्यते यद्वा पदनिष्ठरेफद्वयस्वार्थे आरोपात् तत्सम्बन्धितयैव तेन भ्रमरबोध इति वदन्ति। इत्थञ्च रूढिशक्त्या योगशक्त्या वा द्विरेफपदाद् भ्रमरार्थबोध इति तन्मतम्। अत एव कोशेष्वपि द्विरेफशब्दो भ्रमरपर्यायतया पठितः सङ्गच्छते।

**प्रकारान्तरेण लक्षणाया भेदनिरूपणम्** –

केचित् प्रकारान्तरेण **प्रयोजनवती रूढा** चेति भेदेन लक्षणा द्विविधा इति वदन्ति। साहित्यशास्त्रविदामिदं मतम्। तथा हि – **प्रयोजनवती रूढा च लक्षणा द्विविधा मता।** एतद्भेदद्वयं कविसम्प्रदायानुसारेण। रूढिर्नाम प्रसिद्धिस्तामाश्रित्य विशिष्टप्रयो-जनाभावे या भवति सा निरूढा, या तु किञ्चिद्विशेषप्रयोजनमाश्रित्य भवति सा प्रयोजनवती। तत्रादौ – **निरूढा लक्षणा – "असति प्रयोजने शक्यसम्बन्धो निरूढलक्षणा"।** प्रयोजनाभावे शक्यार्थबाधप्रतिसन्धानपूर्वकं शक्यार्थसम्बन्ध्यपरार्थबोधे निरूढलक्षणेति तदर्थः। यथा "त्वचा ज्ञातम्" इत्यत्र त्वगिन्द्रिये लक्षणा। अत्र हि त्वचि चैतन्याभावेन ज्ञानक्रियाया अनन्वयान्मुख्यार्थबाधेन रूढ्या स्पर्शगुणवति त्वगिन्द्रिये लक्षणा भवति। वस्तुत इयं शक्यापरपर्याया शक्तिरेव, न तु तद्विलक्षणेति नागेशादिशाब्दिकानां मतम्। शक्तिर्हि अनादितात्पर्यवशात् कमप्य-

र्थं बोधयति तद्वद् निरूढलक्षणाऽपि अनादितात्पर्यवशादेव तत्तदर्थान् बोधयति। यथा हि त्वग् शब्दः चर्मण्यर्थे प्रसिद्धः तथैव त्वगिन्द्रियेऽपि। अनेन स्पष्टं यत्त्वचा ज्ञातमित्यादौ शक्त्यैव निर्वाहसम्भवान्न लक्षणाया प्रसक्तिः।

**प्रयोजनवती लक्षणा – "सति प्रयोजने शक्यसम्बन्धः प्रयोजनवती लक्षणा।** सत्यपि वाचकशब्दे किमपि प्रयोजनमाश्रित्य तत्सिद्धये प्रयुज्यमाना प्रयोजनवती लक्षणा इत्यर्थः"। यथा 'गङ्गायां घोष' इत्यत्र गङ्गापदे तीरलक्षणा। सत्यपि तीरस्य वाचके शब्दे तदुपेक्ष्य गङ्गागतशैत्यपावनत्वादिप्रतीतिरूपप्रयोजनमाश्रित्य तत्सिद्धये गङ्गापदे लक्षणया गङ्गातीरे इति बोधः स्वीक्रियते। एवञ्च गङ्गागतशैत्यपावनत्वादिप्रतीतिरेवात्र प्रयोजनं लक्षणायाः। सामीप्यं ह्यत्र लक्ष्यतावच्छेदकम्।

**अत्र प्रश्नः** - केवलात् तीरपदात् "तीरे घोषः" इति प्रयुक्ते सति सा प्रतीतिः भवतु अथवा गङ्गातीरे घोष इति वा प्रयुज्यताम्। तेनैव शैत्यपावनत्वादिप्रतीतिरूपप्रयोजने सिद्धे किमर्था लक्षणा इति?

**अत्रोत्तरम्** - केवलात् तीरपदात् "तीरे घोषः" इति प्रयुक्ते सति सा प्रतीतिर्भवतु इति तु वक्तुं न शक्यते तीरमात्रे हि तादृशार्थबोधन-सामर्थ्याभावात्। तथैव तीरे शैत्यपावनत्वादिकं न साक्षाल्लक्ष्यते। एवं तर्हि "गङ्गातीरे घोष" इति वा प्रयुज्यतामिति चेत्तदपि न सम्भवति, यतो गङ्गायाः सुदूरवर्त्तिनि तीरे शैत्यपावनत्वादिप्रतीतिर्नैव जायते यथा गङ्गायां घोष इति प्रयुक्ते सति भवति। गङ्गायां घोष इति प्रयुज्यमाने तु तीरे लक्षणा स्वीक्रियते तेन गङ्गागतशैत्यपावन-त्वादिगुणास्तीर आरोप्यन्ते सामीप्यात्। तस्मात् शैत्यपावनत्वादि-प्रतीतिरूपप्रयोजनमाश्रित्य प्रकृते लक्षणाऽङ्गीक्रियते, सा च प्रतीतिः "तीरे घोष" इति "गङ्गातीरे घोष" इति वा प्रयुक्ते कथमपि न भवति, तत्र तादृशार्थस्यासम्भव एव यतो यत्प्रयोजमाश्रित्यात्र लक्षणा वक्तव्या सा तु "गङ्गायां घोष" इति प्रयुक्ते सत्येव भवति। एतत्प्रयुक्ते सत्येव तत्र मुख्यार्थबाधः, तात्पर्यानुपपत्तिरन्वयानुपपत्तिर्वापि वक्तुं शक्या। न हि "तीरे घोष" इति "गङ्गातीरे घोष" इति वा प्रयुक्ते तत्र मुख्यार्थबाधः कश्चित् वर्तते, नापि तात्पर्यानुपपत्तिरन्वयानुपपत्तिर्वा येन किमपि प्रयोजनं सिद्ध्यति यदाश्रित्यात्र

लक्षणा अङ्गीकार्या भवेत्। गङ्गायां घोष इति प्रयुज्यमाने तु तत्र घोषस्यासम्भवात् सामीप्यात् लक्षणया गङ्गातीरे घोष इति लक्षणापर्यन्तमर्थानुधावनस्यापेक्षा, तत्र च गङ्गागतशैत्यपावनत्वादिप्रतीतिरूपप्रयोजनमपि तेन सिद्ध्यति।

एवमेव "गौर्वाहीक" इत्यत्र वाहीके गवाभेदेन जाड्यमान्द्यातिशयप्रतीतिर्लक्षणायाः प्रयोजनम्। सादृश्यञ्चात्र लक्ष्यतावच्छे दकम्। सादृश्यन्तु गोवाहीकयोः समानजाड्यमान्द्यादिधर्मवत्त्वम्। "गौर्वाहीक" इत्यत्र गोपदस्य वाहीकपदेनान्वयाभावादुभयोः जाड्यमान्द्यादिधर्मसादृश्येन लक्षणा भवति। यस्याः प्रयोजनं वाहीकस्य गवाभेदप्रत्यय एव।

कुन्ताः प्रविशन्ति इत्यत्र भीतिपलायमानवाक्ये कुन्तविशिष्टपुरुषे कुन्तगततैक्ष्ण्यप्रतीतिः प्रयोजनम्। अनया रीत्या एषु स्थलेषु प्रयोजनवती लक्षणा भवतीति केषाञ्चन मतमनूदितम्।

**लक्षणानिरासः –**

इत्येतावता प्रबन्धेन तार्किकानां मीमांसकानामन्येषाञ्च मते लक्षणायाः किं स्वरूपमिति? के च तस्या भेदाः? इत्येत्सर्वमनूद्य प्रास्तावि। परन्तु शाब्दिकास्तु लक्षणां न मन्वते। अस्मन्मते लक्षणा नास्त्येव। तत्र च प्रमाणं "सर्वे सर्वार्थवाचका" इति भाष्यवचनम्। अस्यायमभिप्रायो यत् सति तात्पर्ये सर्वे शब्दाः सर्वानर्थानभिधातुं समर्थाः। तेन गङ्गापदं जलप्रवाहविशेषे यथा शक्तं तथैव तीरेऽपि। यद्येवं तर्हि गङ्गापदाद् घटादीनामपि बोधो भवतु इति शङ्कावसरस्तु न यतः 'सति तात्पर्ये' नाम तात्पर्यस्य शक्तिनियामकत्वात् घटादिविषये तात्पर्याभावान्न गङ्गापदाद् घटादीनां बोधापत्तिरिति। एतत्सर्वमितोऽपि स्पष्टतया विवेच्यतेऽनुपदमेव।

एवञ्च अत्र मते वृत्तिद्वयकल्पनाया आवश्यकतैव नास्ति शक्त्यैव निर्वाहसम्भवात्। वृत्तिद्वयावच्छेदकद्वयकल्पने तु गौरवम्। तद्धि क्वचिच्छाब्दबोधं प्रति शक्तिज्ञानजन्योपस्थितिः कारणम्। क्वचिच्च शाब्दबोधं प्रति लक्षणाज्ञानजन्योपस्थितिः कारणमिति स्वीकार्यम्। वैयाकरणमते तूभयत्रापि शक्तिज्ञानजन्योपस्थितिः कारणमिति लाघवम्। किञ्च लक्षणावृत्तिस्वीकारे कार्यकारणभावस्य प्र-

त्येकं व्यभिचारः, शक्तिज्ञानजन्योपस्थितिं विनापि लक्षणाज्ञान-जन्योपस्थितितः शाब्दबोधोदयात्। तथा हि – घटमानय इत्यत्र घटस्य शक्तिज्ञानजन्योपस्थितिसत्त्वेऽपि तस्य लक्षणाज्ञानजन्योप-स्थितिर्नास्ति, एवमेव गङ्गायां घोष इत्यत्र लक्षणाज्ञानजन्योपस्थिति-सत्त्वेऽपि शक्तिज्ञानजन्योपस्थितिर्नास्तीति व्यभिचारः। कारणासत्त्वे ऽपि कार्यदर्शनाद्व्यभिचार इत्यर्थः। वैयाकरणानां मते तु लक्षणाया अभावे शक्तिज्ञानजन्योपस्थितिरिति एकमेव कारणं शाब्दबोधं प्रति इति लाघवम्। शक्यलक्ष्योभयत्रापि पदशक्तेः सत्त्वाच्छक्तिज्ञान-जन्योपस्थितिः शाब्दबोधकारणमिति एक एव कार्यकारणभावः कल्प्य इत्यभिप्रायः। किञ्च मुख्यवृत्त्यैव कार्यसम्भवे जघन्यवृत्तेः (लक्षणाख्यगौणवृत्तेः) कल्पना अन्याय्येति।

**अत्र प्रश्नः** – यदि वृत्तिद्वयकल्पनं न स्यात्तर्हि कथं गङ्गादिपदात् तीराद्यर्थप्रतीतिः?

**अत्रोत्तरम्** – एतादृशप्रश्नकर्त्ता वस्तुतो भ्रान्त एव एतद्विषये। यतः 'सर्वे सर्वार्थवाचका' इति भाष्यं तत्र प्रमाणमस्ति, ततो न शङ्कावसर एतादृशप्रश्नस्य। तेनैव प्रवाहतीरोभयरूपशक्यार्थस्य प्रतीतिर्भवति। तथा हि शक्तिर्द्विधा – प्रसिद्धाऽप्रसिद्धा च। तत्र प्रसिद्धात्वं तु आमन्दबुद्धिवेद्यात्वम्, सहृदयहृदयमात्रवेद्यात्वञ्च अप्रसिद्धात्वम्। तेन गङ्गादिपदानां प्रवाहादौ प्रसिद्धा शक्तिः, तीरादौ चाप्रसिद्धा एवं च सर्वमुपपन्नमेव। तस्माच्छक्त्यैव सर्वत्र निर्वाहसम्भवे शक्तिलक्षणारूपवृत्तिद्वयकल्पनमनुचितमित्यभिप्रायः।

**पुनः प्रश्नः** – यदि सर्वे सर्वार्थवाचकास्तर्हि घटपदात् पटस्य बोधो कुतो न भवति?

उत्तरम् – सर्वे सर्वार्थवाचका इत्यत्रास्माभिः सति तात्पर्ये इत्युक्तम्। तेन यस्य कस्यचिच्छब्दस्य यस्मिन् यस्मिन्नर्थे तात्पर्यं तत्तदर्थ एव बोधविषयो भवति, नान्यः। तथा हि गङ्गादिपदे प्रयुक्ते गङ्गापदस्य प्रवाहे तीरे च तात्पर्यस्य सत्त्वादुभयार्थप्रतीतिः। घटशब्दस्य तु न कुत्रापि पटरूपार्थे तात्पर्यमतो न घटपदात् पट-

प्रत्ययः। तात्पर्यं चात्र नास्माकं कपोलकल्पना, अपितु ऐश्वरं देवतामहर्षिलोकवृ-

द्धपरम्परातोऽस्मदादिभिर्लब्धमिति सर्वं सुस्थम् ।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ
लक्षणासिद्धान्तनिरूपणम् ॥

# अथ व्यञ्जनासिद्धान्तनिरूपणम्

इदानीं क्रमेण वृत्तिविचारप्रसङ्गे वृत्तेस्तृतीयस्य व्यञ्जनाख्य-भेदस्योपक्रमो क्रियते। तत्र का नाम व्यञ्जनेति जिज्ञासायामुच्यते - मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिव्यापारवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना। मुख्यार्थस्य = शक्यार्थस्य, बाधः = अन्वयानुपपत्त्या तात्पर्यानुपपत्त्या उभयविधानुपपत्त्या वा परस्परसम्बन्धनिरूपकाणां पदार्थानां तात्पर्यविषयीभूतसम्बन्धेन एकपदार्थे अपरपदार्थाभाव इति वार्थः, तन्निरपेक्षो यो बोधः = ज्ञानं तस्य जनकः = हेतुः (अस्य संस्कारविशेषो व्यञ्जना इत्यत्रान्वयः) लक्षणा तावन्मुख्यार्थबाधे एव भवति, व्यञ्जना तु तन्निरपेक्षतया इत्यभिप्रायः। एवमेव मुख्यार्थेन = वाच्यार्थेन सम्बद्धः = सम्पृक्तः असम्बद्धः = असम्पृक्तश्च यौ अर्थौ तयोः साधारणः समानो वा (संस्कारविशेषो व्यञ्जना)। लक्षणायां तु मुख्यार्थसम्बद्धताऽपरिहार्या भवति, व्यञ्जनायां तूभयत्र सामान्यमेव। सम्बद्धत्वासम्बद्धत्वयोः गङ्गायां घोष इत्यत्र शैत्यपावनत्वादिः गङ्गापदस्य प्रवाहरूपमुख्यार्थसम्बद्धः, निःश्वासान्ध इवादर्श इत्यत्रासम्बद्धः अप्रकाशत्वरूपव्यङ्ग्यार्थस्तद्विषयः। एतेन व्यञ्जना लक्षणाभिन्नैव, न तया गतार्थेत्यायातम्। एवमेव प्रसिद्धाप्रसिद्धार्थविषयकः (संस्कारविशेषः) इत्यनेन सूच्यते यच्छक्तिः प्रसिद्धार्थविषया, व्यञ्जना तु प्रसिद्धाप्रसिद्धार्थोभयविषया। यथा राजत्युमावल्लभ इत्यत्रोमावल्लभत्वं शङ्करस्यापि प्रसिद्धमेव यद्धि व्यञ्जनाया विषयः। तदेव प्रसिद्धाप्रसिद्धार्थविषयकः = प्रसिद्धः शक्यत्वेन सर्वज्ञातोऽप्रसिद्धो लक्ष्यत्वेन सहृदयैरेव गृहीतश्च योऽर्थस्तयोऽन्यतरो विषयो यस्य स तादृशः। अयमप्रसिद्धार्थो हि वक्त्रादिवैशिष्ट्यज्ञानोत्पन्नः प्रतिभाशालिनामेव बोधविषयः, न तु अभिधाया इव सामान्यजन

विषय इति। तदेव वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः इत्यादिना सूचितम्। अत्रादिपदेन बोद्धव्यकाकुवाक्यवाच्यान्यसन्निधिप्रस्तावदेशकालादीनां ग्रहणं। यथोक्तं काव्यप्रकाशेऽपि –

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः।**
**प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्॥**
**योऽर्थस्यान्यार्थधीर्हेतुर्व्यापारो व्यक्तिरेव सा।**

(काव्यप्रकाशे ३ उल्लासे कारिका २१-२२)

काव्यप्रकाशोक्तस्याभिप्राय इत्थं वर्तते – यं प्रति किञ्चिद्वक्तव्यं स बोद्धव्य इत्युच्यते, यश्च शब्दशक्यः स वाच्य इति न पौनरुक्त्यम्। एवञ्च वक्त्रादेः वैशिष्ट्यं = वैलक्षण्यम्, इतरप्रतिषिद्धो धर्म इति यावत्। तस्य यज्ज्ञानं, तच्च प्रतिभा च ते आदिनी यस्य कौशलकलितसमुदायस्य, तेन उद्बुद्धो जागरितो यः संस्कारविशेषः स व्यञ्जनापदवाच्यः। एवञ्च वक्त्रादिवैशिष्ट्यहेतुका प्रतिभासम्पन्न-समवेतवाच्यान्यार्थधीः, तद्धेतुव्यापारत्वं व्यञ्जनात्वमिति सिद्धम्। अत्र संस्कारो हि प्रतिभोद्बुद्धो वक्त्रादिवैशिष्ट्यज्ञानञ्च प्रतिभासहकारि भवति। तेन वक्त्रादिवैशिष्ट्यसहकारेण वासनाविशेषरूपा प्रतिभा संस्कारविशेषमुद्बोधयति, व्यञ्जनायाः प्रतिभाजुषामेव विषयत्वं जन्मान्तरगृहीतत्वञ्च।

व्यञ्जनाया उपर्युक्तलक्षणे दलचतुष्टयं वर्तते तत्र प्रथमेन लक्षणा तावन्मुख्यार्थबाधे एव भवति, व्यञ्जना तु तन्निरपेक्षतया इति सूचितम्। द्वितीयेन लक्षणायां मुख्यार्थसम्बद्धताऽपरिहार्या भवति, व्यञ्जनायां तूभयत्र सामान्यमेवेति प्रतिपादितम्। तृतीयेन शक्तितो भिन्नेति प्रतिपादितम्। यतश्शक्तिः केवला प्रसिद्धार्थ-विषया, इयन्तु प्रसिद्धाप्रसिद्धार्थविषया। चतुर्थेन वक्त्रादिना सहकारिकारणानि प्रदर्शितानि। एतेन व्यञ्जना पृथगेव वृत्तिः। न सा लक्षणया गतार्था, नापि सा शक्तिरिति चाग्रे प्रतिपादयिष्यामः।

**व्यञ्जनायाः सद्भावः वैयाकरणानां तदावश्यकत्वञ्च -**



व्यञ्जनायाः स्वीकारादेव निपातानां द्योतकता स्फोटस्य व्यङ्ग्यता च सिद्ध्यतीति

हर्यादिभिरुच्यते। तत्र च कारणं केवलानां निपातानां प्रयोगादर्शनात्तेषां मुख्यार्थाभावेन लक्षणाया असम्भवात्। यतो लक्षणा तु मुख्यार्थबाधे सत्येव प्रवर्तते। यदा तु एषां मुख्यार्थ एव नास्ति तर्हि कुतो वा लक्षणायाः प्रसक्तिः? अत एव वैयाकरणैः निपातानां वाचकत्वं वदतां तार्किकानां मतं निरस्य द्योतकत्वं तेषां स्वीक्रियते। **द्योतकत्वं तु स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वमिति।** स्वं नाम निपातपदं तेन समभिव्याहृतं सहोच्चारितं यत् पदं तत्पदनिष्ठा या शक्तिः तस्याः व्यञ्जकत्वमुद्बोधकत्वमिति यावत्। एवमेव स्फोटात्मकस्य शब्दस्य अर्थस्य च व्यङ्ग्यता = प्रतीयमानता च सिध्यति। तदुक्तं हर्यादिभिः **"निपाता द्योतकाः केचित्" "व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः"** इत्यादिरीत्या। अतश्शाब्दिकैरियमवश्यमङ्गीकार्या।

इयं च नियन्त्रितार्थविषयकबोधजनकत्वरूपा शब्दव्यञ्जना, वक्त्रादिवैशिष्ट्यमूला या प्रतिभाशालिनामन्यार्थधीः तद्धेतुव्यापार-रूपाऽर्थनिष्ठा इति द्विविधा।

**व्यञ्जनाविषये नैयायिकमतानुवादः -**

नैयायिका हि व्यञ्जना न पृथग्वृत्तिः, सापि शक्तिलक्षणान्तर्भूता शब्दशक्तिमूलाऽर्थशक्तिमूला चानुमानादिनाऽन्यथासिद्धेति वदन्ति। व्यञ्जके पदे नानार्थबोधकत्वं यदि तदा "दूरस्था भूधरा रम्या" इत्यत्र भूधरपदेन शैलानामिव नृपतीनामपि शक्त्यैव बोधो निर्वहेत् अतो व्यञ्जना शक्त्यन्तर्भूता। "गङ्गायां घोष" इत्यादौ तु शैत्यपावनत्वादिविशिष्टप्रतीतिः जहल्लक्षणयैव निर्वहति, तत्र शैत्यपावनत्वादिविशिष्टतीराधिकरणकघोषतात्पर्येण प्रयुक्तत्वात् तथाविधतीररूपार्थस्य बोधे तत्तात्पर्यानुपपत्त्यात्मकबीजसत्त्वादिति अतो लक्षणान्तर्भूता सा। शब्दस्य गङ्गापदस्य या प्रवाहे शक्तिः सैव मूलं यस्याः सेति शब्दशक्तिमूला व्यञ्जना लक्षणान्तर्भूतेति आयातम्। अर्थशक्तिमूलापि अनुमानेऽन्तर्भूता। तथा हि – "गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्" इत्यादिस्थले हे प्रिय ! भवद्गमनोत्तरं मे प्राणवियोगो भविष्यति अतो न गन्तव्यमित्यर्थो यो व्यञ्जनाविषयः, सोऽप्यनुमानेन लभ्यते। तत्रानुमानप्रयोगः – "इयं मदीयगमनोत्तरकालीनप्राणवियोगवती, विलक्षणशब्दप्रयोगात्" इत्यादिरीत्या सर्वविधा व्य-

ञ्जना शक्तिलक्षणाभ्यां गतार्थैति वदन्ति।

**नैयायिकमतनिरासः -**

पूर्वोक्तरीत्या व्यञ्जनाया गतार्थतां वदतो नैयायिकान् प्रति अस्माभिरिदमुच्यते यद् व्यञ्जनाया स्वरूपकथनवेलायामेवास्माभिः पूर्वोक्तानामंशानां निराकरणं कृतम्। तथा हि - व्यञ्जनाया कथितलक्षणे प्रथमेन दलेन व्यञ्जना न लक्षणया गतार्था इति सूचितम्। लक्षणा तावन्मुख्यार्थबाधे एव भवति, व्यञ्जना तु तन्निरपेक्षतया इति। द्वितीयेन लक्षणा मुख्यार्थसम्बद्धतामपेक्षते-ऽपरिहार्यतया, व्यञ्जना तूभयसाधारण्येन प्रवर्तते। तृतीयेन शक्तितो भिन्नेति प्रतिपादितम्। यतश्शक्तिः केवला प्रसिद्धार्थविषया, इयन्तु प्रसिद्धाप्रसिद्धार्थविषया। चतुर्थेन वक्त्रादिना सहकारिकारणानि प्रदर्शितानि। तद्धि अर्थनिष्ठव्यञ्जनाया विषये अपेक्षते। एतेन व्यञ्जना पृथगेव वृत्तिः। न सा लक्षणया गतार्था, नापि शक्त्येति।

सम्प्रति व्यञ्जनाया अनुमानेनान्यथासिद्ध्या गतार्थत्वेना-ऽनपेक्षितत्वमिति नैयायिकोक्तिर्नातीवादरणीयेति काव्यप्रकाशादि-शास्त्रकृदनुसारेणोदाहरणेनैकेन स्फुटीक्रियते। तथा हि –

**भ्रम धार्मिक ! विश्रब्धः स शुनकोऽद्य मारितस्तेन।**
**गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥**

(गाथा सप्तशती, २ शतकं, ७५ श्लोकः)

कस्याश्चित् पुंश्चल्या गोदावरीतीरे भ्रमन्तं धार्मिकं कञ्चित् पुरुषं प्रति तत्र तीरे भ्रमणं निवारयितुं वाक्यमिदम्। तत्र तस्य भ्रमणेनास्याः स्वनायकेन सह रतिक्रीडायां बाधस्य प्रसक्तत्वाद्। शुनोऽपि बिभ्यत् स तीरे सिंहसद्भावान्न भ्रमणे प्रवर्तिष्यत इति तस्या आशयः। स एव च व्यङ्ग्यार्थः प्रकृते। अयञ्च व्यङ्ग्यार्थो नैयायिकोक्तरीत्या अनुमानान्तर्भावादन्यथैव सिद्ध्यति। तथा च प्रयोगः –

१. गोदावरीतीरं भीरुभ्रमणयोग्यम् (प्रतिज्ञा-साध्यनिर्देशः)



२. भयकारणसिंहोपलब्धेः (हेतुः)

३. यद्यद् भीरुभ्रमणयोग्यं तत्तद् भयकारणाभाववद्यथा गृहम् (उदाहरणम्)

४. न चेदं तीरं भयकारणाभाववत्, सिंहोपलब्धेः (उपनयः)

५. तस्माद् भीरुभ्रमणायोग्यम् (निगमनम्)

इत्यनयाऽनुमानप्रक्रिययैव नैयायिका व्यङ्ग्यार्थस्य प्रतीतिर्जायते नात्र व्यञ्जनाख्यपृथग्वृत्तेः कल्पनाऽऽवश्यकीत्याहुः। तन्न विरुद्धानैकान्तिकस्वरूपासिद्धादिहेत्वाभासरूपानेकदोषग्रस्तत्वादस्याः। तथा हि – प्रकृते नैयायिकैः भीरुभ्रमणायोग्यत्वरूपसाध्यमनुमातुं सिंहोप-लब्धिरूपहेतुः प्रदर्शितः। स च न सद्धेतुः, अपितु अनैकान्तिको हेत्वाभास इति। यत्र यत्र भीरुभ्रमणं तत्र तत्र भयकारणाभाव इति व्याप्तेरसत्त्वात्। सत्यपि भयकारणे गुरोः प्रभोर्वा निर्देशेन प्रियानुरागेण अन्येन चैवंभूतेन हेतुना भयकारणवति स्थले भीरूणां भ्रमणदर्शनाच्च।

शुनोऽस्पृश्यत्वाद् बिभ्यदपि वीरत्वेन प्रकृतानुमाने हेतुभूतात् सिंहान्न बिभेतीति विरुद्धरूपहेत्वाभासस्यापि प्रकृते संभवः।

एवमेव प्रकृतहेतोः गोदावरीतीररूपपक्षे प्रत्यक्षादनुमानाद्वा न निश्चयः, अपि तु वचनात्। तच्च पुंश्चलीवचनम्, तस्य अनाप्तत्वादेवाप्रामाण्यम्। अतः स्वरूपासिद्धहेत्वाभासनामाऽसद्धेतु-रपि भवति। तस्माद्व्यञ्जनां विना धार्मिकभ्रमणाभावसिद्धिरनुमानेन न शक्या कर्तुम्। तुल्यरीत्याऽन्यत्राप्यनुमानेन न व्यङ्ग्यार्थसिद्धिरिति व्यञ्जनाऽवश्यमेवाभ्युपेयेति निश्चप्रचम्।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ
व्यञ्जनासिद्धान्तनिरूपणम् ॥

# अथ स्फोटसिद्धान्तनिरूपणम्

एतावताऽस्माभिः शाब्दबोधकारणीभूता वृत्तेस्तद्भेदानाञ्च निरूपणमकारि। इदानीं तद्वृत्त्याश्रयस्य स्फोटस्य निरूपणाय प्रकृत उपक्रमः। वृत्त्याश्रयश्च स्फोटात्मकः शब्द एव न तु ध्वन्यात्मक इति शक्तिसिद्धान्तनिरूपणप्रसङ्गसङ्गतौ प्राक् प्रतिपादितमेव। अत एव भगवान् पतञ्जलिरपि "अथ गौरित्यत्र कः शब्दः ?"इति प्रश्नमुद्भाव्य "येनोच्चारितेन सास्नालाङ्गुलककुदखुरविषाणिनां संप्रत्ययो भवति, स शब्दः" इति सिद्धान्तपरसमाधानेन स्फोटात्मकशब्दं परिभाषयन् स्फोटमेवादितः प्रतुष्टाव। एवं तर्हि कोऽसौ स्फोट इति जिज्ञासायां सामान्येनादौ तस्य परिचयं प्रस्तुत्य वाक्यरूपशब्दस्यैव वाचकत्वं, शब्दप्रमाणस्य सर्वसम्मतत्वात्तस्य प्रामाण्यञ्च निरूप्य ततो विशेषेण शास्त्रान्तरीयमतमतान्तरनिरसनपूर्वकसिद्धान्तप्रतिपादनं करिष्यते।

**स्फोटस्य सामान्येन सभेदः परिचयः –**

स्फुटत्यर्थोऽस्मादिति स्फोटः, स्फुट्यतेऽभिव्यज्यते वर्णैः इति वा स्फोट इति व्युत्पत्त्या यस्मादर्थाभिव्यक्तिर्ज्ञाता भवति स स्फोटशब्दवाच्य इति। वर्णपदवाक्यभेदेन स्फोटस्त्रिधा। तत्रापि जातिव्यक्तिभेदेन पुनः षोढा। अखण्डपदस्फोटोऽखण्डवाक्यस्फोट-श्चेत्यष्टौ स्फोटाः। अस्यायमाशयः – पदार्थविश्लेषणे मीमांसका जातेः प्राधान्यं मन्यन्ते, नैयाकिकास्तु व्यक्तेः। जातिर्नाम सामान्यं सत्ता वा याऽनेकव्यक्तिष्वनुगतधर्मेण समानरूपेण लभ्यमाना। यथा गोत्वम्। गोत्वं हि सामान्यरूपेण सर्वासु गोव्यक्तिष्वनुगततया लभ्यते। इयं जातिर्नित्या निरवयवा च। एतद्विपरीततया व्यक्तिस्तु द्रव्यं पृथक्पृथग् रूपेण दृश्यमानः पदार्थः यमाश्रित्य सोऽयमिति व्यवहार उपपद्यते। जातिशक्तिवादिनां

मते शब्दो हि प्रथमं जातिं बोधयति, किन्तु जातिस्तावद् व्यक्त्याश्रयणं विना स्वतन्त्ररुपेण नैव तिष्ठतीति। तेन जात्या सह व्यक्तेरपि बोधः पश्चात् शब्देनैव भवति। एतन्मते आकृतिरेव वाचिका वाच्या च। शब्दाकृति-र्वाचिकाऽर्थाकृतिर्वाच्येति। व्यक्तिशक्तिवादिनां मते द्रव्यं शब्दस्य विषयः, तेषां मते शब्दाकृत्याऽर्थाकृतिर्नैव ज्ञाप्यतेऽपितु पृथक्पृथक् शब्देभ्यः पृथक्पृथगर्थानां बोधो जायते। व्यक्तिः शब्दार्थ इति स्वीकारे एव लिङ्गवचनादीनामपि सिद्धिर्भवति। व्यक्तौ जातेरस्तित्वं त्वपरिहार्यरूपेण भवत्येव, तेन व्यक्तेः शब्दार्थत्वेन ग्रहणे व्यक्त्या सह जातेरपि बोधः शब्दाद्भवत्येव।

एवञ्च वर्णपदवाक्येभ्यो यदा वर्णपदवाक्याकृतीनां बोधोऽभिमन्यते, तासामर्थबोधकत्वञ्च तदा वर्णजातिस्फोटः, पदजातिस्फोटो वाक्यजातिस्फोटश्चेति स्फोटस्य त्रयो जातिगतभेदा भवन्ति। तथैव वर्णपदवाक्येभ्यो यदा वर्णपदवाक्यव्यक्तीनां बोधः स्वीक्रियते तासामर्थबोधकत्वञ्च तदा वर्णव्यक्तिस्फोटः, पदव्यक्तिस्फोटो वाक्यव्यक्तिस्फोटश्चेति त्रयो व्यक्तिगतभेदा भवन्ति। अनया रीत्या स्फोटस्य षड्भेदा निरूपिताः। इतोऽपि पदवाक्याश्रयणेना-खण्डपदस्फोटोऽखण्डवाक्यस्फोट इति समुच्चयेन अष्टौ प्रभेदाः स्फोटस्य सन्ति। सारल्येन प्रभेदज्ञानायेत्थमपि सङ्ग्रहो वक्तुं शक्यः। वर्णस्फोटो द्विविधः – वर्णजातिस्फोटो वर्णव्यक्तिस्फोटश्च। पदस्फोटः त्रिविधः – पदजातिस्फोटः, सखण्डपदव्यक्तिस्फोटो-ऽखण्डपदव्यक्तिस्फोटश्च। वाक्यस्फोटोऽपि त्रिविधः – वाक्यजाति-स्फोटः, सखण्डवाक्यव्यक्तिस्फोटोऽखण्डवाक्यव्यक्तिस्फोटश्च।

**वाक्यस्फोटस्य प्राधान्यम् –**

उपर्युक्तेषु स्फोटभेदेषु वाक्यस्फोटो मुख्यः। कुतोऽस्य सर्वापेक्षया प्राधान्यमिति चेल्लोके वाक्यस्फोटस्यैवार्थबोधकत्वं तेनैवार्थपरिसमाप्तिश्च मन्यते। यतो लोके न वर्णो नापि पदं निराकाङ्क्षरूपेण ज्ञानं जनयितुं समर्थम्। वाक्यं हि व्यवहारे शक्तिग्रहसाधनमिति तस्मान्निराकाङ्क्षरूपेण ज्ञानं तु वाक्यादेव भवितुमर्हति। तदित्थमुदाहरणेन स्पष्टं भविष्यति। तथा हि – केनचिद्यदि केवलं 'क-ख' इत्यादि-

कमुच्चार्यते तर्हि केवलं ककारः खकारः अनेन प्रयुक्त इति मात्रं बोधो भवति। ततः पुनः किमिति आकाङ्क्षा तु नैव शाम्यति। एवमेव यदि 'गच्छति' इति पदमात्र-प्रयुक्ते सति को गच्छति? कुत्र, केनेत्याद्या आकाङ्क्षा उत्पद्यन्ते। यदा तु 'रामः यानेन ग्रामं गच्छति' इति पूर्णं वाक्यं प्रयुज्यते तदा त्वर्थस्य समाप्तेर्नान्याऽऽकाङ्क्षोदेति। अनेनोदाहरणेन स्पष्टं जायते यल्लोके वाक्येनैवार्थावबोधोऽर्थस्य परिसमाप्तिश्च जायते। तत्र किं नाम वाक्यमिति चेन्न्यायभाष्यकारो वक्ति – **"पदसमूहो वाक्यमर्थसमाप्तौ"** इति। अत्र समर्थमिति योजनीयम्। एवञ्च पदसमूहोऽर्थसमाप्तौ समर्थं वाक्यमिति लक्षणं फलति। अस्य तु अयमर्थः पदानां = सुप्तिङन्तानां विभक्त्यन्तानां शब्दानां स समूहः = समुच्चयः वाक्यं भवितुमर्हति योऽर्थस्य = अभिप्रायस्य परिसामाप्तौ सति निराकाङ्क्षत्वेनार्थावबोधे समर्थम्।

**अत्र प्रश्नः** – यद्यखण्डात् समस्तात् वाक्याद् बोधो जायते चेत् कथं तत्र पदानां प्रकृतिप्रत्ययानां च प्रतीतिः पृथक्तया भवतीति?

**अत्रोत्तरम्** – यद्यपि **"पदसमूहो वाक्यमर्थपरिसमाप्तौ समर्थम्"** इति वाक्यलक्षणेन समुदितस्य वाक्यस्यैव अर्थावबोधकत्वं वर्तते तथापि प्रतिवाक्यं समेषामपि सङ्केतग्रहः (वाच्यवाचकरूपसम्बन्धज्ञानम्) न सम्भवति। एवमेव निराकाङ्क्षज्ञानसाधनभूतवाक्यान्वाख्यानमपि सरलया रीत्या न सम्भवति। यतो वाक्यान्वाख्यानपक्षे समुदितस्य वाक्यस्यैवार्थपरिकल्पनं तस्माज्जायमानबोधस्य वा परिकल्पनं क्रियते, तत्तु सर्वेषां न सुकरः। अतः प्रकृतवाक्ये पदानां विभागः पदेषु प्रकृतिप्रत्ययविभागश्च कल्प्यते। कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः। तस्मादेव वाक्ये अवास्तविकानां पदानां पदेषु प्रकृतिप्रत्ययानां च पृथक्पृथक् प्रतीतिर्भवति। तत्सत्त्वे तत्सत्त्वमन्वयः, तदभावे तदभावो व्यतिरेक इत्युच्यते। यथा घटशब्दसत्त्वे कम्बुग्रीवादिमदर्थस्य प्रतीतिः, घटशब्दाभावे तु न। एवमेव घटमित्यत्र अम् इति सत्त्वे कर्मत्वस्य प्रतीतिः तदभावे तु नेति कल्पनयाऽर्थसंयोजना क्रियते शास्त्रे। अयं सर्वोऽपि विभागः शास्त्रप्रक्रियानिर्वाहाय कल्पितोऽवास्तविक इत्यर्थः। तदुक्तं वैयाकर-

णभूषणकारिकायामपि – **"पञ्चकोषादिवत्त-स्मात् कल्पनैषा समाश्रिता"** इति। यथा शुद्धब्रह्मज्ञानार्थमन्नमय-प्राणमयमनोमयविज्ञानमयानन्दमयेति पञ्च कोषान् कल्पयाञ्चक्रुः महर्षयः, यथा वाऽरुन्धतीज्ञानार्थं स्थूलनक्षत्रेऽपारमार्थिकारुन्धतीत्व-कल्पनम्, तथैव पारमार्थिकाखण्डवाक्यार्थबोधार्थं वर्णपदवाक्य-स्फोटकल्पना पञ्चकोषकल्पनेव उपायस्वरूपेति। उक्तञ्च हरिणा –

**उपायाः शिक्षमाणानां बालानामुपलालनाः।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥ इति।**

(वाक्यपदीयम्, वाक्यकाण्डम् - कारिका २३८)

अस्माकं वैयाकरणां मते सर्वे शब्दा नित्या इति परमसिद्धान्तः। एतादृशवि-भागस्य सत्त्वे त्वस्माकं परमसिद्धान्ते शब्दनित्यताया हानिप्रसङ्गः।

**वर्णस्फोटस्यावश्यकता –**

एतावताऽस्माभिर्ज्ञातं यत् वाक्यस्फोटो लोकेऽर्थावबोधकः, अत स एव नि-त्यो मुख्यश्च। तथापि शास्त्रप्रक्रियानिर्वाहाय वर्णस्फोटो नाम पदावयवस्फोटोऽपि प्रकृतिप्रत्ययसम्बद्धोऽवश्यमेवाङ्गीकर्तव्यः। वर्णस्फोटशब्दस्यायमाशयो यत् पदा-वयवत्वेन प्रकल्पिताः प्रकृतिप्रत्ययाः तत्तदर्थवाचका भवन्ति। यथा 'भवति' इत्यत्र 'भू' इति प्रकृतेः सत्तायामर्थे तिप्प्रत्ययस्य कर्तरि शक्तेर्बोधेन प्रकृतिप्रत्यययोरेववा-चकत्वम्। न तु प्रत्येकं वर्णस्य। वर्णानां तु आनर्थक्यमेव। तेन वर्णशब्देनात्र प-दावयवः प्रकृतिप्रत्ययरूप एव स्वीक्रियते। पदावयवानां विभागः काल्पनिकः इति पूर्वमेव निरूपितम्। तेन उपसर्गाः प्रादयः क्रियायोगे, निपाताः चादयोऽसत्त्वे, धा-तवो भूवादय एवं विधीयमानाः तत्तत्प्रत्ययाः इत्येवं सर्वोऽपि विभागः काल्पनिकः, न तु वास्तविकः। एवमेव स्थानित्वेन सम्मता लकारादयः तेषां स्थाने आदेशत्वेन जायमानाः तिबादिप्रत्ययाः काल्पनिका एव। स्थान्यादेशयोर्मध्ये स्थानित्वेनाभि-मतानां लकारादीनां कल्पिता अर्थाः शास्त्रकारैः कण्ठरवेणैवोक्ताः। यथा "लः क-र्मणि च भावे चाकर्मकेभ्यः" इत्यादि। आदेशानां तिबादीनां तु स्थानिनां लादीनां येऽर्थाः तेषामर्थानामभिधानसामर्थ्यादादेशता सिध्यतीति "स्थानेऽन्तरतमः" इति

सूत्र-भाष्याल्लभ्यते। तत्र यदुच्चारणप्रसङ्गे यदुच्यते तत्तदर्थं बोधयति इत्युक्तम्। यथा दन्तस्य स्थाने ददादेशः इति। अनेन स्पष्टं यत् स्थानिनां वाचकत्वमुत आदेशानामिति सर्वोऽपि विचारः निष्फल एव। अत्रेदं ज्ञेयम् – मीमांसका हि वर्णानां वाचकत्वमङ्गीकुर्वन्ति। नैयायिकाः स्थानिनां लादीनामेव वाचकत्वं मन्यन्ते। प्राचीनवैयाकरणास्तावदादेशानां तिबादीनां वाचकत्वं मन्यन्ते यतस्तेषामेव व्यवहारयोग्यत्वं दृश्यते। कल्पितवाचकत्वं स्थान्यादेशयोरुभयोरपि तुल्यम्। मुख्यं वाचकत्वं तु कल्पनया बोधितसमुदायरूपे पदे वाक्ये वा भवति। यतो लोके सर्वेषां पदाद्वाक्याद्वाऽर्थस्य बोधो भवति।

**अत्र प्रश्नो** भवति यत् पाणिनिव्याकरणे "अस्तेर्भूः" इत्यनुशासनेन 'अस्' इति स्थानी 'भू' इत्यादेशः इति मत्वा अस्-धातोः लिट्लकारे बभूव इत्यादिरूपाणि साधितानि। आपिशलिव्याकरणे तु 'भू' इति स्थानी 'अस्' इति आदेशः इति मत्वा आसीद् इत्यादिरूपाणि साधयन्ति। तर्हि व्याकरणभेदात् स्थान्यादेशयोर्भेदे कथं तेषां वाचकत्वनिर्णयः कर्तव्यः ?

**अत्रेदं समाधानं** यद् यथा देशभेदात् लिपिभेदो जायते न तु पदार्थः भिद्यते, तथैव व्याकरणभेदात् स्थान्यादेशभेदो जायते। तेन प्रकियायामेव भेदः, न तु लक्ष्ये (शब्दरूपे)। अतः न काऽपि क्षतिः। य एते स्थान्यादयः ते लक्ष्यस्य साध्यस्य वा सिद्धये प्रकल्पिता उपाया अनिश्चिता एव तत्र न कोऽपि निर्बन्धः। यथोक्तं वैयाकरणभूषणकारिकायामपि दीक्षितेन **"उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः"** अर्थात् उपेयस्य = साध्यस्य, प्रतिपत्त्यर्थाः = ज्ञानार्थाः, उपायाः = साधनभूताः स्थान्यादयः, अव्यवस्थिताः = अनिश्चिता इति। एतावता वाक्यरूपशब्दस्य वाचकत्वं निरूप्य तस्य प्रमाण्यं प्रतिपाद्यते।

**शब्दप्रामाण्यनिरूपणम् –**

लोके प्राधान्येन हि प्रमात्मकस्य यथार्थभूतस्य ज्ञानस्य सिद्धये चत्वारि करणानि सम्मतानि तानि प्रत्यक्षम्, अनुमानम्, उपमानं शब्दश्चेति। तदुक्तं न्यायसूत्रकृता गोतमेन – **"प्रत्यक्षानुमानोपमान-शब्दाः प्रमाणानि" (न्या.सू. १-१-३) इति।**

तत्र प्रमायाः करणं प्रमाणमिति। प्रमा च यथार्थज्ञानम्, तस्य यत्करणं तत् प्रमाणमिति समन्वयः। वैयाकरणैरेतैः सहार्थापत्तिः, अनुपलब्धिः, अभ्यासः अदृष्टश्चेति चत्वारि अधिकतया स्वीकृतानि। एवमन्यैः शास्त्रान्तरीयैः स्वस्वमतरीत्याधिकानि न्यूनानि वा स्वीकृतानि तथापि प्रत्यक्षानुमा-नोपमानशब्दा एतानि चत्वारि प्रमेयसिद्धये प्राधान्यं भजन्ते।

वृत्त्याश्रयः शब्द इति तु पूर्वमेवोक्तम्। स च शब्दः प्रमाणेष्वप्यन्तर्भवति। अत्र जिज्ञासा जायते यत् किं येन केनचित् प्रयुक्तः सर्वोऽपि शब्दः प्रमाणं वा? इति चेत् सर्वोऽपि शब्दः प्रमाणतयास्माभिर्नैवाङ्गीक्रियते। तर्हि कीदृशः शब्दः प्रमाणं स्यात्? इत्युक्ते "आप्तोपदेशरूपः शब्द एव प्रमाणम्"। आप्तस्तु अनुभवेन = स्वानुभूतज्ञानद्वारा वस्तुतत्त्वस्य = पदार्थानां वास्तविकज्ञानस्य सर्वतोभावेन निश्चयवान् = इदमित्थमिति निश्चितसिद्धान्तवान्, न तु संशयेन भ्रान्तः, रागादिवशादपि अर्थाद्विषयासक्त्या मोहलाभद्वेषा-दिवशादपि यो नान्यथावादी = मिथ्यावादी न भवति, स एव इति चरकशास्त्रे आचार्येण पतञ्जलिनोक्तम्। तस्माल्लोके एतादृशेन आप्तेन शिष्टेन प्रयुक्त शब्द एव प्रमाणम्, वैदिकं तु सर्वमपि वाक्यं प्रमाणमिति ज्ञातव्यम्।

अनया रीत्या स्फोटस्य सामान्येन सभेदः परिचयः प्राप्तः। इदानीं मतमतान्तरपूर्वकं शाब्दिकनये को मुख्यः सिद्धान्तः स्फोटविषय इति ज्ञास्यामः।

**मीमांसकमतानुवादः –**

अत्र यो वृत्त्याश्रयोऽष्टविधः स्फोटात्मकः शब्द उच्यते तत्र अष्टविधेषु कतमो वृत्त्याश्रयो भवति? इति चेन्मीमांसका वर्ण इति वदन्ति। वर्णनित्यतावादिनो हि मीमांसकाः वर्णानां नित्यतामङ्गी-कुर्वन्तोऽपि न तस्य स्फोटरूपत्वमङ्गीकुर्वन्ति। ते वर्णानां प्रत्येकम-र्थस्य वाचकत्वमङ्गीकुर्वन्ति। तेषां मते गौरित्यत्र गकारौकारविसर्जनीयाः शब्दः। वर्णा एव समुदायभावापन्नाः पदव्यपदेशभाजः सन्तोऽर्थानां वाचका भवन्ति, तेषामेवार्थेन सह शक्तिरूपः सम्बन्धः। गौरित्यत्र वर्णा एव शब्दः। न च स्फोटात्मकः शब्दः, वर्णत्रयातिरिक्तस्य स्फोटस्य बुद्ध्यविषयत्वात्।

**मीमांसकमतखण्डनम् –**

वर्णाः प्रत्येकमर्थवन्तो वृत्त्याश्रया इति मीमांसकोक्तं न सम्यक्। **तत्रेदं ज्ञातव्यम् –** वर्णानां प्रत्येकं वाचकत्वमुत वर्णसङ्घातस्य इति निर्णयः कर्तव्यः। न हि वर्णानां प्रत्येकं वाचकत्वं सम्भवति। तथा च प्रथमेनैव बोधसम्भवाद्वितीयादिवर्णोच्चारणमेव व्यर्थं स्यात्। यदि गौरित्यत्र गकारस्यैव वाचकत्वं तदा औकारविसर्जनीयोच्चारणं व्यर्थमेव। किञ्चैवं धनं वनमित्यादौ प्रत्येकमर्थवत्त्वे प्रतिवर्णं सुबुत्पत्तिनलोपादिप्रसङ्गश्च स्यात्तत्तद्वर्णस्यार्थवत्त्वात्।

अस्तु तर्हि वर्णसङ्घातस्य वाचकत्वमिति चेत्तदपि न सम्भवति। उच्चरितप्रध्वंसित्वात्। यत उच्चारणकालाव्यवहितोत्तरकाल एव प्रध्वंसिनां क्षणमात्रस्थायिनां वर्णानां सङ्घात एव भवितुं नार्हति। सङ्घातस्तु समकालोपस्थितानामेव भवति। यथोक्तं तार्किकैः – योग्यविभुविशेषगुणानां स्वोत्तरवर्तियोग्यविभुविशेषगुणनाश्यत्वेनैककालावच्छेदेन वर्णसमुदायासम्भवेन वर्णसङ्घात दुर्लभः। एवञ्च वर्णानां यौगपद्यासम्भवेन समुदायस्यासम्भवः। वर्णविषये उत्पत्तिपक्षोऽभिव्यक्तिपक्षश्च। उभयपक्षेऽपि क्षणात्मककालावच्छिन्न एव वर्णः, तदात्मककालस्य यथा प्रत्यक्षत्वासम्भवस्तथैव तत्कालावच्छिन्नवर्णस्यापि क्षणात्मकत्वं सिद्ध्यति।

क्षणिकवादिभिस्तूच्चारणकाल एव विनाशित्वमुच्यते वर्णानाम्, अस्माभिरप्युच्चरितप्रध्वंसित्वात्समुदायासम्भव इत्युच्यते तथापि क्रियायाः क्रमिकत्वादुच्चारणप्रध्वसंयोः यौगपद्यासम्भवः। तथा हि वर्णोच्चारणस्य योऽधिकरणकालः यस्मिन् काले वर्ण उच्चार्यते, तस्मादुत्तरकालः = अव्यवहितानन्तरवर्तिकालः, तस्मिन् वृत्तिध्वंसः = स्थितिनाशः, तस्य प्रतियोगित्वमेवोच्चरितप्रध्वंसित्व-मिति। यतो हि वर्णा उच्चारणकालाव्यवहितोत्तरकालविनाशिनः। एवञ्च एतादृशोत्पत्तिविनाशिवर्णानां समुदायस्यैककालावच्छेदेन कथमप्यसम्भवः, तेन समुदायस्यापि वाचकता न सम्भवतीति कथनस्याभिप्रायः। अनेन वर्णो यस्मिन् क्षण उत्पद्यते तस्मिन्नैव क्षणे नश्यतीति वादोऽपि निरस्तः। अत्र च प्रमाणं –"इको यणचि" (पा.सू. ६-१-७७) इति सूत्रार्थबोधाय व्यवस्थार्थं "तस्मिन्निति निर्दिष्टे पूर्वस्य" (पा.सू. १-१-६६)

इति सूत्रमुपतिष्ठते। तेन च पूर्वत्वस्याव्यवहितत्वस्य चोपस्थितिर्भवति। तेन "इको यणचि" इत्यचि विधीयमानं कार्यमव्यवहितपूर्वस्य भवतीति वाक्यार्थो सम्पद्यते। यदि वर्णानामुत्पत्तिक्षण एव विनाशः स्यात्तर्हि नष्टस्य वर्णस्य प्रत्यक्षत्वाभावात् कश्च पूर्वः, कश्च पर इत्यादिव्यवहार एव न स्यात्। तदभावे हि "इको यणचि" इत्यादि-सूत्राणामेवाप्रवृत्तिः स्यात्, तत्तत्सूत्रार्थज्ञानाभावात्। अनेन मीमांसकोक्तं वर्ण एव वाचक इति मतं निरस्तम्।

**नैयायिकमतानुवादः –**

अत्र नैयायिकमतानुवादे सन्ति त्रयः कल्पाः। तथा हि –

(१) वर्णानामनित्यत्वेऽपि येषां येषां वर्णानामुच्चारणं श्रुतं तेषां तेषां वर्णानां सं-स्कारः तद्बुद्धौ सञ्जायते येन पश्चाद्वर्तिवर्णानामुच्चारणकालेऽपि पूर्वपूर्वोच्चारितवर्णा गृहीता भवन्ति अव्यवहितोत्तरत्व-सम्बन्धेन। एवमुत्तरोत्तरवर्णैः सह पूर्वपूर्ववर्णा-नां गृहीतत्वेन पदं प्रत्यक्षतामायाति यतः शाब्दबोधः सम्भवति।

(२) अथवा शब्दजशब्दन्यायेन वीचीतरङ्गन्यायेन वा चरमवर्णप्रत्यक्षपर्यन्तं प-दप्रत्यक्षोपपत्तिः। **अयं भावः** – यथा हि भेर्यादिभिरुत्पादितः कश्चिच्छब्दः स्वविना-शात्पूर्वमेव शब्दान्तरमुत्पा-दयति सजातीयं, यथा वोत्पन्ना वीचिः स्वप्रलयात्प्राग् वीच्यन्तर-मुत्पादयति तथैव शब्दाच्छब्दान्तरोत्पत्तिरिति न्यायेन पूर्वपूर्वोच्चरित-वर्णास्तावत्पर्यन्तं स्वसजातीयध्वनिमुत्पादयन्ति यावत्पर्यन्तं श्रोता चरमवर्णं न शृ-णोति। इत्थं चरमवर्णश्रवणकालपर्यन्तं पूर्वपूर्वोच्चरि-तवर्णानामुत्पद्यमानत्वात् स-मस्तं पदं प्रत्यक्षताया विषयो भवति।

(३) अथवा पूर्वपूर्ववर्णानां (प्रागुच्चरितवर्णानां) योऽनुभवस्तज्जन्यो यः संस्कारः तस्य सहचरो यश्चरमवर्णस्तस्यानुभवात् पदप्रत्यक्षत्वं, तेन च शाब्दबोधो जायते।

अनया रीत्या नैयायिकास्त्रिविधकल्पैः वर्णानामनित्यत्वेऽपि शाब्दबोधो जायत इति वदन्ति।

**नैयायिकमतखण्डनम् –**



पूर्वोक्तरीत्या वर्णानित्यतावादिनो नैयायिकाः पदप्रत्यक्षता-विषये यत् प्र-

तिपादयन्ति तदयुक्तम्। तत्र प्रथमे कल्पे अयं पूर्वः, अयं परः इति व्यवहारो नोपपद्यते। तन्मते वर्णानामनित्यत्वात् पूर्ववर्णस्याभावात्तदुत्तरवर्णे नाम नष्टविद्यमानयोर्मध्येऽव्यवहितोत्त-रत्वसम्बन्ध एव उपपादयितुमशक्यः। अव्यवहितोत्तरत्वसम्बन्ध तत्रैव सम्भवति यत्रैककालावच्छेदेन द्वयोः पदार्थयोः सद्भावः।

द्वितीये तु शब्दजशब्दन्यायेन यद्यपि पदप्रत्यक्षोपपादनं सम्भवति तथापि तत् पदं न विद्यमानम्। एवञ्च तस्मिन् शक्त्याश्रयताया ज्ञानस्यानुपपत्तिः स्पष्टैव। यदि अविद्यमानेऽपि पदे वृत्त्याश्रयता स्वीक्रियते तदा नष्टो घटो जलवानित्याकारकज्ञानस्यापि प्रमात्वं स्यात्। दृष्टान्तानुसारेण यया रीत्या नष्टे (अविद्यमाने) घटे आधेयस्य जलस्य आश्रयता न सिद्ध्यति तयैव रीत्याऽविद्यमाने पदे वाच्यार्थबोधकवृत्तेराश्रयताया असम्भव इत्यर्थः।

तृतीये त्वनुभवानुसारं संस्कारेऽपि क्रम इत्यनुभवविरुद्धम्। पूर्वपूर्ववर्णजन्यसंस्कारविशिष्टचरमवर्णानुभवेन शाब्दबोध इति मते वर्णक्रमेणैव संस्कारक्रम इति विनिगमकाभावात् क्रमस्य विपरीत-बोधेन ततोऽनभीष्टार्थोऽप्यापद्येत नदी दीनः, सरो रस इत्यादौ। किञ्च वर्णानामुत्पत्तिस्वीकारे तत्र भेदस्याप्यनिवार्यता। यथोत्पत्ति-मत्सु मनुष्येषु भेदो दृश्यते तथैवोत्पत्तिविनाशवतां वर्णानां समुदायरूपपदस्यापि भेदोऽङ्गीकरणीयः। तथा सति "एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत्सर्वयागेष्वङ्गं भवति" (म.भा. १-२-६४) इति भाष्यस्यापि विरोधः स्यात्। तत्र भाष्ये प्रादुर्भूत इत्यस्याभि-व्यक्त इत्यर्थ उक्तः, न तु उत्पन्नः। तेन वर्णानामुत्पत्तिपक्षो यो नैयायिकैरादृतः तन्मते भेदोऽवश्यमभ्युपेयः स अस्माकं मते न सङ्गच्छते, अस्माकं नये शब्दानां नित्यत्वात्। अस्माकं तु भाष्यस्यैव परमप्रामाण्यम्। किञ्च वर्णानामुत्तपत्तिपक्षे शब्दनित्याताहान्या शब्दार्थसम्बन्धस्यैव हानिः स्यादित्यस्ति महान् दोषः।

अनया रीत्या नैयायिकैः त्रिधा विकल्प्य पदप्रत्यक्षतां संसाध्य शाब्दबोधमुपपाद्यते, तन्न युक्तमिति आयातम्।



**स्फोटस्वरूपम् –**

इत्थं पूर्वोक्तरीत्या वर्णवादिनां मीमांसकानां पदवादिनां नैयायिकानां वृत्त्याश्रयविषये मतं प्रत्याख्याय कस्तर्हि वृत्त्याश्रयः शब्द इति चेत् – स्फोटात्मको हि वृत्त्याश्रयः शब्दः। स्फोटोऽन्तर्नाद आत्मा स्वरूपं यस्य स स्फोटात्मक इत्यर्थः। स च शब्दब्रह्मस्वरूपो मध्यमानादस्तस्य व्यञ्जक इत्येतत्सर्वमनुपदमेव वक्ष्यामः। एवन्तर्हि कोऽयं स्फोटो नामेति चेदुच्यते। चतुर्धा हि वाग् वर्तते – **परा, पश्यन्ती, मध्यमा वैखरी च।**

**परा वाक् –**

मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते। मूलाधारो = मूलप्रकृत्या-त्मिका कुण्डलिनी नाम षण्णवत्यङ्गुलो देहायामः, तत्राङ्गुलार्धसहितं सप्तचत्वारिंशदङ्गुलात्मकमधः उपरि च परित्यज्य एकाङ्गुलिपरिमितेन मध्ये मूलाधार उच्यते। यथोक्तम् –

**पाय्वङ्गाद्-द्वयङ्गुलादूर्ध्वं लिङ्गाच्च द्वयङ्गुलादधः।**
**मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते॥**

एवञ्च मूलाधारे = कुण्डलिन्यां स्थितो यः पवनः तत्संस्कारीभूता = तेन पवनेन संस्कारीभूता (ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारः) मूलाधारस्था = गुदलिङ्गान्तर्गतचतुर्दलचक्रगता, अनादिनिधनाख्या शब्दब्रह्मरूपा स्पन्दशून्या = क्रियाशून्या (पश्यन्त्यां स्पन्दसामान्यं, मध्यमायां तु स्पन्दविशेष इति बोध्यम्) बिन्दुरूपिणी परा वागभिधीयते। परा ह्यत्यन्तसूक्ष्मत्वेनाग्राह्यत्वात् सूक्ष्मेत्यपि कथ्यते। तदुक्तं – "**स्वरूप-ज्योतिरेवान्तः सूक्ष्मा वागनपायिनी**" इति।

**पश्यन्ती वाक् –**

यदा स वायु मूलाधाराद् नाभिपर्यन्तमागत्याभिहन्ति तदा वायुनाभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते। एषा तु लोकव्यवहारातीता मनसो विषया निरवयवैव किन्तु योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिः। अत्र हि पदार्था अवभासिता भवन्ति शब्दार्थाभिन्नत्वेन। पदार्थानां प्रकाशिकेत्येषा पश्यन्ती। एतद्द्वयं

वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषये इत्युच्यते।

**मध्यमा वाक् –**

ततो हृदयपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता तत्तदर्थ-वाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनि-ग्राह्या मध्यमा वागुच्यते। एवञ्च मध्यमा वाक् सा भवति यत्र शब्दो विशिष्टक्रम-माश्रित्य बुद्धौ प्रत्यवभासते। एषैव स्फोटात्मिका स्फोटव्यञ्जिका च। एषापि परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा। अत्रैव बुद्धिरर्थस्य कृते शब्दनिश्चयं करोति।

**वैखरी वाक् –**

ततो हृद्देशादास्यपर्यन्तामागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्राह्या वैखरी वागुच्यते। एवञ्च क-ण्ठदेशगा वैखरीति। एषा व्यक्तवर्णसमुच्चारणा प्रसिद्धसाधुभावा भ्रष्टसंस्कारा चा-प्युक्ता अपरिमितभेदा च। एषा परश्रोत्रग्राह्या वाग्व्यवहारसाधनभूता। एताश्चतस्रो वाचः कारिकयाऽनया सस्वरूपं सङ्गृहीताः। तथा हि –

**परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।**
**हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥**
**वैखर्या हि कृतो नादः परश्रवणगोचरः।**
**मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते॥ इति।**

अनया कारिकया चतसृणामपि वाचां स्वरूपं संक्षेपत उक्तम्। यद् यदा पवनः तत्तत्स्थानमभिहन्ति तदा तत्तत्स्थानेऽभिव्यक्तो पवनः तत्तन्नाम्ना व्यवह्रियते। त-दित्थं मूलचक्रस्था परा भवति, पश्यन्ती नाभिप्रदेशमागता, मध्यमा हृत्प्रदेशं प्राप्ता, वैखरी कण्ठप्रदेशमभिहत्य परश्रवणगोचरा वाग्व्यवहाररूपा। तदेवोक्तमृग्वेदेपि –

**"चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" ॥**

इति। तत्र चतसृष्वपि स्फोटव्यञ्जिका मध्यमैव। स्फोटरूपशब्दस्य व्यञ्जकस्तु मध्यमानादो वैखरीनादस्तु मध्यमानादस्य परश्रोत्रग्राहकः। तस्माद्वैखरी वाग्व्यव-

हाररूपा परश्रवणगोचरेति कथ्यते।

**अत्रायं विशेषः** – युगपदेव मध्यमावैखरीभ्यां नादः = ध्वनिरुत्पद्यते। तत्र मध्यमानादोऽर्थवाचकः स्फोटात्मकशब्द-व्यञ्जकः। वैखरीनादो ध्वनिः = शब्दः सकलजनश्रोत्रग्राह्यो भेर्या-दिनादवन्निरर्थकः। मध्यमानादस्तु वैखरीकृतनादापेक्षया सूक्ष्मः, अत एव सूक्ष्मतर इति उक्तिः, कर्णपिधाने जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दब्रह्मरूपस्फोटव्यञ्जकश्च। शब्दब्रह्मरूपस्फोटव्यञ्जक इत्यस्यायमर्थः – शब्दब्रह्मरूपो हि स्फोटः, स्फुट्यतेऽभिव्यज्यते वर्णैरिति स्फोटोऽर्थस्तस्य, स्फुटत्यर्थोऽस्मादिति स्फोटः शब्दस्तस्य च मध्यमानादो व्यञ्जकः प्रकाशक इति यावत्। तादृशमध्यमानाद-व्यङ्ग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च। मध्यमानादेन व्यङ्ग्यः प्रकाश्यः स्फोटात्मकः। शब्दः इति कथनेन मीमांसकोक्तो वर्णवादो निरस्तः, ब्रह्मरूपो नित्यश्चेति कथनेन नैयायिकोक्तः शब्दाऽनित्यतावादोऽपि निरस्तः।

**स्फोटात्मकस्य शब्दब्रह्मणः स्वरूपम् –**

प्रकृते प्रतिपाद्यमानस्फोटात्मकस्य वृत्त्याश्रयस्य नित्यस्य शब्दब्रह्मणः स्वरूपं वाक्यपदीय आरम्भे भर्तृहरिणा एवमुक्तम् –

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति॥**

(वाक्यपदीयम्, ब्रह्मकाण्डम् - १)

कारिकाया **अयं भावः** – सर्वमपि जगत् ब्रह्मणो विवर्तरूपम्। मायोपहितचैतन्यं = ब्रह्म जगद्रूपेण विवर्तते = अभिव्यज्यत इत्यर्थः। तद्वच्छब्दब्रह्मापि घटपटादिरूपेणाभिव्यक्तं भवति। एतदेव हि कारिकया स्पष्टीचकार वाक्यपदीयकारः। अनादिनिधनम् = उत्पत्तिविनाशरहितं प्रागभावध्वंसयोरप्रतियोगि कालपरिच्छेदातीतम् अवयवविभागशून्यं नित्यमित्यर्थः, अक्षरं = व्यापकं, क्षरणहीनं वा, अन्योन्याभावात्यन्ताभावयोरप्रतियोगि वस्तुदेशपरिच्छेदातीतम्, अश्नोतेर्वा सरोक्षरमिति भाष्यव्युत्पत्तेः। यद्वा अक्षराणि = वर्णाः अकारककारादयः तेषामभिव्य-

क्तेर्निमित्तमक्षरं, बुद्धिस्थं प्रत्यक्चैत-न्याभिन्नं ब्रह्मेति प्रोच्यमानं (यस्य बहिः परबोधनार्था बुद्धिवृत्तेरनु-ग्रहेण स्थानकरणेभ्यो विवृत्ता स्थूलवर्णसंघातरूपाऽभिव्यक्तिर्निष्पद्यते) यतो यस्मात् (उपादानकारणात्) "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिनिर्दिष्टाद् ब्रह्मणो जगतः = कार्यमात्रस्य प्रक्रिया = जन्मस्थितिविनाशरूपावस्थाभेदः, अर्थभावेन = घटपटादितत्तद्वाच्यार्थस्वभावतया, विवर्तते = शुक्तिरजतवत् स्वप्नविषयवद्वा मिथ्याभिन्नरूपोपग्रहेण लक्ष्यते। तद्ब्रह्म = अविभक्तस्वरूपं, वाच्यार्थभेदकल्पनामूलं, शब्दतत्त्वं = शब्दात्मकं शब्दाभिन्नमिति यावत्।

**अत्रेदं बोध्यम्** – उत्पत्तिर्द्विधा – परिणामो विवर्तश्च। तात्त्विकोऽन्यथाभाव आद्यः। यथा दुग्धस्य दधि परिणामः। अयथार्थोऽन्यथाभावो द्वितीयः। यथा रज्ज्वा विवर्तः सर्पः, शुक्तेश्च रजतम्। अत्र हि भ्रमवशादन्धकारादिकारणाद्वा रज्ज्वां यथा असत्यप्रतीतिः सर्पादीनां तद्वद्व्याकरणेऽपि पारमार्थिकनित्यशब्दस्य स्फोटात्मकस्य येनार्थप्रतीतिर्भवति, प्रकृतिप्रत्ययात्मिकापारमार्थिकी प्रतीतिः सा कल्पिता।

**स्फोटे भेदप्रतीतिः -**

**अत्र प्रश्नः** – वाचकत्वेनाभिमतं स्फोटरूपं शब्दात्मकं ब्रह्म एकं विभु नित्यमित्युच्यते तर्हि पूर्वोक्ता अष्टौ भेदास्तस्य कथमुपपद्येरन्? किञ्च तस्य भेदस्वीकारे एकत्वोक्तेरपि असङ्गतिः?

**अत्रोत्तरम्** – स च स्फोटो यद्यप्येकोऽखण्डश्च तथापि पदं वाक्यमिति व्यवह्रियमाणो जपाकुसुमादिलौहित्यपीतत्वादिव्यञ्जको-परागवशाल्लोहितः पीतः स्फटिक इति भानवद्वर्णादिव्यङ्ग्यो वर्णरूपः पदरूपो वाक्यरूपश्चाभिधीयते। यथा च मुखे मणिकृपाण-दर्पणव्यञ्जकोपाधिवशाद्दैर्घ्यवर्तुलत्वादिभानं तद्वत्।

**अयं भावः** – स मध्यमानादव्यङ्ग्यः स्फोट एकोऽखण्डश्च वर्तते। तथाप्यभिव्यञ्जकोपाधिवशात् पदरूपो वाक्यरूप इत्येवाष्ट-विधो भासते। व्यञ्जकरूपप्रतिबिम्बनात् तद्रूपरूषितैव स्फोटाभि-व्यक्तिरित्येकोऽपि नानात्वमिवापन्नः प्रतीयते। अयं भेदो न वास्तव इति तदर्थः। तदेव दृष्टान्तेन स्पष्टयति मञ्जूषाकृद् – यथा स्फटिकमणिरत्यन्तस्वच्छो रक्तादिवर्णरहित एव भवति किन्तु यदा जपाकुसुमादीनां सन्निधानं

भवति तदा रक्तादिवर्णानां प्रतीति-र्जायते। इयं हि प्रतीतिरौपाधिकी व्यञ्जकगतैव, न तु वास्तविकी। यथा वा मुखं स्वरूपे तिष्ठदपि मणिकृपाणदर्पणादिव्यञ्जकानां सम्पर्कात् तत्तद्वर्तुलाद्याकारं लभते। अत्रापि मुखमेकमेव तथापि तत्तद्व्यञ्जकोपाधिवशात् तत्तदाकारतया भासते, न तावता मुखस्य नानात्वं हि भवति। इयमपि भिन्नाकारप्रतीतिर्व्यञ्जकगतैवौपाधिकी, न तु वास्तविकी। एताभ्यां दृष्टान्ताभ्यां स्पष्टं यदेक एव स्फोटो वर्णपदवाक्याभिव्यञ्जकोपाधिभिर्नानारूपेण प्रतीयते। तेन न तस्य एकत्वोक्तेर्हानिः। तदेवाभिप्रेत्य भर्तृहरिरप्याह –

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।**
**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥ इति॥**

(वाक्यपदीयम्, ब्रह्मकाण्डम् - ७३)

अयमर्थः – पदे = वर्णसङ्घातत्वेन स्मृते पदे वर्णाः = कखगादयः न विद्यन्ते, वर्णेष्वपि अवयवाः = क्+अ इत्यादिरीत्या भागाः न सन्ति। एवमेव वाक्यात् = पदसमूहो वाक्यर्थसमाप्तौ इति परिभाषितात् पदानां = तदवयवत्वेन अभिमतानां सुप्तिङन्तानां कोऽपि प्रविवेकः = प्रविभागः पार्थक्यं वा नास्तीति। एवञ्च अखण्डवाक्यस्फोट एव मुख्य एकस्तस्यैव वर्णपदरूपोऽयं सर्वोऽपि विभागः काल्पनिक इति स्पष्टम्।

**स्फोटे व्यञ्जकधर्मावभासः -**

**अत्रैवं प्रश्नः** – यदि स्फोटोऽखण्डस्तर्हि कथं कत्वादिव्यञ्जकधर्माः स्फोटेऽवभासन्ते?

**अत्रोत्तरम्** – वस्तुतोऽखण्ड एव स्फोटः, नास्ति तत्र कत्वं गत्वं वा। तत्र यद्यदवभासते तद्व्यञ्जकधर्मस्यावभासमात्रम्। स्फोटे अवभासमानं कत्वादिकं व्यञ्जकध्वनिनिष्ठमेव न तु स्फोटनिष्ठम्, तस्यैकत्वात्। न ह्युपाधिकृतो मणिकृपाणादौ दृश्यमानो वर्तुलत्वादिधर्मस्तन्मुखस्य भवति, तद्व्यवभासमात्रम्। वर्तुलत्वादि-धर्मस्तु व्यञ्जके एव भवति न तु व्यङ्ग्ये मुखे। तद्वत् व्यञ्जकध्वनिगत एव धर्मः कत्वगत्वादिवर्णैरवभासते। स्फोटो हि व्यङ्ग्यो वर्णादिस्तद्व्यञ्जकः। व्यञ्जकधर्मो व्यङ्ग्ये प्र-

तिभासत एव। तेन व्यञ्जकध्वनिगतकत्वगत्वादीनां स्फोटे तद्व्यङ्ग्यत्वेनावभासनं युक्तमेव। यथा ह्येक एवाकाश उपाधिभेदेन तत्तद्धर्मयुक्तो भिन्नत्वेनावभासते घटाकाशो महाकाश इत्यादौ यथा वैकस्यैव चैतन्यस्य शरीरब्रह्माण्डाद्युपाधिवशात्तत्तद्धर्मविशिष्टस्य जीवेश्वरभेदो यथा वैकत्वेऽपि जीवस्य शरीरमाश्रित्य भेदस्तथैव एकोऽप्यखण्डो-ऽपि स्फोट उपाधिवशात् कत्वाद्यनेकरूपेण विभक्त इव प्रतिभाति। एवञ्चौपाधिको भेद इत्यत्रोपाधिः घटकत्वादिर्भिन्नः (घटाकाशदृष्ट्या घटः, करूपस्फोटदृष्ट्या कत्वमित्याद्यर्थः) उपधेयस्तु आकाशस्फोटादिरेक एवेति तात्पर्यम्।

**पुनः प्रश्नः** – पूर्वोक्तं स्फोटस्याखण्डत्वपक्षे सम्भवति, पदवाक्ययोः सखण्डत्वपक्षे स्थितानां मते स्फोटस्यैकत्वं कथं वा स्यात्?

**अत्र समाधानम्** – पदवाक्ययोः सखण्डत्वपक्षे त्वन्तिम-वर्णव्यङ्ग्यः स्फोट एक एव। तावता पूर्वपूर्ववर्णानामानर्थक्यं तु न तेषां तात्पर्यग्राहकत्वात्। न्यायनये चित्रगुरित्यादौ चित्रादिपदवत्।

**अयं भावः** – नैयायिका हि समासे व्यपेक्षावादमाश्रयन्ति। ते हि शाब्दिकानामिव समासे विशिष्टां शक्तिं नाङ्गीकुर्वन्ति। तन्मते पृथक्-पृथक्पदानां तत्रापि पृथक्पृथगेवार्थः। लक्षणया अवयवभूतपदैरेव समस्तपदार्थः प्रकाश्यते इति तन्मतम्। यथा चित्रगुरिति पदे चित्रा गौर्यस्येति समानाधिकरणबहुव्रीहिसमासः। तत्र चित्रगुपदादावेकदेशान्वयस्वीकारे गोपदस्य गोस्वामिनि लक्षणा गवि चित्राभेदान्वयः। यदि तत्र "पदार्थः पदार्थेनान्वेति न तु तदेकदेशेन" इति न्यायेनैकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा चित्रपदं तात्पर्यग्राहकम्। तथैव व्यङ्ग्यत्वं चरमवर्णस्यैव तेनैव स्फोटो व्यज्यते पूर्वपूर्ववर्णस्तु तात्पर्यग्राहक एवेति पदवाक्यसखण्डत्ववादिमतेऽपि स्फोटस्यैकत्वमव्याहतमेव।

**ध्वनेर्द्वैविध्यम्** –

एतावता व्यञ्जकध्वनिगतं कत्वादिकं स्फोटेऽवभासत इति प्रतिपादितं, सम्प्रति तस्य भेदनिरूपणं क्रियते। तथा हि ध्वनिः द्विविधः – **प्राकृतो वैकृतश्च। तत्र प्रकृत्या = अर्थबोधनेच्छया स्वभावेन वा जातः स्फोटव्यञ्जकः प्रथमः प्राकृतः। तस्मात्**

**प्राकृताज्जातो विकृतिविशिष्टश्चिरस्थायी निवर्तको वैकृतिको द्वितीयः।**

हरिरप्याह –

**स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।**
**शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।**
**ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥ इति॥**

(वाक्यपदीयम्, ब्रह्मकाण्डम् - ७७)

शब्दस्याभिव्यक्तेरूर्ध्वं वैकृता ध्वनयो जायन्त इति शेषः। कारिकायां 'वृत्ति-भेद' इति पदेन का वृत्तिरत्र गृह्यत इति चेदुच्यते -

**अभ्यासार्थे द्रुतावृत्तिर्मध्या वै चिन्तने स्मृता।**
**शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता॥ इति।**

तिसृषु वृत्तिषु समुपोहन्ते = कारणानि भवन्ति स्फोटस्तु तैर्न भिद्यत इति तद-र्थः।

**इदमत्र तत्त्वम्** – प्राकृतो वैकृतश्चेति ध्वनिः द्विविधः। तत्र प्राकृतध्वनिं विना स्फोटः सामान्यरूपेण विशेषरूपेण वा न भासत इति प्राकृतध्वनिव्यतिरेकेण स्फो-टस्य कथमप्यभानात् प्राकृतध्वनिं स्फोटरूपमिव मन्यन्ते। प्राकृतध्वनिरेव च ह्रस्वदीर्घप्लुतादिभेद-व्यवहारहेतुरिति प्राकृतध्वनिगतकालभेदस्य प्राकृतध्वन्यभिन्न-त्वेन प्रतीते स्फोटे प्रतीतौ बाधकाभावः। वैकृतध्वनिस्तु प्राकृतध्वनि-प्रतीतं स्फोटं 'स एवायम्' इति रूपेण चिरकालमुपलम्भयति। एवञ्च वैकृतध्वनिः स्फोटाभिव्य-क्त्युत्तरं जायत इति तद्गतभेदाः स्फोटे नारोप्यन्त इति तद्भेदेन न स्फोटभेदः। एवञ्च वैकृतध्वनिभिः स्फोटो न भिद्यते तमादाय च "ध्वनिकृता वृद्धिरिति" भाष्यम्। तत्र तपरसूत्रभाष्ये "एवन्तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः। कथम्? यथा भेर्य्या-हन्ता भेरीमाहत्य कश्चित् विंशतिपदानि गच्छति, कश्चित् त्रिंशत् कश्चिच्चत्वारिंशत्, स्फोटस्तावानेव, ध्वनिकृता वृद्धिः।" अत्र ध्वनिकृता = वैकृतध्वनिकृता, वृद्धिः = उपलब्धिकालवृद्धिः न तु स्फोटवृद्धिः। एवञ्च वैकृतध्वनिस्तु केषाञ्चिदल्पकालमुप-लब्धिजनकः केषाञ्चिद्बहुकालमुपलब्धिजनको लक्ष्यते। अनेन भाष्येण स्पष्टं यत् प्रा-

कृतध्वनिना स्फोटस्याभिव्यक्त्युत्तरमेव वैकृतध्वनिरुत्पद्यते। तत्र च वैकृतध्वनिना द्रुतमध्यविलम्बितवृत्तिभेदा एव क्रियन्ते, न तु स्फोटभेदा इति। तत्र वृत्तिभेदस्त्वित्थं – ग्रन्थादीना-मभ्यासार्थे पौनःपुन्येन अध्ययने द्रुता = शीघ्रोच्चारणानुकूला वृत्तिः = व्यापारः, चिन्तने = शब्दानुशीलने मध्या = न द्रुता न विलम्बिता, शिष्याणामुपदेशार्थम् = अध्यापनार्थञ्च विलम्बिता = विलम्बितोच्चारणानुकूला वृत्तिराश्रीयते। अध्यापनकाले द्रुताश्रयणे छात्राणां ज्ञानजनकत्वाभाव एवमेव मध्यमायामपि। अस्य प्रकृतस्य चायं सम्बन्धो यदेक एव स्फोटात्मकः शब्दोऽध्ययनकाले, चिन्तनकालेऽध्यापनकाले च वर्तते स च वैकृतध्वनिः भिन्नभिन्नस्थितौ वृत्तिभेदस्य कारणत्वं सम्पद्यते, न तावताऽपि तस्य स्फोटात्मकशब्दस्य स्वरूपे भेदस्तु जायत इति कथनस्याभिप्रायः।

**स्फोटस्य वाचकत्वक्रमः –**

एतावता प्रबन्धेनास्माभिः स्फोटविषये निरूपितम्। इदानीं वक्तृश्रोतृमध्ये यदा वक्ता शब्दमुच्चारयति तदा बोद्धुः केन क्रमेण बोधो जायत इति? कथं तस्य बोधकत्वमिति तस्य स्फोटस्य वाचकत्वरीतिं (अर्थबोधक्रमं) पश्यामः।

यदा केनचिद् वक्त्रा 'घटमानय' इति वैखरीनादः प्रयुक्तः। एवं प्रयुक्तः स केनचित् श्रोत्रा श्रोत्रेन्द्रियेण गृह्यते। स नादः श्रोतुः बुद्धिहृद्गतः सन् = बुद्धिविषयः सन् हृत्प्रदेशं प्राप्तः, अर्थबोधकं शब्दं = मध्यमानाव्यङ्ग्यं स्वनिष्ठकत्वादिना (स्वं = वैखरीनादः, तन्निष्ठं यत्कत्वादिकं तेन स्वनिष्ठकत्वादिवर्णधर्मेण (कत्वाद्यवच्छि-न्नेन)) व्यञ्जयति तस्माद् = वैखरीनादव्यक्तादर्थबोधः। अस्मिन् पक्षे स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोटः = शब्दः। अयं श्रोतृविषयकः क्रमः।

इत्थं श्रोतृविषयकः क्रम उक्तः, सम्प्रति वक्तृविषयकः क्रम उच्यते – उच्चारयितुस्तु युगपदेव मध्यमावैखरीभ्यां नादः = शब्द उत्पद्यते, तत्र मध्यमावैखरीनादयोः वैखरीकृतनादो वह्न्यादेः फूत्कारादिवन्मध्यमानादोत्साहकः, (यथाऽप्रज्वलिताग्निः फूत्कारो-त्साहेन प्रज्वलितो भवति तत्र फूत्कार प्रेरको भवति तथैव वैखरीनादो मध्यमानादस्योत्साहक इत्यर्थः) मध्यमानादः स्फोटं व्यञ्जयतीति शीघ्रमेव ततोऽर्थ-

बोधः। श्रोतुस्तु क्रमिकं ज्ञानमुत्पद्यतेऽतो विलम्बेन बोध इत्यनुभवसिद्धोऽयं विषयः। अत एव **"श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्द"** इत्याकरग्रन्थः सङ्गच्छते। "अइउण्" इति भाष्ये उक्तमेतत्। श्रोत्रोपलब्धिः = श्रोत्रे – श्रोत्रेन्द्रिय उपलब्धिः प्रापणं यस्य तादृशः, बुद्धिनिर्ग्राह्यः = निश्चयात्मिकया अन्तःकरणवृत्त्या ग्रहणयोग्यः, प्रयोगेण = उच्चारणेन, अभिज्वलितः = अभिव्यक्तः, आकाशदेशः = आकाशस्थानीयः कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रम्, तद्देशः स्थानं यस्य शब्दस्य स शब्द इत्यर्थः। अत्र कत्वादिना श्रोत्रोपलब्धित्वं, स्फोटात्मकपदादिरूपेण तु बुद्धिनिर्ग्राह्य-त्वम्, स च प्रयोगेण वैखरीरूपेणाभिज्वलितः = स्वरूपरूषितः = स्वरूपेणप्रकटीकृत इत्यर्थः तद्भाष्यस्य। एवं कत्वादिना वर्णरूपेण श्रोत्रोपलब्धिः, स्फोटात्मकपदादिरूपेण बुद्धिनिर्ग्राह्यत्वं तदा प्रत्येकं वर्णपदवाचकत्वमायातम्। तथा स्वीकारे गौरवं स्यादत आह **मञ्जूषाकृत्** "तत्रापि = वर्णपदस्फोटादिस्वीकारेऽपि शक्यत्वस्य = शक्यजातेरिव शक्ततावच्छेदिकाया वर्णपदवाक्यनिष्ठजातेर्वाचक-त्वम्"। अस्यायमाशयः – व्यक्तिः पदार्थ इति स्वीकार आनन्त्य-व्यभिचारादिदोषाणां सत्त्वाद्यथा जातौ शक्यत्वं स्वीक्रियते। एवमेवात्रापि वर्णपदवाक्येषु विद्यमानायाः शक्ततावच्छेदिकाया जातेरेव वाचकत्वं स्वीकार्यं, लाघवात्। तदुक्तं हरिणापि –

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता। इति। (वाक्यपदीयम्, ब्रह्मकाण्डम् - ९३)

अनेकाभिर्घटपटरूपाभिर्व्यक्तिभिरभिव्यक्ता घटत्वपटत्वरूपा जातिः स्फोट इति स्मृतेत्यर्थः। एवञ्च यतो वर्णादीनां व्यञ्जकत्वं सिद्धं ततोऽष्टविधस्फोटात्मकः शब्दो वृत्त्याश्रयः। वस्तुतस्तु वाक्यस्फोटो वाक्यजातिस्फोट एव वा वृत्त्याश्रयः। तत एव लोकेऽर्थबोधादिति। तदुक्तं वैयाकरणभूषणेऽपि – **"वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः"** इत्यादिना।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ स्फोटसिद्धान्तनिरूपणम् ॥

# अथाकाङ्क्षासिद्धान्तनिरूपणम्

एतावताऽस्माभिर्वृत्त्याश्रयस्य स्फोटस्य प्रधानभेदस्य वाक्यस्फोटस्य मुख्यत्वं तस्यैव वाचकत्वं सर्वत्रार्थबोधकत्वादिति सप्रपञ्चं यथासम्प्रदायं निरूपितम्। अथ वाक्यार्थबोधे सहकारिकारणभूतानि विनापि वाक्यार्थबोधासम्भवात्तानि आकाङ्क्षायोग्यताऽऽसत्तितात्पर्याख्याणि निरूप्यन्ते।

तत्र ग्रन्थादौ शाब्दबोधरूपकार्यं प्रति वृत्तिज्ञानस्य मुख्यकारणता सयुक्ति व्यक्तीकृताऽऽसीत्। यथा घटमानयेति वाक्यश्रवणे घटकर्मकप्रेरणाविषयीभूतानयनरूपो व्यापार इति बोधो जायते। एतादृशबोधं प्रति वृत्तिज्ञानस्य कारणत्वं अस्तीति। तथापि 'गिरिर्भुक्तमग्निमान् देवदत्तेन' 'वह्निना सिञ्चति' 'घटः कर्मत्वमानयनं कृतिः' इत्यादौ शाब्दबोधस्य बाधः कुतो वा दृश्यत इति प्रश्ने पूर्वोक्तकारणस्य सत्त्वेऽपि सहकारिकारणानि आकाङ्क्षादीन्यपेक्षन्ते यद्विना शाब्दबोधो नैवोत्पद्यते। तत्र किं नाम सहकारिकारणत्वमिति चेत् – **"मुख्यकारणजन्यकार्यजनकत्वे सति मुख्यकारणभिन्नत्वम्"**। तथा हि समन्वयः – शाब्दबोधरूपकार्यं प्रति मुख्यं कारणं = वृत्तिज्ञानं, तेन जन्यं कार्यं = शाब्दबोधः, तस्य मुख्यकारणजन्यकार्यस्य जनकम् = आकाङ्क्षादीनि, जनकत्वं = आकाङ्क्षादिषु, तत्त्वे सति वृत्तिज्ञानरूपमुख्यकारणभिन्नत्वमपि आकाङ्क्षादिषु इति स्पष्टम्। तत्र का नामाऽऽकाङ्क्षेति चेदुच्यते – **वाक्यसमयग्राहिकाऽऽकाङ्क्षा** – "वाक्यस्य = अर्थसमापकपदसमूहस्यैकार्थकबोधकाखण्डस्य वा यः समयः = सङ्केतः, तस्य ग्राहिका = बोधजनयित्री आकाङ्क्षा = एतदाख्यशाब्दबोधसहकारिकारणम्" इति।

**अत्र प्रश्नः** – आकाङ्क्षा हि यत्किञ्चिद्विषयकेच्छारूपा नाम किञ्चिन्निष्ठविषयतानिरूपितविषयितावदिच्छाऽपरपर्याया, सा चेच्छा-रूपाऽऽकाङ्क्षा कथं वा सङ्केतग्रा-

हिका भवितुमर्हति ? इति चेद् -

**अत्रोत्तरम्** – सा चैकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्यान्वय्यर्थः कः' इत्येवंरूपा पुरुषनिष्ठैव, तथापि तस्याः स्वविषयेऽर्थे आरोपः । अयमर्थोऽर्थान्तरमाकाङ्क्षतीति व्यवहारात् ।

**अयं भावः** – साऽऽकाङ्क्षैकस्य कस्यचित् पदस्यार्थस्य ज्ञाने सति तस्य पदादि-पदस्य योऽर्थः, तस्यान्वययोग्यो योऽर्थस्तस्य यज्ज्ञानं, तस्य ज्ञानस्य यो विषयः तज्ज्ञानविषयिणी इच्छेति । यथा घटमिति पदस्य घटकर्मकानयनमिति पदार्थज्ञाने जात एतदर्थनिरू-पिततात्पर्यविषयीभूतसंसर्गेण सम्बन्धरूपयोग्यतावतोऽर्थस्य य-ज्ज्ञानं भवति, तादृशविषयिणी इच्छा आकाङ्क्षेति ।

**पुनः प्रश्नः** – भवदुक्तरीत्यैकपदार्थस्य ज्ञाने सति तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छा आकांक्षा, तर्हि यत्र "घटमानय" इत्यादौ द्वयोः पदार्थयोः ज्ञानं जातं तत्रोक्तरूपाया आकांक्षाया अभावाच्छाब्दबोधो न स्यादिति ? चेद्

**अत्रोत्तरम्** – "एकपदार्थज्ञाने" इत्यस्य "एकपदार्थज्ञान-मात्रे" इत्यर्थः । तेनैकपदार्थमात्रज्ञानानन्तरमित्यर्थकरणेनैकपदार्थ-ज्ञानमात्रेऽपि सा भवतीत्युक्ते यत्र पदार्थद्वयस्य ततोऽधिकस्य वा ज्ञानं तत्र तु साऽवश्यं वर्तत एवेति पर्यवस्यति ।

एतादृश्या आकांक्षाया आकारस्त्वित्थम् – अस्यान्वय्यर्थः कः ? इति । अस्य = विदितार्थस्य अन्वयी = अनुगामी, अन्वेतुं योग्य इत्यर्थः, अर्थः कः इत्यादिरी-त्या । आकांक्षाया इच्छारूपत्वादिच्छायाश्चात्मनो धर्मत्वात्सा पुरूषसम्बद्धा भवति, अत एवोक्तं 'पुरूषनिष्ठैव' सेति । पुरुषनिष्ठैवेत्येवकारेण तस्याः पदादिनिष्ठत्वं निरा-कृतम् ।

**प्रश्नान्तरम्** – यथोक्तं पुरूषनिष्ठैव साऽऽकांक्षा चेत् "अयमर्थोऽर्थान्तरमाकां-क्षति" इति व्यवहारस्य का गतिरिति चेद् -

**अत्रोत्तरम्** – यद्यपि सा पुरुषनिष्ठैव तथापि तस्याः स्वविषयेऽर्थे आरोपः क्रि-यते । स्वविषये = आकाङ्क्षाविषये, अर्थे आरोपः = समवायसम्बन्धेन अर्थे आरोपः क्रियते, विषयतासम्बन्धेन तु सा अर्थे वर्तत एव ।

एवञ्चार्थे आकाङ्क्षाऽऽरोपणमेवाभिधानापर्यवसानम् = अर्थोपस्थितेरपरिसमाप्तिरित्युच्यते। अत्रार्थे इव पदेऽप्याकाङ्क्षारोपो भवतु इति तु न चिन्तनीयम्, यतोऽर्थबोधोत्तरमेवाकाङ्क्षाया उदयः, न ततः प्राग्। तस्मादर्थे एव आरोपः न तु पदे इति। एवन्तर्हि पदं साकाङ्क्षमिति व्यवहारः कथमिति चेत्साकाङ्क्षमित्यस्य साकाङ्क्षार्थबोधकमित्यर्थे लक्षणा। साकाङ्क्षार्थबोधकं = आकाङ्क्षाविषयो योऽर्थस्तस्य बोधकं पदमिति तदर्थः। किञ्च पदे आकाङ्क्षारोपे भाष्यविरोधोऽपि स्यात्। तदुक्तं समर्थसूत्रे भाष्ये – **"परस्परव्यपेक्षां सामर्थ्यमेके। का पुनश्शब्दयोर्व्यपेक्षा? न ब्रूमश्शब्दयोरिति। किं तर्हि? अर्थयोरिति"। अत्र परस्परव्यपेक्षा नाम परस्पराकाङ्क्षा इत्यर्थः। एवञ्चानेन भाष्येणापि स्पष्टं यदाकाङ्क्षाऽर्थयोरेव भवति न तु शब्दयोरपि, तेन न पदे शब्दे वाऽऽरोप आकाङ्क्षायाः।** अर्थयोः कथमिति उदाहरणेन स्पष्टयामः - यथा राज्ञः पुरुष इत्युक्ते 'राजा पुरुषमपेक्षते ममायम्' इति, पुरुषोऽपि राजानमपेक्षते अहमस्येति। शब्दानां वाच्यार्थं प्रति विशेषणत्वादर्थबोधोत्तरमेव जिज्ञासोदयादर्थे आरोपः, न पदे इति स्पष्टतरम्।

**पदं साकाङ्क्षमिति नैयायिकमतानुवादः –**

नैयायिकास्तु घटमित्यत्राधेयतासम्बन्धेन घटप्रकारककर्म-ताविशेष्यकं घटनिष्ठकर्मत्वमिति बोधं प्रत्यव्यवहितोत्तरत्वसम्बन्धेन अम्-पदवत्त्वमेवाकाङ्क्षा, तत्स्मरणं शाब्दबोधे कारणमित्याहुः।

सम्प्रति नैयायिकमतं प्रसङ्गोपात्तमिति कृत्वा नैयायिका आकाङ्क्षां कथं निरूपयन्तीत्यपि संक्षेपेण पश्यामः। तेन विषयस्य स्पष्टतराभिव्यक्तिर्भविष्यति।

**अत्र नैयायिकाः** - येन पदेन विना यस्य पदस्यान्वयाननु-भावकत्वं तेन पदेन सह तस्याकाङ्क्षा। क्रियापदं विना कारकपदं नान्वयबोधं जनयतीति तेन तस्याकाङ्क्षा इति वदन्ति। अयमभिप्रायः – येन पदेन विना = यत्पदाऽभावप्रयुक्तं यस्य पदस्यान्वयबोधा-जनकत्वं तत्पदसमभिनव्याहृततत्पदत्वमाकाङ्क्षेत्यर्थः, यथा 'राज्ञः पुरुषः' इत्यादौ पुरूषपदाऽभावप्रयुक्तं षष्ठ्यन्तराजपदस्यान्वयबोधाऽसमर्थत्वम्, अतो राजपदसमभिव्याहृतपुरुषपदत्वमाकाङ्क्षा। यदा पुरुषपदं विना

'राज्ञ' इति षष्ठ्यन्तं पदं प्रयुज्यते तदा राज्ञ इति षष्ठ्यन्तस्यान्वयबोधस्यासामर्थ्यम्। यतः षष्ठ्याः स्वस्वामिभाव-सम्बन्धत्वमर्थः। यावता पुरुष पदस्य प्रयोगः नैव क्रियते तावता राज्ञ इति षष्ठ्यन्तस्य कुत्रान्वय इति वक्तुं न शक्यते। अतो राजपद-समभिव्याहृततया पुरुषपदप्रयोगे साऽन्वयाकाङ्क्षा शाम्यतीत्यर्थः। एवमेव घटमित्यत्र घटपदस्याम्पदाभावप्रयुक्तमन्वयबोधासमर्थत्वम्, अतः घटपदसमभिव्याहृताऽम्पदत्वमाकाङ्क्षा। अत्रेदं ज्ञातव्यं यन्नैयायिका 'अम्'प्रत्ययस्यापि पदत्वमङ्गीकुर्वन्ति। तेषां मते "शक्तं पदम्" इति परिभाषणादम्प्रत्ययस्य कर्मत्वमित्यर्थस्वीकाराच्च। अस्माकं तु विभक्त्यर्थस्य द्योतकत्वात् कर्मत्वादयोऽर्थाः प्रकृतेरेव, विभक्तिप्रत्ययास्तु तद्योतका इति भेदः। अस्तु प्रकृतमनुसरामः नैयायिकैः यत्पदाभावप्रयुक्तमन्वयाननुभावकत्वादिकं यदुक्तं तत्र प्रयुक्तत्वं नाम – 'कारणाभावात् कार्याभाव'इत्याकारकप्रतीति-बोधकः स्वरूपसम्बन्धविशेष इति। अननुभावकत्वं तादृशसम्बन्धार्थ-द्योतकमित्यर्थः। यथा राज्ञः पुरुष इत्यत्र राजसम्बन्ध्यभिन्नपुरुष इत्याकारकः शाब्दबोधस्तत्र शाब्दबोधरूपकार्यं प्रति आकाङ्क्षायाः कारणत्वम्, यदा पुरुषपदं विना षष्ठ्यन्तं राजपदं प्रयुज्यते तदा 'राजपदसमभिव्याहृतपुरुषपदत्वरूपकारणीभूताकाङ्क्षाया अभावात्' तादृशपुरुषपदाभावप्रयुक्तषष्ठ्यन्तराजपदस्यान्वयबोधाऽसमर्थत्वाद् राजसम्बन्ध्यभिन्नपुरुष इत्येतादृशकार्यरूपशाब्दबोधो न स्यात्। एवञ्च एतादृशः 'कारणाऽभावात् कार्याभाव' इत्याकारकप्रतीतिबोधकः स्वरूपसम्बन्धविशेषो राजपुरुषपदयोर्वर्तते। यत्पदाभावप्रयुक्तयत्पदस्यान्वयाननुभावकत्वमित्यादिना नैयायिकमते इदमपि फलितं यत् ते पदान्येव साकाङ्क्षाणीति स्वीकुर्वन्ति।

**भाष्यप्रामाण्यात् नैयायिकमतनिरासः -**

एवञ्च नैयायिकाः पदयोरेव आकाङ्क्षा तान्येव साकाङ्क्षाणि इति वदन्ति, तन्न। पूर्वोक्तसमर्थसूत्रभाष्यविरोधात्। अर्थयोरेव आकाङ्क्षेति स्पष्टं प्रतिपादितत्वात्। तत्र इत्थं समर्थसूत्रभाष्यम् – **"परस्परव्यपेक्षां सामर्थ्यमेके। का पुनश्शब्दयोर्व्यपेक्षा? न ब्रूमश्शब्दयोरिति। किं तर्हि? अर्थयोरिति"**। अत्र परस्परव्यपेक्षा

नाम परस्पराकाङ्क्षेत्यर्थः। एवञ्चानेन भाष्येणापि स्पष्टं यदाकाङ्क्षा-ऽर्थयोरेव भवति न तु शब्दयोरपि। अर्थयोरेवाकाङ्क्षेति कथनस्य फलितं हि "ईदृशजिज्ञासोत्थापकं चैकपदार्थेऽपरपदार्थव्यतिरेक-प्रयुक्तस्यान्वयबोधाजनकत्वस्य ज्ञानमिति तद्विषये तादृशान्वय-बोधाजनकत्वेऽप्याकाङ्क्षेति व्यवहारः"। अयमर्थः – एकपदार्थे 'गाम्' इत्येतावन्मात्रेण सास्नादिमत्पदार्थे ज्ञाते, अपरपदार्थस्य 'नय-पदार्थस्य' यो व्यतिरेकः = नयपदार्थविषयकज्ञानाभावः, तत्प्रयुक्तस्यान्वयबोधाजनकत्वस्य = शब्दजन्यबोधजनकत्वाभावस्य गोपदार्थे वर्तमानस्य ज्ञानमाकाङ्क्षोत्थापकम्। तद्विषये = सम्बन्धबोधाजनकतारूपज्ञानविषये, तादृशान्वयबोधाजनकत्वे = आकाङ्क्षा-जनकीभूतज्ञानविषयगोपदार्थनिष्ठान्वयबोधजनकत्वाभावे, आकाङ्क्षेति व्यवहारः।

**आकाङ्क्षायाः पक्षान्तरम् –**

इतः पूर्वमाकाङ्क्षाया यत्स्वरूपमुक्तमासीत्तस्मिन् पुरूष-निष्ठायास्तस्याः समवायेनार्थे आरोपः कृत आसीत्। तथा सति आरोपकृतगौरवं मनसि निधाय पक्षान्तरमपि स्वीक्रियते। यत्रारोपं विनैव आकाङ्क्षायाः पदनिष्ठत्वं साधयितुं शक्यते। तथा च स्वरूपं पक्षान्तरे – **उत्थापकताविषयतान्यतरसम्बन्धेनोभयसम्बन्धेन वाऽर्थान्तरजिज्ञासाऽऽकाङ्क्षा।** अत्रोक्तलक्षणे सम्बन्धद्वयम्। अन्यार्थविषयिणी जिज्ञासाऽऽकाङ्क्षा। जिज्ञासायामुत्थापकतासम्बन्धो वा, विषयतासम्बन्धो वा। अथवा उभयसम्बन्धो भवेत्। तेन लक्षणमित्थं पर्यवस्यति - **"उत्थापकताविषयतान्यतर-सम्बन्धेनार्थान्तरजिज्ञासाऽऽकाङ्क्षा"। "उत्थापकताविषयतोभयसम्बन्धेनार्थान्तर-जिज्ञासाऽऽकाङ्क्षा" चेति।**

**प्रथमस्योदाहरणम् –** 'पश्य मृगो धावति' इति दर्शनार्थस्य कारकधावनाकाङ्क्षोत्थापकत्वं धावनं तु तद्विषय एव। दर्शनार्थस्येत्यत्र निष्ठत्वं षष्ठ्यर्थः, धावनरूप-कारकविषयकाकाङ्क्षाया उत्थापकत्वं दर्शननिष्ठम्। अयम्भावः – यदा कश्चित् 'पश्य' इत्युच्चारयति तदाऽस्य दर्शनक्रियात्वेन 'किम्' इति कर्मकारक-विषयिणी जिज्ञासा भवति। एवञ्च पश्यपदार्थः कारकधावनस्या-काङ्क्षामुत्थापयति। अतोऽत्र दर्शने कारकस्य धावनस्योत्थापकता-सम्बन्धेनाकाङ्क्षावैशिष्ट्यं सिद्ध्यति। धावने दर्श-

नस्य विषयतासम्बन्धेन वैशिष्ट्यमिति । एवञ्च पश्येत्यत्रोत्थापकतासम्बन्धेन, धावतीत्यत्र च विषयतासम्बन्धेनान्यार्थविषयिणी जिज्ञासाऽस्तीति बोध्यम् ।

**द्वितीयस्योदाहरणम्** – 'पचति तण्डुलं देवदत्तः' इत्यादौ, क्रियाकारकयोर्द्वयोरपि परस्परं तदुत्थापकत्वं तद्विषयत्वञ्च । अर्थात् क्रियाकारकयोः = पाकक्रियायास्तण्डुलरूपकर्मणश्च परस्परमाका-ङ्क्षोत्थापकत्वमाकाङ्क्षाविषयत्वञ्च । प्रकृते पचतीति क्रियाऽस्ति सा कर्मविषयिणीमाकाङ्क्षामुत्थापयति, देवदत्तः तण्डुलं च कारकद्वयम्, इदं च क्रियाविषयिणीमाकाङ्क्षामुत्थापयति । अनेन पूर्वोक्तसम्बन्ध-द्वयेन विद्यमानाकाङ्क्षाया शाब्दबोधे हेतुत्वाङ्गीकारेण "घटः कर्मत्वम् आनयनं कृतिः" इत्यतो घटमानयेतिवन्न शाब्दबोधः । तत्र पूर्वोक्तलक्षणाया आकाङ्क्षाया अभावात् । घटमानयेत्यतः घटनिष्ठकर्मतानिरूपकानयनविषयकबोधे विभक्त्यन्ताख्यातान्तयोरेव (घटमिति सुबन्तस्य आनयेति तिङन्तस्य च) साकाङ्क्षत्वात् । नैयायिकास्तु घटकर्मताबोधं प्रति घटपदोत्तरद्वितीयारूपाकाङ्क्षाज्ञानं कारणमित्युक्त्वा "घटः कर्मत्वम् आनयनं कृतिः" इत्यत्र शाब्दबोधो न इति वदन्ति । यद्यपि नैयायिकमतरीत्या नैयायिकोक्तं "शक्तं पदम्" इति लक्षणघटितघटपदोत्तरद्वितीयारूपाकाङ्क्षेति पदानि साकाङ्क्षाणीति पक्षमादृत्य तदुक्तलक्षणयुक्ताऽऽकाङ्क्षाप्रयुक्तकारणा-भावरूपकार्याभाव इत्यन्वयव्यतिरेकेणोपर्युक्तस्थले शाब्दबोधाभावः सिद्ध्यति तथाप्यस्मन्मते भाष्यस्य परमप्रामाण्यादर्थयोरेवाकाङ्क्षेति भाष्यकारेण कण्ठतः प्रोक्तत्वाद्विभक्त्यन्ताख्यातान्तयोरेव साकाङ्क्षत्व-मिति स्वीकृत्य "घटः कर्मत्वमानयनं कृतिः" इत्यादिस्थले शाब्दबोधाभावकल्पनं युक्तम् ।

**अत्रेयं विचारणा** - न च विभक्त्यन्ताख्यातान्तयोरेव साकाङ्क्षत्वमिति कथनेनास्माकमपि विभक्त्यन्तं = सुबन्तम्, आख्यातान्तं = तिङन्तमिति सुप्तिङन्तयोः पदत्वात् पदयोरेव साकाङ्क्षत्वमभीष्टमिति वाच्यम् । विभक्त्यन्ताख्यातान्तयोरित्यस्य विभक्त्यन्ताख्यातान्तप्रत्ययान्तपदरूपाऽर्थोपस्थापकयोरित्यर्थस्य तत्र विवक्षितत्वात् । विभक्त्यन्ताऽऽख्यातान्तप्रत्ययान्तपदानामेवार्थोप-स्थापकत्वाच्च । "न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः" "अपदं न प्रयुञ्जीत" इति नि-

यमोऽपि एवम्पर इति वक्तुं शक्यम्। लोके पदानामेव प्रयोगार्हत्वात्। न च नैयायिकमते शक्तं = शक्तिमत् पदमिति परिभाषितत्वात् केवल'घट'इति प्रकृतेः केवल'अम्'इति प्रत्ययस्य चार्थवत्त्वात् पदत्वमक्षतमिति चेदत्र ब्रूमः - तन्मते शक्तं पदमिति परिभाषया तेषां पदत्वे सिद्धेऽपि, न लोके 'घट अम्' इत्यादीनां प्रयोगार्हत्वमित्यलं विस्तरेण। तेन अर्थयोरेव साकाङ्क्षत्वमिति उपसंहृतिः।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ
आकाङ्क्षासिद्धान्तनिरूपणम् ॥

# अथ योग्यतासिद्धान्तनिरूपणम्

शाब्दबोधस्य द्वितीयं सहकारिकारणं भवति योग्यतेति। **योग्यता च परस्परान्वयप्रयोजकधर्मवत्त्वम्।** परस्परं योऽन्वयः, तस्य प्रयोजको यो धर्मः, तद्वत्त्वं योग्यता। एवञ्च परस्परान्वयबाधाभावो योग्यतेति वक्तुं शक्यम्। तेनैतादृशार्थस्वीकारदेव 'पयसा सिञ्चति' इति वाक्यं योग्यं भवति। तत्रास्ति सेकान्वयप्रयोजकद्रवद्रव्यत्वं योग्यता जले, करणत्वेन जलान्वयप्रयोजकार्द्रीकरणत्वं योग्यता सेकक्रियायाम्। **अयं भावः** – सेकक्रिया तेनैव वस्तुना सम्भवति यद् द्रवद्रव्यं स्यात्, सेकस्य धारारूपत्वाज्जले च तद्विद्यत इति जले सेकान्वयप्रयोजकद्रवद्रव्यत्वं योग्यताऽस्ति। सिञ्चतीति क्रिया, अस्यां करणत्वेन जलान्वयप्रयोजकार्द्रीकरणत्वं योग्यतास्ति। तस्मात्पूर्वो-क्ताया योग्यतायाः सत्त्वात् 'पयसा सिञ्चति' इति वाक्यं योग्यम्। पूर्वोक्तरूपाया योग्यताया अभावाच्च 'वह्निना सिञ्चति' इति वाक्यं न योग्यम्। यतो वह्निः सेकान्वयप्रयोजकद्रवद्रव्यं नास्ति।

**अत्र नैयायिकाः –**

'वह्निना सिञ्चति' इत्येतादृशस्थले योग्यताया अभावाद् नान्वयबोधः। किन्तु प्रत्येकं पदार्थबोधमात्रमिति। एवञ्चैतादृशस्थले शाब्दबोधो न भवति केवलं पृथक्-पृथक् पदजन्यप्रतीतिरेव भवतीति। शाब्दबोधाभावस्तु बाधादिकारणसत्त्वादेकपदार्थेऽपर-पदार्थसम्बन्धरूपाया योग्याताया अभावान्न भवतीति बोध्यम्।

**नैयायिकमतनिरासः –**

यत्तु नैयायिका वह्निना सिञ्चतीत्येतादृशस्थले बाधादिकारणसत्त्वाच्छाब्दबोधो न भवतीति, तदयुक्तम्। सर्वत्रापि बोद्धार्थस्य बाधविषयत्वेन

सत्त्वाद् बाधाभावदर्शनात्। यतो बुद्धिस्थः पदार्थः सर्वत्रापि बोधस्य विषयो भवति तेन बाधस्य कुत्राप्यभावात्, न तथा वक्तुमुचितम्। अत्रार्थे हरिकारिकापि प्रमाणम्। तथा हि – "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति च"। इति। एतस्या अयमर्थः – यस्य पदार्थस्य बाह्ये जगति सर्वथाऽभावो विद्यते तद्विषयेऽपि प्रयुक्तः शब्दस्तद्विषयकं ज्ञानं जनयत्येव। एवञ्च शाब्दबोधं प्रति न बाधज्ञानं प्रतिबन्धकमिति सिद्धम्। अतो बाधज्ञानस्य बोधं प्रति प्रतिबन्धकत्वाभावादेव बन्ध्यासुतादिशब्दानां प्रातिपदिकत्वमित्यस्माभिः शक्तिसिद्धान्तनिरूपणवेलायां बौद्धार्थ-निरूपणावसरे विस्तरेण व्यक्तीकृतम्। तत्र च श्लोकः -

**एष बन्ध्यासुतो याति खपुष्पकृतशेखरः।**
**कूर्मक्षीरचयेस्नातः शशश्रृङ्गधनुर्धरः॥ इति॥**

प्रकृतश्लोके बन्ध्यासुतः, खपुष्पं, कूर्मक्षीरं, शशश्रृङ्गः इत्यादि ये पदार्था वर्णिता तेषामस्माकं शाब्दिकानां मते बाह्यत्वेन शून्यत्वे = अप्रसिद्धत्वेऽपि बुद्धिपरकल्पितवाच्यार्थत्वमादायार्थ-वत्त्वादेव प्रातिपदकत्वात् सुबादिविभक्त्युत्पत्तिः। यदि बौद्धपदार्थो नाङ्गीक्रियेत तर्हि बन्ध्यायाः सुतोत्पत्तेः सुतरामसम्भवाद्यानक्रियाया-मसम्भवः। आकाशे पुष्पाणामभावात्, कूर्मपत्नीनां (कच्छपीनां) क्षीरस्यासम्भवेन तत्समुदाये स्नानासम्भवात्, शशस्य श्रृङ्गाणामेवाभावात्तन्निर्मितधनुषोऽप्यसम्भवाच्चैतादृशानां कस्याप्यर्थस्यासम्भवेन प्रातिपदिकत्वं न स्यादेव, तदभावे च विभक्त्युत्पत्तिरपि नेत्यपि बोध्यम्। एवञ्चानेन स्पष्टं यद्बाधज्ञानं न बोधं प्रति प्रतिबन्धकम्।

किञ्च 'वह्निना सिञ्चति' इत्यादौ यदि बोध एव न स्यात्तर्हि तद्वाक्यप्रयोक्तारं पुरुषं प्रति 'अद्रवेण कथं सेकं ब्रवीषि' इत्युपाहसश्चास्माभिः क्रियते, स चोपहासोऽस्माकं बोधाभावे कथं वा युज्येतेत्यनुभवसिद्धोऽयं विषयः।

**अत्र प्रश्नः** – यद्येवं बाधस्थलेऽपि भवतां शाब्दबोधो भवति तर्हि शशश्रृङ्गादीनामानयने प्रवृत्तिरपि स्यादिति चेद्



**अत्रोत्तरम्** – वाक्यार्थबोधे जाते बौद्धार्थविषये प्रवृत्तिस्तु नैव भवति, बौद्धार्थे

अप्रामाण्यग्रहात्। **अयं भावः** – बाधस्थलेऽपि बोधस्तु जायत एव किन्तु किन्तु ज्ञातेऽर्थे प्रामाण्यग्रहो न भवति, प्रत्युताप्रामाण्यग्रहस्तत्र जायते। अप्रामाण्यज्ञानञ्च न प्रवृत्तौ प्रयोजकम्। तेन प्रवृत्तिप्रयोजकज्ञानाभावे प्रवृत्तरपि नेति **लघुमञ्जूषायामि**तोऽपि विस्तरेण प्रत्यपादि। तत्र हि "अर्थनिष्ठ-योग्यतापि शाब्दबोधे कारणम्। वस्तुतो बाधज्ञानं न क्वापि ज्ञाने प्रतिबन्धकम्, तत्कालेऽपि हि सत्यां सामग्र्यां जायत एव ज्ञानम्। तत्र स्वस्वसामग्रीवशाद्द्वयोरपि ज्ञानयोर्जातयोर्यत्र ज्ञाने सदोषसाम-ग्रीजन्यत्वग्रहस्तत्राप्रामाण्यग्रह इत्येव मर्यादा ज्यायसी, यथा द्वाभ्यां प्रयुक्ते 'गेहे घटोऽस्ति' 'गेहे घटो नास्ति' इति परस्परविरूद्धे --- इत्यादिकथनेन बाधज्ञानस्याप्रामाण्यजनकत्वमुपपाद्य --- **परे तु – अन्वयप्रयोजकसमभिव्याहृतकार्यशक्तिमत्वं योग्यता। सा च शाब्दबोधे भासते। अत एव 'घटेन जलमाहर' इत्यादौ सच्छिद्रेतरस्य जलाहरणशक्तिमत्त्वेन सच्छिद्रेतरत्वप्रकारको बोधः"** इत्यादिना नागेशग्रन्थेन नैयायिकोक्तं बाधकारणाद्योग्यताभाव इत्यादि प्रत्युक्तम्।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ
योग्यतासिद्धान्तनिरूपणम् ॥

# अथासत्तिसिद्धान्तनिरूपणम्

सम्प्रति यदासत्तिर्नाम शाब्दबोधसहकारि तृतीयं कारणं तन्निरूप्यते। **प्रकृतान्वयबोधाननुकूलपदाव्यवधानमासत्तिः।** प्रकृतः = प्रस्तुतः योऽन्वयबोधस्तस्याननुकूलानाम् = अजनकानां पदानाम् अव्यवधानम्। ययोः पदयोः परस्परमन्वयबोधजनकत्वे तात्पर्यं तयोः पदयोः प्रकृतान्वयबोधस्याननुकूलपदेन = अजनकपदेन अव्यवधानमासत्तिरित्यर्थः। यथा 'गिरिरग्निमान्' इति आसन्नम्। अनासन्नं च 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इति। अत्र हि गिरिरग्निमानिति, भुक्तं देवदत्तेनेति वाक्यम्। गिरिः अग्निमान् इत्येतत्पदद्वयं हि परस्परमन्वययोग्यम्। एवमेव भुक्तं देवदत्तेनेति। यदा परस्परमन्वेतुं योग्ययोर्द्वयोः पदयोर्मध्येऽनन्वययोग्येन केनचित् पदेन व्यवधानं जायते तदाऽऽसत्तेरभावाद्बोधो नैव भवतीति तात्पर्यम्।

**इदमत्र ज्ञेयम्** – आसत्तिर्हि मन्दबुद्धेरविलम्बेन शाब्दबोधे कारणम्। यतोऽमन्दबुद्धेस्तु आसत्त्यभावेऽपि पदार्थोपस्थितावा-काङ्क्षयोदितोऽविलम्बेनैव बोधो भवति, तेन नासत्तेः शाब्दबोधे कारणत्वम्। यतो हि व्युत्पन्नस्तावदमन्दबुद्धिः पूर्वोक्तादिस्थलेषु 'भुक्तम्' इति उच्चारिते केन भुक्तमितिकर्त्राकाङ्क्षयैव भुक्तमिति क्रियापदेनान्वेतुं योग्यं 'देवदत्तेन' इति कर्तृपदं सम्बध्नाति, ततस्तस्य शाब्दबोधः। आसत्तिर्हि मन्दबुद्धेरेव शाब्दबोधे प्रयोजिका, न तु अमन्दबुद्धेरिति "न पदान्त०" (पा.सू. १-१-५८) सूत्रभाष्ये ध्वनितमिदम्।

तत्र भाष्ये "प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति वक्तव्यम्" चिकीर्षकः, प्रतिदीव्नः, ब्राह्मणकण्डूतिः --- एषु स्थानिवद्भावाभावात् स्वरादयो भवन्ति, पञ्चारत्न्यः, किर्योः, वाय्वोः, एषु स्थानिवद्भावात् स्वर-दीर्घ-यलोपादयो न भवन्ति, इत्युक्त्वा "तर्त्तर्हि वक्तव्यम्। न वक्तव्यम्। इह हि लोपोऽपि प्रकृतः, आदेशोऽपि। विधिग्रहणमपि प्रकृतमनुवर्तते, दीर्घादयोऽपि निर्दिश्यन्ते। केवलं त-

त्राभिसम्बन्धमात्रं कर्तव्यम् --- स्वर-दीर्घ-यलोपविधिषु लोपाजादेशो न स्थानिवदिति। आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसम्बन्धः शक्यते कर्तुम्। न चैतान्यानुपूर्व्येण सन्निविष्टानि। अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति। तद्यथा – अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीः, इति। तस्य यथेष्टमभिसम्बन्धः – उदहारि भगिनि? या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति।"

**अस्य भाष्यस्यायमाशयः** – स्वर-दीर्घ-यलोपानामानुपूर्व्येण = पदान्तरेणाव्यवधानरूपासत्त्या सूत्रे पाठाभावेऽप्यनुवृत्तानां लोपादीनां द्विर्वचने लोपादेशस्यासम्भवात्, सवर्णादिविधौ तु तस्यैव सम्भवान्न तेषां लोपो विशेषणम्। पदान्ते तु यद्यपि सम्भवव्यभिचारौ स्तः, तथापि 'पदान्त' इति योगविभागात् तद्विधौ लोपो न विशेषणम्, इति पारिशेष्यात् स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति विज्ञायते।तदुक्तं कैयटेन – "स्मृतिशास्त्रत्वाच्चास्यैतावन्तोऽर्थाः सन्निहिता इत्येतावत् प्रतीयते। ग्रहणवाक्याच्च लक्ष्यसंस्कारकं प्रक्रियावाक्यमुपप्लवत इति सिद्धमिष्टमिति।" एवञ्चानेन व्याख्यानेन स्पष्टं यदननुकूलपदाव्यवधानरूपासत्तेरभावेऽपि स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति बोधः स्वीकृतस्तेन ज्ञायते यत् केवलानां मन्दबुद्धिनामेव आसत्तेः प्रयोजनमिति।

**अत्र प्रश्नः – प्रकृतान्वयबोधाननुकूलपदाव्यवधानमासत्तिः** इति लक्षणे पदाव्यवधानमित्युक्तमस्ति तर्हि 'स्थाल्यामोदनं पचति' इत्यत्राधिकरणक्रियावाचकपदयोर्मध्ये ओदनपदेन व्यवधानमस्ति। तर्ह्युक्तलक्षणानुसारेणाऽऽसत्तेरभावात् कथं नात्र शाब्दबोधस्य बाधः? इति चेत् -

**अत्रोत्तरम्** – सत्यम्। भवदुक्तरीत्या अत्राधिकरणक्रिया-वाचकपदयोर्मध्ये ओदनपदेन व्यवधानमस्ति तथापि तच्च पदं प्रकृतान्वयबोधस्यानुकूलमेव, न तु प्रकृतान्वयबोधस्याननुकूलमिति हेतोर्नात्रोक्तलक्षणोक्तरीत्याऽऽसत्तेर्हानिर्येन बोधो न स्यात्। अतः प्रकृते सम्बद्धवाक्येऽन्वेतुं योग्यस्यैव पदस्य मध्ये व्यवधानान्न तेन शाब्दबोधे किमपि प्रतिबन्धकम्।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ

आसत्तिसिद्धान्तनिरूपणम् ॥

# अथ तात्पर्यसिद्धान्तनिरूपणम्

शाब्दबोधसहकारिकारणेष्वन्तिमस्य लक्षणमिदानीमुच्यते । तथा हि – **एतद्वाक्यं पदं वा एतदर्थबोधायोच्चारणीयमितीश्वरेच्छा तात्पर्यम् ।** अर्थस्तु स्पष्ट एव यत् प्रकृतं वाक्यं पदं वा प्रयुज्यमानमेतादृशस्यार्थस्य बोधनायोच्चारणीयमितीश्वरेच्छा तात्पर्यमिति । तेन वक्त्रा एतत्पदं श्रोतुः एतादृशार्थबोधायोच्चारणीयमिति फलितम् ।

**अत्र प्रश्नः** – यदि लक्षणोक्तरीत्येश्वरेच्छास्थलमेव ग्राह्यञ्चेत् टि-घु-भादिपारिभाषिकपदेष्वीश्वरेच्छाऽभावात् कथं बोधो भवति ?

**अत्रोत्तरम्** – लक्षणे ईश्वरपदं शिष्टप्रयुक्तमात्रस्योपलक्षण-मिति बोध्यम्, अन्यथा टि-घु-भादिपारिभाषिकपदेष्वीश्वरेच्छाया अभावाच्छाब्दबोधो न स्यात्, तत्र तत्र तत्तदर्थबोधेच्छया एव शास्त्रकारमात्रेच्छया तेषामुच्चारणात् । तथा चेश्वरपदस्य शिष्टप्रयुक्त-मात्रोपलक्षणत्वं न स्वीक्रियेत तर्हि तत्र तत्र शास्त्रकारोच्चारित-पदेभ्यो बोधानापत्तिः, इष्यते च तत्रापि बोधः । अत एव तार्किकनव्यैरीश्वरेच्छा शक्तिरित्यपेक्षयेच्छामात्रं शक्तिरिति स्वीकृतं प्रपञ्चितञ्च शक्तिप्रकरणेऽस्माभिः तन्मतनिरूपणावसरे ।

इत्थं शाब्दबोधं प्रति वक्तृतात्पर्यनिश्चयस्य हेतुत्वादेव सर्वे सर्वार्थवाचका इति शाब्दिकैर्यदुच्यते तत्पक्षे घटशब्दात् पटस्य बोधो न भवति। यतस्तत्र घटशब्दः कम्बुग्रीवादिमत्पदार्थस्यैव बोधायोच्चार्यत इति भावः ।

नानार्थपदस्थले तु प्रयोक्तुः यदर्थविषयिणीच्छा भवति सैव तात्पर्यमिति तदुक्तं – "नानार्थस्थले लोके तु 'एतत्पदं वाक्यं वा एतदर्थप्रत्ययाय मयोच्चार्यते' इति प्रयोक्तुरिच्छारूपम्" । तेन एकमर्थं निश्चित्य प्रयोक्त्रा तत्पदस्योच्चारितत्वान्नानेकार्थबोधप्रसङ्गो नानार्थस्थले । तात्पर्यनियामकञ्च लोके प्रकरणादिकमेव । प्रकरणादिना

भर्तृहर्युक्ताः "संयोगो विप्रयोगादयो" ग्राह्याः। ते च शक्तिनियामकवर्णनप्रसङ्गे विस्तरेण व्याख्यायिषत विस्तरभयान्नात्र पुनर्व्याख्यायन्ते। इत्थं प्रकरणादिज्ञानादेव 'सैन्धवमानय' इत्यादौ भोजनप्रकरणे लवणप्रत्ययः, युद्धावसरे अश्वप्रत्यश्च भवति लोके। वेदे तु सर्वत्र वेदवाक्ये ऐश्वरतात्पर्यादर्थबोधः।

अत्र पूर्वपक्षी – यदा प्रकरणादिभिः शक्तिर्नियम्यतेऽस्य पदस्यास्मिन्नर्थे शक्तिरिति तदा शक्त्यैव सर्वत्र निर्वाहसम्भवे तात्पर्यस्य किमर्थं शाब्दबोधे कारणत्वमङ्गीक्रियते ? अत्र प्रश्नकर्तुरयमाशयः – शक्तिप्रकरणे संयोगादीनां शक्तिनियामकत्वमुक्तम्, अत्र तेषां प्रकरणनियामकत्वमपि तथा च सर्वत्रापि शक्त्यैव निर्वाहः सम्भवति, तात्पर्यस्य न क्वापि आवश्यकतेति।

अत्र सिद्धान्ती – भवदुक्तरीत्या शक्त्या सर्वत्रापि निर्वाहो न सम्भवति यतो यदैकस्य शब्दस्यार्थद्वये शक्तिस्तदा तस्माच्छब्दादर्थ-द्वयविशेष्यकबोधो जायते, अर्थद्वयेऽपि तस्य शब्दस्य शक्तिसत्वात्। तथापि 'तात्पर्यं तु क्वेति न जानीमः' इत्यनुभवविरोधो भवति। यतः वक्त्रा अर्थद्वये शक्तिमच्छब्द उच्चारितः, तत्रार्थद्वस्यापि बोधो भवति परन्तु तस्य तात्पर्यं कस्मिन्नर्थे इति संशयस्तु उत्पद्यते एव। तेनात्र शक्त्या निर्वाहो न सम्भवति। अत एव 'पय आनय' इति वाक्ये प्रयुक्तेऽप्रकरणज्ञस्य 'दुग्धं जलं वाऽऽनेयम्' इति प्रश्नः सङ्गच्छते। यद्यत्रापि शक्त्या एव निर्वाहसम्भवश्चेत् पय इत्यस्य दुग्धे जले चार्थद्वये शक्तिसत्त्वात्संशय एव न स्याद्यद् वक्त्रा कस्मिन्नर्थेऽयं शब्दः प्रयुक्तः। एवञ्च तात्पर्यस्यापि हेतुत्वमङ्गीकरणीयम्।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ तात्पर्यसिद्धान्तनिरूपणम् ॥

# अथ धात्वर्थसिद्धान्तनिरूपणम्

एतावता ग्रन्थेन शाब्दबोधविषयीभूतवृत्तेस्तदाश्रयशब्दस्य च निरूपणात् परं सर्वेषामपि शब्दानां मूलभूतत्वाद्धात्वर्थसिद्धान्तो उच्यते। सर्वेषां शब्दानां धातुयोनित्वमामनन्ति शब्दतत्त्वविदः। तत्र केचिच्छाब्दिका विशिष्य शाकटायनादयः सर्वान् शब्दान् व्युत्पन्नान् मत्वा तेषां धातुयोनित्वमङ्गीकुर्वन्ति। अत्र प्रमाणं निरुक्तकृद्यास्क-वचनं – "नामाख्यातजानीति शाकटायनो नैरुक्तसमयश्च" इति (१-१२)। अपरे तु न हि सर्वाणि नामाख्यातजानि मन्यन्ते नैरुक्ते गार्ग्योऽपि। भगवान् पाणिनिस्तु केचिद्व्युत्पन्ना धातुजाः, केचिच्च अव्युत्पन्ना रूढा इति कथयति। एवमेव "उणादयो बहुलम्" (३-३-१) इति सूत्रे भाष्ये "सर्वं नाम च धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम्" इति वचनेनापि समेषां शब्दानां धातुमूलत्वं प्रतिपादितं शाकटायनादिमते। तस्मात् सकलशब्दमूलभूतस्य धातोः कोऽर्थ इति जिज्ञासायां सारेणादौ धात्वर्थमतसङ्ग्रह उच्यते -

धात्वर्थविषये नास्ति मतैक्यं समेषां शास्त्रकाराणाम्। अतः सर्वेषां मतानां विस्तरेण प्रतिपादनात् पूर्वं तत्तच्छास्त्रकारमते धात्वर्थस्वरूपं किमिति संक्षेपेण कथयामः। तेनाग्रे प्रतिपाद्यमानस्य विषयस्यावगमने सौकर्यं भविष्यति।

**अत्र मीमांसकाः** – फलमात्रं धात्वर्थः, व्यापार आख्यातप्रत्ययार्थः। शाब्दबोधे आख्यातार्थव्यापारस्य प्राधान्यम्। यथा – देवदत्तः पचतीत्यत्र देवदत्ताभिन्नैककर्तृकवर्तमानकालिक-विक्लित्त्यनुकूलो व्यापार इति।

**प्राचीननैयायिकाः** – धातोरर्थो व्यापारमात्रम्। विक्लित्तिः फलं द्वितीयाया अर्थः। शाब्दबोधे प्रथमान्तार्थस्य प्राधान्यम्।



**नव्यनैयायिकास्तु** – फलव्यापारौ धात्वर्थः (फलावच्छिन्नः व्यापार इत्य-

र्थः)। शाब्दबोधे प्रथमान्तार्थस्य प्राधान्यम्। तेन देवदत्त ओदनं पचतीत्यत्र ओदनकर्मकविक्लित्त्यनुकूलव्यापारानु-कूलकृतिमान् देवदत्त इति बोधः।

**प्राचीनवैयाकरणाः** – फलव्यापारौ धात्वर्थः। आख्यातार्थः तिङर्थः कर्तृकर्माश्रयः। फले व्यापारे च खण्डशः शक्तिः एकवृन्त-गतफलद्वयन्यायेन। शाब्दबोधे व्यापारस्य प्राधान्यम्। तेन देवदत्त ओदनं पचति इत्यतो देवदत्ताभिन्नैककर्तृक-ओदनकर्मक-वर्तमान-कालिकविक्लित्त्यनुकूलो व्यापार इति बोधो भवति। प्राचीनानां मते कर्तृवाच्यस्थले कर्मवाच्यस्थले च शाब्दबोधे व्यापारस्यैव प्राधान्यं तेन समानो बोधो देवदत्तेन ओदनः पच्यत इत्यत्रापि।

**नव्या नागेशादयः** – फलव्यापारौ धात्वर्थः। विशिष्टा शक्तिः स्वीक्रियते तथा च फलावच्छिन्नव्यापारः, व्यापारावच्छिन्न-फलं धात्वर्थ इति। कर्तृप्रत्ययस्थले फलविशिष्टव्यापारविशेष्यकः, कर्मप्रत्ययस्थले व्यापारविशिष्टफलविशेष्यकः शाब्दबोधः। एवञ्च 'देवदत्त ओदनं पचति' इत्यत्र प्राचीनानां नव्यानां च समानः शाब्दबोधः। परन्तु 'देवदत्तेन ओदनः पच्यते' इत्यत्र नव्यानां मते देवदत्तवृत्ति-वर्तमानकालिक-व्यापारजन्या ओदननिष्ठा विक्लित्तिः इति बोधः इति भेदः। अनया रीत्या संक्षेपेण धात्वर्थविषयकं मतामतान्तरं संसूच्य विस्तरेणेदानीं प्रतिपाद्यते।

**तत्रादौ भूषणकारमतम् –**

श्रीमान् कौण्डभट्टो भट्टोजिदीक्षितकृतवैयाकरणमतोन्मज्जनाख्यकारिकाग्रन्थस्य व्याख्यारूपस्वकीये वैयाकरणभूषणाख्ये ग्रन्थे धात्वर्थं निरूपयति, तदत्रानूद्यते। तथा हि – तत्र

**फलव्यापारयोर्धातुः आश्रये तु तिङः स्मृताः।**
**फले प्रधानं व्यापारः तिङर्थस्तु विशेषणम्॥ इति॥**

कारिकयानया स्वसिद्धान्त उपस्थापितो दीक्षितेन, तमेवानुससार कौण्डभट्टोऽपि। तदित्थं फलानुकूलो यत्नसहितो व्यापारोऽर्थः। अयमर्थः – फलानुकूलः = फलं व्यापारजन्यं विक्लित्त्यादि तस्यानुकूलः साधकः, यत्नसहितः = यत्नः कृतिः व्यापारस्य हेतुः तेन सहितः, व्यापारः = धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम्

इति परिभाषितः पाचनादिरूपोऽग्रे वक्ष्यमाणः, धात्वर्थ इति कथ्यते। अत्र फलानुकूलो यत्नसहित इति कथनेन यत्नः = कृतिः आख्यातार्थ इति नैयायिकमतं, भावना = यत्न आख्यातार्थ इति मीमांसकमतञ्च निराकृतम्। तत्र फलव्यापारयोरिति द्विवचननिर्देशेन फले व्यापारे च धातोः पृथक् शक्तिः, न तु फलावच्छिन्नव्यापारे एका शक्तिः। विशिष्टशक्तिस्वीकारे 'तण्डुलं पचति' इत्यादौ तण्डुलस्य, 'चैत्रेण तण्डुलः पच्यते' इत्यादौ व्यापारे चैत्रस्य चान्वयो न स्यात्, "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति न्यायेन। अत एकवृन्तगतफलद्वयन्यायेन फले व्यापारे च धातोः पृथक् शक्तिरङ्गीकार्या।

**फललक्षणम् –**

अत्र जिज्ञासा – धात्वर्थो नाम फलानुकूलो यत्नसहितो व्यापार इत्युक्तम्। तत्र कीदृशं फलं ग्राह्यं? किं "स्वरितञितः कर्त्रभिप्राये क्रियाफले" (पा. सू. १-३-७२) इति सूत्रे यमर्थमुद्दिश्य धात्वर्थक्रियायां प्रवृत्तिस्तत्फलं लौकिकम्। यथा स्वर्गमुद्दिश्य यागो विधीयते इति स्वर्गादिप्राप्तिः तत्क्रियायाः फलत्वेनोच्यते। यथोक्तं हरिणापि –

**यस्यार्थस्य प्रसिद्ध्यर्थमारभन्ते पचादयः।**
**तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम्॥**

(वा.प. ३-१२-१८)

इति। एवं चेदेतादृशफलस्वीकारादिह सकर्मकाकर्मकत्वव्यवस्थाया उच्छेदः स्यादतोऽत्र पारिभाषिकफलमेव ग्राह्यम्। तल्लक्षणन्तु एवं कथ्यते शास्त्रकृद्भिः – **"तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभि-व्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वं फलत्वम्"** इति। लक्षणे विभागजन्यसंयोगादिरूपे पतत्यादिधात्वर्थे विभागसंयोगयोः फलत्ववारणायोभयम्। कर्मप्रत्ययसमभिव्याहारे तु फलस्य विशेष्यता।

आदावेकत्र लक्षणसमन्वयं कृत्वा ततो दलसार्थक्यं विचारयामः। तत्र फलव्यापारयोरित्यत्र फलं प्रति व्यापारः प्रधानम्। प्रधानमित्यस्य प्राधान्यवदित्यर्थः।

तथा सति फलनिरूपितप्राधान्यतावान् व्यापारः, फलं च तद्विशेषणम्। फलस्य विशेषणत्वात् प्रकारता इति, व्यापारस्य च प्राधान्याद्विशेष्यतेति फलितम्। तेन फलनिरूपितविशेष्यातवान् व्यापारः। एतद् भवतां फललक्षणे समन्वयं कर्तुमुपयोगाय भवतीत्यतो विवरणं दत्तम्। अस्तु प्रकृते 'तण्डुलं पचति' इत्यत्र समन्वयः – तद्धातुः = प्रकृतपच्यादिधातुः, तदर्थो यो व्यापारः = पाकानुकूलः फूत्कारादिव्यापारः, तज्जन्यत्वे सति = फूत्कारादिव्यापारजन्यत्वे विक्लित्तिरूपफले सति तद्धात्वर्थफूत्कारादिव्यापारनिष्ठा या विशेष्यता तन्निरूपिता या प्रकारता सा तद्धात्वर्थव्यापारजन्यं यत् फलं विक्लित्तिः तस्मिन् विक्लित्तौ वर्तते इति कृत्वा लक्षणसमन्वयः। एतत् कर्तृप्रत्ययसमभिव्याहारस्थले नाम देवदत्तस्तण्डुलं पचति इत्यत्र कर्तरि लकारेण तिङा कर्ताभिधीयते एतादृशस्थले कर्तरि तिङ् सहोच्चारितस्थले इत्यर्थः। कर्मप्रत्यसमभिव्याहारस्थले तु फलस्य विशेष्यता इति बोध्यम्। यतः कर्मवाच्यस्थले फलस्य व्यापारजन्यत्वेन केवलं विशेष्यता एव। कर्मवाच्ये हि आख्यातस्य कर्म एव विषयः न कर्ता। तेन कर्मणः प्राधान्येन फलस्य विशेष्यत्वमेव न तु विशेषणत्वम्। समुदितार्थस्तु कर्तृवाच्ये फलस्य विशेषणत्वं व्यापारस्य विशेष्यत्वं तद्विपरीतं कर्मवाच्ये फलस्य विशेष्यत्वं व्यापारस्य च विशेषणत्वमिति। अत्र जन्यताऽऽरोपिताऽनारोपिता च। तेन 'ईश्वरस्तिष्ठति' 'पत्ये शेते' इत्यादौ वास्तविकजन्यताया अभावेऽप्यारोपितजन्यत्वमादाय लक्षणसमन्वयः कर्तुं शक्यते। ईश्वरस्थितेः पत्युद्देश्यक-शयनादेश्च वस्तुतो धात्वर्थजन्यत्वात् स्थितौ शयनादौ च जन्यत्वारोपः। अत्र फललक्षणे अंशद्वयम्, तन्निवेशेन यत्फलितं तदिदानीमुच्यते – विभागजन्यसंयोगः पतधात्वर्थः। अत्र विभागे फलत्वस्यातिव्याप्तिवारणाय 'तद्धात्वर्थजन्यत्वे सति' इति विशेषणदलं दत्तम्। विभागश्च न पतधात्वर्थजन्यः। 'तद्धात्वर्थजन्यत्वे सति' इति निवेशाभावे तु विभागस्यापि फलत्वं स्यात्, तथा सति तदाश्रयस्य वृक्षादेरपि कर्मत्वापत्त्याऽपादानत्वाऽनापत्त्या 'वृक्षात् पतति' इति प्रयोगो न स्यात्।



एवमेव संयोगस्य फलत्ववारणाय विशेष्यदलम्। अन्यथा पतधात्वर्थविभा-

गजन्यत्वात् संयोगस्य फलत्वापत्त्या तदाश्रयस्य भूम्यादेः कर्मत्वापत्तिः। एवञ्च 'भूमौ पतति' इति प्रयोगोऽपि न स्यात्।

इदं फलस्वरूपं नव्यनागेशादिमतमनुसृत्य परिष्कृतम्। प्राचीनानां मते तु कर्तृवाच्यस्थले कर्मवाच्यस्थले च समानो बोध इति धात्वर्थमतसङ्ग्रहकथनवेलायामेवोक्तमस्माभिः। अत एव च **परमगुरुचरणैः श्रीमद्भिः पेरि सूर्यनारायणशास्त्रिचरणैः भूषणसारव्याख्यायां तत्त्वदर्शिन्यां "कर्मकृत्प्रत्ययासमभिव्याहारे तद्धात्वर्थविशेषणत्वे सति तद्धात्वर्थत्वम्"** इति परिष्कृतम्। अन्यथा नवीनमतानुसारिलक्षणाश्रयणे तु मूलभूषणग्रन्थासङ्गतिः। तत्त्वस्य स्पष्टतायै दीक्षितनागेशयोर्मते कुतः फललक्षणे व्यत्यासः स्वीकार्य इति तदर्थं तत्रत्यः तत्त्वदर्शिनीग्रन्थ एव यथायथमुपस्थाप्यते भवतां पुरतः। तदित्थं - तत्त्वञ्च कर्मकृत्प्रत्ययासमभिव्याहारे तद्धात्वर्थविशेषणत्वे सति तद्धात्वर्थत्वम्। चैत्रस्तण्डुलं पचतीत्यादौ विक्लित्यनुकूलव्यापारस्य धात्वर्थतया विक्लित्त्यादेरेव फलत्वं, न भोजनादेरित्यदोषः। तद्धात्वर्थविशेषणत्वञ्च तद्धात्वर्थनिष्ठविशेष्यता-निरूपितप्रकारतावत्त्वम्। पचति चैत्र इत्यादौ पच्याद्यर्थव्यापारेऽति-प्रसङ्गवारणाय सत्यन्तम्। पश्य मृगो धावतीत्यादौ धावनस्य दृश्यर्थविशेषणतया दृशिफलत्ववारणाय सत्यन्ते तत्पदम्। अन्यथा धावनरूपदृशिफलाश्रयत्वेन मृगस्य कर्मत्वात्ततो द्वितीयापत्तिः। न च दर्शने धावनस्यान्वयात्प्रागेव मृगस्य धावनक्रियायामन्वयादन्तरङ्ग-त्वाद्धावनक्रियाश्रयत्वेन मृगस्य कर्तृत्वात्तत्संज्ञया कर्मसंज्ञाया बाधान्न द्वितीयापत्तिरिति वाच्यम्। पक्त्वौदनो मया भुज्यत इत्यादाविव प्रधानानुरोधिकर्मत्वस्यैवान्तरङ्गकर्तृत्वबाधेनप्रवृत्तेर्दुर्वारत्वात्। अन्तर-ङ्गादपि प्रधानकार्यं बलवत्त्वस्य "हेतुमति च" (३-१-२६) इति सूत्रस्थाकरसम्मतत्वात्। अत एव गमयति ग्रामं चैत्रमित्यादौ प्रयोज्यनिष्ठव्यापारस्य निरुक्तफललक्षणाक्रान्तत्वात्तदाश्रयस्य "कर्तुरीप्सिततमं कर्म" (१-४-४९) इति सूत्रेणैव कर्मत्वसिद्ध्या गत्यादि-सूत्रं नियमार्थम् - णिजर्थेनाप्यमानस्य यदि कर्मत्वं तर्हि गत्याद्यर्थकधातुयोग एवेति। तेन पाचयति चैत्रेण मैत्र इत्यादौ न प्रयोज्यस्य कर्मत्वमित्याद्याकरग्रन्थसङ्गतिः। चैत्रेण पक्वतण्डुल इत्यादौ चैत्रकर्तृकव्यापारजन्य-

विक्लित्त्याश्रयाभिन्नस्तण्डुल इति बोधोदयेन विशेष्यतया भासमानस्य विक्लित्त्यादेः फलत्वसिद्धये कर्मकृत्प्रत्ययासमभिव्याहार इति। तदसमभिव्याहृतस्थलीयधात्वर्थ-विशेषणत्वमादाय विक्लित्त्यादेः फलत्वनिर्वाहः स्पष्ट एव। न च फललक्षणे कर्तृ-प्रत्ययसमभिव्याहार इति विशेषणं दीयतां, तेन पक्वस्तण्डुल इत्यादौ विक्लित्त्यादेः फलत्वं सेत्स्यतीति वाच्यम्। कर्मकृत्प्रत्ययस्थले फलविशेष्यको बोधस्तद्भिन्नस्थले सर्वत्रापि व्यापारविशेष्यक एव बोध इत्यभिप्रयतां दीक्षितादीनां मते पक्वस्तण्डुल इ-त्यादौ विक्लित्त्यादेः फलत्वसिद्धेरेव तत्प्रयोजनस्य वक्तव्यतया तद्विशेषणस्यापि म-दुक्तार्थ एव पर्यवसन्नत्वात्, व्यापक-विशेषणोपादानस्य प्रकृत उपयोगाभावाच्च। क-र्मतिङन्तेऽपि फलविशेष्यकमेव बोधमभ्युपगच्छतो नागेशस्य मते परं तद्विशेषणं शोभतां नाम। कर्मसंज्ञासूत्रे कौस्तुभे "गोदोहनी, पक्ता, पक्व इत्यादिकृदन्तानां ना-मार्थेऽभेदान्वयानुरोधादाधार एवार्थः, फलभा-वनयोस्तु विशेषणविशेष्यभावो वि-परीतः" इति दीक्षितस्य वचनम्। कर्तृकर्मविभक्त्योराधार आधेयं वाऽर्थ इति व्य-वस्थापनात्तुल्यन्यायात् कृतामप्याधार आधेयं वाऽर्थः स्यादत उक्तं - गोदोहनी-त्यादि।

नन्वेवं पक्वस्तण्डुल इत्यादिप्रयोगानुपपत्तिः विक्लित्त्यनु-कूलव्यापाराश्रयाभेदस्य तण्डुलादौ बाधादत उक्तं– फलभावनयोस्तु विशेष-णविशेष्यभावो विपरीत इति। तथा च फलस्य प्राधान्यात्तत्र व्यापारजन्यवि-क्लित्त्याश्रयाभिन्नस्तण्डुल इति बोधात्तत्प्रयोग उपपद्यत इति भावः। इदं च कर्मकृदन्तविषयकमेव, न तु कर्मतिङन्तविषयकमपि। पच्यते तण्डुलश्चैत्रेणेत्यादौ पक्वस्तण्डुल इत्यादाविव तण्डुलादौ नामार्थेऽभेदान्वयस्याभावात्। चैत्रकर्तृकः तण्डुलाश्रय विक्लित्त्यनुकूलो व्यापार इति तत्र बोधः। धातूपस्था-प्ययोरपि फल-व्यापारयोः कर्मकृत्समभिव्याहारे विशेषणविशेष्य-भावव्यत्यासः" इति "रामेण बाणेन हतो बाली" इत्युदाहरणे कारकप्रकरणे मनोरमायां स्पष्टमेवोक्तं दीक्षितेन। अत एव मनोरमायां प्रकृतग्रन्थे च कर्मतिङन्तेऽपि व्यापारविशेष्यक बोध उपवर्णित इत्यलम्। इत्थं फलस्य लक्षणमुक्तम्। सम्प्रति व्यापारस्य लक्षणमुच्यते।

**व्यापारलक्षणम् –**

**व्यापारत्वञ्च "धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम्"** । पचतीत्यादौ विक्लित्त्यादिधात्वर्थफलं तस्य जनकः फूत्कारादि-व्यापारः, स च पच्यादिधातुवाच्यश्च । अत्र विक्लित्त्यादिफल-जनकत्वं फूत्कारादिव्यापारे तत्त्वे सति, पच्यादिधातुवाच्यत्वञ्च फूत्कारादिव्यापारे इति लक्षणसमन्वयः । अत्रापि लक्षणे अंशद्वयम् । तत्र धातुवाच्यत्वस्य फलेऽपि सत्त्वे फलेऽतिव्याप्तिवारणाय 'धात्वर्थफलजनकत्वे सति' इति सत्यन्तं विशेषणदलम् । एवञ्च स्वस्य स्वजनकत्वाभावान्न तत्र दोषः । धात्वर्थफलजनकत्वे इत्येतावन्मात्रोक्तौ 'काष्ठैः तण्डुलं पचति' इत्यादौ काष्ठवह्न्यादिकरणानामपि व्यापारस्य फलजनकत्वात्तत्रातिव्याप्तिः स्यात् । तथा सति तत्र तृतीयाद्यनापत्तिः । अतस्तद्वारणाय धातुवाच्यत्वमपि देयम् । पच्यादिधात्वर्थफलं विक्लित्तिः तज्जनकत्वं काष्ठादीनामपि वर्तते तथापि पच्यादिधातुवाच्यत्वं तु काष्ठादिगतप्रज्वलनादीनां नैव भवति । अतस्तत्र नातिव्याप्तिः । यदा तु काष्ठादिगतव्यापाराणां धात्वर्थविवक्षा तदा तु इष्टमेव तेषामपि व्यापारत्वम् । तेन काष्ठं पचति, स्थाली पचति इत्यादिप्रयोगाः सङ्गच्छन्ते इत्यन्यदेतत् ।

सम्प्रति फलानुकूलो यत्नसहितो व्यापार इति धात्वर्थ-लक्षणे **'अनुकूलम्'** इति पदमागतम् । तत्रानुकूलत्वञ्च किमिति जिज्ञासा भवति । तदुच्यते – **अनुकूलत्वं संसर्गः । अनुकूलत्वञ्च फलनिष्ठजन्यतानिरूपितजनकत्वम् । संसर्गश्चात्र फलव्यापारयोः जन्यजनकतारूपसंसर्गः** । फलस्य जन्यत्वं व्यापारस्य च जनकत्व-मिति तयोः जन्यजनकतारूपपारस्परिकसम्बन्धत्वमेवानुकूलत्वम् । तन्निरूपितं फलं = विक्लित्तिः तन्निष्ठा या जन्यता तन्निरूपित-जनकत्वम् = उत्पादकत्वं फूत्कारादिव्यापारे इति समन्वयः ।

**व्यापारमुख्यविशेष्यकशाब्दबोधे प्रमाणम् –**

वैयाकरणैः व्यापारमुख्यविशेष्यकशाब्दबोधः स्वीक्रियते । तत्र फलं व्यापारश्च धात्वर्थः । धातुश्च प्रकृतिः । एवं सति "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्य प्राधान्यम्" इति न्यायेन प्रत्ययार्थस्य प्राधान्यात् कथं प्रकृत्यर्थस्य व्यापारस्य

प्राधान्यमुच्यते ? इति चेद्व्यापारस्य प्राधान्यमिति कथनेऽस्ति बीजम् – "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्कः । अयमर्थः – भाव्यतेऽनेनेति भावो व्यापारः, भावयत्येनमिति फलं भावः, स प्रधानं यस्मिन् तद् भावप्रधानम् । कर्तृवाच्ये व्यापारस्य कर्मवाच्ये फलस्य च प्राधान्यमित्यर्थः । अत्र निरुक्ते आख्यातमुद्देश्यम्, भावप्रधानत्वं विधेयमित्यतः आख्यातं भावप्रधानमिति योजना कार्या । आख्यातम् = तिङन्तम्, न तु प्रत्ययमात्रम् ।

एवमेव सत्त्वप्रधानानि इत्यत्र सत्त्वं = द्रव्यम्, प्रधानं यस्मिन् तत् सत्त्वप्रधानं, तानि सत्त्वप्रधानानि नामानि = सुबन्तानि । एवञ्च प्रकृतनिरुक्तकृद्यास्कवचनाद्व्यापारमुख्यविशेष्य-त्वमायातम् ।

**तत्र भूषणे कौण्डभट्टः** – तिङर्थः कर्तृकर्मसंख्याकालाः । तत्राधाराधेयसम्बन्धेन कर्ता व्यापारस्य विशेषणं यतो व्यापारः कर्तरि आश्रितः । फलस्य कर्माश्रितत्वात् कर्म फलस्य विशेषणम् । संख्या कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये कर्मणि विशेषणं, समानप्रत्ययोपात्तत्वात् । इत्थमाख्याताद् यः शाब्दबोधो भवति स व्यापारप्रधानः, यस्य संख्याविशिष्टकारकं विशेषणं भवति । कर्तृवाच्ये तु कर्ता कर्मवाच्ये तु कर्म व्यापारस्य विशेषणे भवतः । एतदतिरिक्तं कालोऽपि व्यापारस्य विशेषणम् । कर्तृवाच्ये भाववाच्ये च क्रियाप्राधान्यं, कर्मवाच्ये तु फलस्य प्राधान्यम् । कर्तृवाच्ये फलमपि व्यापारविशेषणमिति ।

**नागेशमतम् –**

एतावता यत्प्रतिपादितं तत् दीक्षितानुयायिकौण्डभट्टादीनां मतमासीत् । परन्तु तन्मते क्वचिद् विप्रतिपन्नः नागेशः स्वमतमुपस्थापयति । **तत्रायं भेदः** – धातोः फले व्यापारे च न पृथक् शक्तिः, उद्देश्यविधेयभावेनान्वयापत्तिस्तयोः स्यात् । क्वचित्तु व्यापारस्योद्देश्यत्वं फलस्य विधेयत्वं, क्वचिच्च फलस्योद्देश्यत्वं व्यापारस्य च विधेयत्वम्, यतो द्वयोरपि पृथक्शक्तित्वस्वीकारे उद्देश्यविधेयभावस्थितिः तयोः स्वाभाविक्येव । किञ्चैकपदे व्युत्तपत्तिद्वयकल्पनमतिगौरवम् । तथाहि – यदा व्यापारस्य मुख्यत्वं फलस्य गौणत्वं तदा फलविशेषणकव्यापारबोधे कर्तृप्रत्यय-

समभिव्याहृतधातुजन्योपस्थिति कारणम्, यदा तु फलस्य मुख्यत्वं व्यापारस्य च गौणत्वं तदा व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्यकारण-भावद्वयकल्पनं गौरवाय। एवमेव धातोः फले व्यापारे च अर्थद्वये शक्तिकल्पमपि गौरवाय। तद्धि बोधजनकतामेव शक्तिं स्वीकुर्वतां तेषां धातोरर्थद्वयस्वीकारे बोधजनकत्वसम्बन्धद्वयकल्पनमति-गौरवमिति। तस्मात् फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च धातूनां शक्तिः। न च विशिष्टे शक्तिस्वीकारात् विनिगमनाविरहात् सर्वत्रोभयविशेष्यकबोधापत्तिरिति वाच्यम्। कर्तृकर्मार्थकतत्तत्प्रत्य-यसमभिव्याहारस्य च तत्तद्बोधे नियामकत्वात्। एतेन न सर्वत्रो-भयविशेष्यकबोधापत्तिरिति सर्वं सुस्थम्। इत्यनया रीत्या नागेशेन प्राचीनानां मते दोषमुद्भाव्य स्वमते फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च धातोः शक्तिरिति युक्तिपूर्वकं प्रतिपादितम्।

**मीमांसकमतम् –**

मीमांसकाः विशिष्य मण्डनमिश्रादयः धात्वर्थविषये इत्थमभिप्रयन्ति – फलं धात्वर्थः, व्यापारः प्रत्ययार्थ इति। तेषामयमभिप्रायः – १. चैत्रस्तण्डुलं पचति, चैत्रस्य पाकः, चैत्रो मैत्रेण पाचयति इत्यादौ धातुप्रकृतिकप्रत्ययान्ते फलव्यापारयोः भानं सर्वसम्मतम्। परन्तु उभयोः धातुवाच्यत्वस्वीकारे धातोर्नानार्थकतापत्तिः। अतः धातोः फले, प्रत्ययस्य च व्यापारे शक्तिः स्वीकार्या। अत एव पचतीत्यादितः फलप्रकारकभावनाविशेष्यकबोधो जायते। व्यापारस्य धात्वर्थत्वे तु तदनुपत्तिरेव। २. एवं "प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थः प्रधानम्" इत्यभियुक्तोक्तिरपि अस्माकं मते सङ्गच्छते। ३. धातुभ्यः कृतां स्वल्पसंख्याकतया बहुसंख्याकधातूनां नानार्थकतास्वीकारापेक्षया अल्पसंख्याकानां कृतामेव व्यापारवाचकत्वे लाघवं वर्तते। ४. किञ्च व्यापारेण स्वाश्रयस्य आक्षेपात् कर्तुरभिधानम्, कर्माख्याते प्रधानेन फलेन स्वाश्रयाक्षेपात् कर्मणोऽभिधानम्। एवञ्च कर्तृकर्मणोः आख्यातवाच्यत्वावाच्यत्वाभ्यां न तयोरभिधानानभिधानव्यवस्था। किन्तु फलव्यापाराभ्यां तयोराक्षेपानाक्षेपाभ्याम्, अतो न दोष इति।

**मीमांसकमतखण्डनम् -**

एवञ्च मीमांसकैः फलं धात्वर्थ व्यापारः प्रत्ययार्थ इति पक्षे या युक्तयः प्रदर्शिताः ताः क्रमेण निराक्रियन्ते। तदित्थं – व्यापारः प्रत्ययार्थः भवितुं नार्हति। तथा सति "लः कर्मणि च भावे चाकर्मकेभ्यः" (पा.सू. ३-४-६९) इति पाणिन्यनुशासनस्य विरोधः स्यात्। तत्र सूत्रे "कर्तरि कृत्" (पा.सू. ३-४-६७) इति सूत्रात् कर्तरि इति सम्बध्यते। तदनुसारेण सकर्मकेभ्यः लकाराः कर्तरि कर्मणि च भवन्ति, अकर्मकेभ्यस्तु भावे कर्तरि चेत्यर्थः लभ्यते। बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य कर्तरि कर्मणि च लकाराणां विधानम्। तेन कर्तृकर्मणी एव प्रत्ययार्थत्वेन स्वीकार्ये न तु व्यापारः। एवञ्च व्यापारार्थस्वीकारे सूत्रविरोधः स्पष्ट एव।

अत्र भवन्तो मीमांसका यदि एवं वदन्ति यत् सूत्रे भावप्रधाननिर्देशः स्वीक्रियतां तथा च लकाराः कर्तरि = कर्तृत्वे, कर्मणि = कर्मत्वे विधीयन्ते। कर्तृत्वञ्च कृतिरेव, कर्मत्वञ्च फलमेव तेन व्यापारस्य प्रत्ययार्थत्वं निर्बाधमेवेति चेत्, न। पचति, पक्ष्यति, पक्ववान् इत्यादौ फूत्कारादिप्रतीतये (फूत्कारादिव्यापारः प्रत्ययार्थत्वेन स्वीक्रियते तदा सर्वत्र तत्प्रतीतये) तत्रानेकप्रत्ययानां = लट्-लृट्-लङादीनां शक्तिकल्पनापेक्षया एकस्य धातोरेव शक्तिकल्पने लाघवम्।

यदि च भवद्भिः मीमांसकैः उच्यते यत् अनेकधातूनां शक्तिकल्पनं गौरवमिति चेत्, तदपि न। भवन्मते यदि फूत्कारादिव्यापारः आख्यातप्रत्ययार्थः तर्हि गच्छति इत्यादावपि स एव प्रत्ययः, तत्रापि समानार्थप्रतीतिवारणाय तद्बोधे पचादिसमभिव्याहारस्यापि कारणत्वं वक्तव्यम्। तदित्थं – आख्यातार्थफूत्कारत्वावच्छिन्नविषयकशाब्दबोधं प्रति पच्धातुसमभिव्याहृततिङ्पदजन्योपस्थितिः कारणमिति अनेक कार्यकारणभावकल्पनम्। तच्चातीव गौरवम्। तदभावे गच्छति, पतति, पचति इत्यादीनां समानार्थप्रतीतिदोषः। अतः लाघवात् धातोरेव शक्तिकल्पनं ज्यायः।

यदि भवद्भिः मीमांसकैः उच्यते यद् धातोः व्यापारवाचकत्वे अस्मन्मतेऽपि स दोषो दुरुद्धरः, अस्माभिरपि तत्तद्धातुसमभिव्याहारस्य कारणत्वं वक्तव्यमिति तुल्य-

मेव गौरवमिति इति चेत्, न। व्यापारो यदि प्रत्ययार्थो न तु धात्वर्थः तदा स्वार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्, स्वार्थव्यापारसमानाधिकरणफलवाचकत्वम् अकर्मकत्वम् इति व्यवस्था न स्यात्।

यदि च भवद्भिः मीमांसकैः प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्, तत्सामानाधिकरणफलवाचकत्वमकर्मकत्वम् इति तेन व्यापारस्य प्रत्ययार्थत्वेऽपि भवन्मते सकर्मकार्मकव्यवस्था सूपपादा। अयमर्थः - आख्यातप्रत्ययार्थो यो व्यापारस्तद्व्यधिकरणं यत् फलं तस्य वाचको धातुः सकर्मकः, एवमेव आख्यातप्रत्ययार्थो यो व्यापारस्तत्सामानाधिकरणं यत् फलं तस्य वाचको धातुः अकर्मकः इति व्यवस्था सम्भवति। एवमेव प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वम्। घटं भावयति इत्यादौ णिजर्थव्यापारव्यधिकरफलाश्रयत्वेन कर्मत्वम् (णिजर्थो यो व्यापारः तद्व्यधिकरणं यत् फलं तदाश्रयस्य प्रयोज्यकर्तुः "कर्तुरीप्सित०" इति कर्मत्वं सिद्ध्यति।) इत्यादिकमुच्येत तर्हि एतत्पक्षे अभिधानानभिधानव्यवस्थाया उच्छेदः स्यात्। यतः "अनभिहिते" (२-३-१) इत्यधिकारे विभक्तिव्यवस्था दृश्यते। यथा चैत्रेण पच्यते तण्डुलः, चैत्रः पचति तण्डुलमिति। आद्ये तिङा कर्तुः, द्वितीये कर्मणश्चानभिधानात् तृतीया द्वितीया प्रवर्तेते इति शाब्दिकमते कर्तृकर्मणोः अभिधानानभिधानव्यवस्था सूपपादा। आख्यातस्य व्यापारार्थकत्ववादिनां भवतां मते निरुक्तव्यवस्थाया उच्छेदः स्पष्ट एव।

न च भवद्भिः व्यापारेणाश्रयाक्षेपात् कर्तुः अभिधानं, कर्माख्याते च प्रधानेन फलेन स्वाश्रयाक्षेपात् कर्मणः अभिधानमिति वाच्यम्। जात्याक्षिप्तव्यक्तेरिव आश्रयस्य प्राधान्यापत्तौ "क्रियाप्रधानमाख्यातम्" इति यास्कवचनविरोधः स्यात्। यतः भवतां मते जातिः पदार्थः। जातिश्चाश्रयं विना अनुपपन्ना सती व्यक्तिमाक्षिपति, आक्षिप्ताया व्यक्तेर्यथा प्राधान्यं तत्रावगाहते तद्वत् आख्यातप्रत्ययार्थव्यापारेण आक्षिप्ताश्रयस्य = कर्तृकर्मणोः प्राधान्यात् आख्यातं क्रियाप्रधानमिति यास्कवचनविरोधः।



अपि च पूर्वोक्तरीत्या युष्मन्मते फलस्य धातुना बोधः, तदाश्रयस्य कर्मणश्चाक्षे-

पेण बोधस्तर्हि कर्मणि लकारविधानं व्यर्थम्। तथैव व्यापारस्य आख्यातेन बोधः, तदाश्रयस्य कर्तुश्चाक्षेपेणैव लाभसम्भवेन "लः कर्मणि०" (३-४-६९) इति सूत्रेण कर्तरि लकारविधानं व्यर्थम्।

एवमेव भवतां मते व्यापारस्य प्रत्ययार्थत्वे कर्तरि कर्मणि च विहितानां कृत्-प्रत्ययानां कारकभावनोभयवाचकत्वे गौरवम्। तत्र कर्तृकर्मादिकारकेषु शक्तिः व-क्तव्या तथैव भावनायां धात्वर्थक्रियायाञ्च शक्तिः वक्तव्या। अस्मन्मते तु धातोः व्यापारार्थकत्वे कर्तृकर्मार्थमात्रे शक्तिर्वक्तव्येति लाघवम्।

किञ्च भवद्भिर्यदि कृतां कारकभावनोभयवाचकत्वरूपगौरवं परिहर्तुं तेषां कार-कार्थ एव गृह्यते, तदा भावविहितानां ल्युडादीनां व्यापारार्थकत्वाभावात् गमनमि-त्यादि व्यापारार्थरूपमर्थं बोधयितुं न प्रभवन्ति, किन्तु तस्यार्थः संयोगमात्रम् (फ-लमात्रमित्यर्थः) एवार्थः भवेत्, येन ग्रामः संयोगवान् इत्यादेरिव 'ग्रामो गमनवान्' इत्यनिष्टप्रयोगोऽपि स्यात्। यदि तु व्यापारार्थकत्वं स्वीक्रियेत तदा व्यापारस्य वा-चकत्वे तेन व्यापारेण स्वाश्रयस्य कर्तुः अभिधानं च स्यात्। तथा सति अभिधाने प्रथमेति नियमात् 'चैत्रस्य गमनम्' इत्यत्र कर्तुरनभिधानप्रयुक्तषष्ठी न स्यात्, प्रथमा च स्यादिति दोषः। एतानि दूषणानि धातोः फलमात्रवाचकत्वे सम्भवन्ति।

अतः परं **तिङः व्यापारवाचकत्वे दूषणानि** उच्यन्ते। तत्र 'गुरुः शिष्याभ्यां पाचयति' इत्यत्र "हेतुमति च" (३-१-२६) इति सूत्रबलात् प्रयोजकव्यापारस्य णि-जर्थत्वे स्थिते प्रयोज्यव्यापारः आख्यातार्थो वाच्यः। एवञ्च संख्यायाः स्ववाचका-ख्यातार्थव्यापारेऽन्वयिनि एव अन्वयात् शिष्याभ्यामिति द्विवचनानापत्तिः। पाच-यति इति इत्येकवचनानापत्तिश्च। गुरोरनभिधानात् तत्र प्रथमाया अनापत्तिश्च। शिष्यशब्दात् तदापत्तिश्च। **अयं भावः** – पाचयतीत्यादौ व्यापारद्वयम् पाकानुकू-लोव्यापारः तदनुकूलो च यो व्यापारः णिजर्थश्च। एवञ्च प्रयोजकव्यापारस्य णि-जर्थत्वात् प्रयोज्यव्यापारः आख्यातप्रत्ययस्यैवार्थो वाच्यः। तथा सति संख्यायाः स्वम् = संख्या, तद्वाचकः यः आख्यात्प्रत्ययः, तस्यार्थो यो व्यापारः तस्मिन् अ-न्वयिनि = प्रयोज्ये एव अन्वयात्, एकप्रत्ययोपात्तत्वात् संख्याव्यापारयोरेकत्र एव

प्रयोज्ये अन्वयः स्यात्। तथा सति आख्यातप्रत्ययेन एकत्वसंख्याया उक्तत्वात् शिष्याभ्यामिति द्विवचनापत्तिः। प्रयोज्यकर्तृनिष्ठव्यापारद्वयबोधनाय एकवचनं विहाय द्विवचनापत्तिश्च स्यात्। किञ्चाख्यातप्रत्ययेन व्यापारेण स्वाश्रयस्याक्षेपात् प्रयोज्यकर्त्रभिधानं, प्रयोजककर्तुः गुरोस्तु अनभिधानम्। तेन तत्र अनभिधानात् प्रथमां विहाय कर्तरि तृतीया स्यात्। अपि च तिङर्थव्यापारः प्रयोज्यव्यापारः, तेन स्वाश्रयस्याक्षेपात् शिष्ययोरेवाभिधानं तर्हि तत्र प्रथमा स्यात्। इत्येते अनेके दोषाः सन्ति फलं धात्वर्थः, व्यापारः प्रत्ययार्थ इति मीमांसकमते।

**क्रियास्वरूपम् –**

सम्प्रति प्रसङ्गाद् क्रियास्वरूपं विवेच्यते। तथा हि –

सर्वकारकान्वयितावच्छेदकधर्मवती क्रिया। सर्वेषां कारकाणां धात्वर्थक्रियायामेव अन्वयो भवति, तेन अन्वयिता क्रियायाम्, अन्वयितावच्छेदकत्वं क्रियायां, तद्धर्मवती क्रिया। एवञ्च कारकान्वयितावच्छेदकधर्मवत्त्वं क्रियात्वमिति कथनेनैवेष्टसिद्धे 'सर्व' इति विशेषणं स्फुटप्रतीतये। अधिकरणस्यापि स्वाश्रयद्वारा तत्रान्वयोऽस्त्येवेति भावः। कारकत्वञ्च भाष्ये "करोति = क्रियां निर्वर्तयति" इति व्युत्पत्तिप्रदर्शनात् क्रियाजनकत्वमेव, न तु क्रियानिमित्तत्वमिति। एवञ्च क्रियाजनकत्वात् कारकस्य जनकत्वं क्रियायाश्च जन्यत्वमिति आयातम्। तेन जन्यजनकयोः परस्पराकाङ्क्षत्वेन कारकक्रिययोः परस्परान्वयस्यैवौचित्यम्।

**अत्र शङ्का** – यथा 'किं करोति' इति प्रश्ने 'पचति' इत्युत्तरं भवति, तद्वत् 'अस्ति' इत्यत्रोत्तराभावाद् अस्त्यादीनां क्रियात्वं न स्यात्? इष्टं च तत्रापि। इति चेदत्र वाक्यपदीयोक्तं क्रियास्वरूपमुक्त्वा शङ्कासमाधानं करोति परमलघुमञ्जूषाकारः। तथा हि –

**यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।**
**आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥ १ ॥**

(वा.प. ३-८-१)



**गुणभूतैरवयवैः समूहक्रमजन्मनाम्।**

**बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥२॥**

(वा.प. ३-८-४)

इति भूवादिसूत्रस्थप्रतिपादकहरिग्रन्थे क्रियास्वरूपं वर्णितमस्ति। कारिकयोश्चार्थः मञ्जूषादिग्रन्थेषु एवं विवृतम् - क्रमजन्मनां व्यापाराणां समूहं प्रति गुणभूतैरवयवैः युक्तः सङ्कलनात्मिकया एकत्वबुद्ध्या प्रकल्पिताभेदरूपः समूहः क्रियेति व्यवह्रियते इति द्वितीयकारिकार्थः। अत्रावयवाश्रयं पौर्वापर्यं समुदायाश्रयमेकत्वम्। क्षणनश्वाराणां व्यापाराणां वस्तुभूतसमुदायाभावात् बुद्ध्या इत्युक्तम्। पचति, पक्ष्यति इत्यादावसिद्धम्, अपाक्षीत् इत्यादौ सिद्धमसिद्धं वा साध्यत्वेनाभिधीयमानं क्रिया। आश्रितेति योगदर्शनं कृतमवयवानां क्रमेणोत्पत्त्या। अत एवाश्रितक्रमरूपा क्रियेति आदिमकारिकार्थः। एकैकावयवेऽपि समूहरूपारोपादधिश्रयणकालेऽपि पचतीति व्यवहारः। अस्य सर्वस्यापि ग्रन्थस्यायमाशयो यत् – क्रिया नाम साध्यत्वेनाभिधीयमानेति। तत्र साध्यत्व हि न केवलमसिद्धरूपमपितु सिद्धमसिद्धं वा सर्वमपि साध्यत्वेनैव प्रतीयमानम्। तेन पचति, पक्ष्यति, अपाक्षीत् इत्यादौ सर्वत्रापि सिद्धासिद्धरूपासु क्रियासु साध्यत्वरूपव्यवहारः। आश्रितक्रमरूपेत्यनेन अधिश्रयणादधःश्रयणपर्यन्तमनेकव्यापाराणां पौर्वापर्यमिति सूचितम्। पचति इत्युक्ते अधिश्रयणादधःश्रयणपर्यन्तं फूत्काराद्यनेकमध्यवर्तिव्यापाराणां समूहः क्रियेति व्यवहारापन्नः। तेन पचधातोर्नानार्थतापत्तिरपि न। सैवाश्रितक्रमरूपा क्रियेति व्यवहारमाप्नोति। एते च ये अधिश्रयणादधःश्रयणपर्यन्तं फूत्काराद्यनेकमध्यवर्तिव्यापाराः ते क्रमेणोत्पद्यन्ते। तत्र सत्स्वपि अनेकेषु व्यापारेषु बुद्धिप्रकल्पितमभेदमादाय एका क्रियेति व्यवहारः सङ्गच्छते। तदेवोक्तं वाक्यपदीयेऽपि –

**एकदेशे समूहे वा व्यापाराणां पचादयः।**
**स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः ॥इति॥**

(वा.प. ३-७-५८)

अयमर्थः – व्यापारणां = क्रमिकोत्पत्तिमतामवान्तरव्यापाराणाम्, एकदेशे = अवयवे, समूहे = समुदाये, तुल्यरूपं समाश्रिताः पचादयः स्वभावतः प्रवर्तन्ते इति

योजना। एवञ्चावयवेऽपि पचतीति व्यवहारः उपपद्यते समूहवत्।

**क्रियायाः सिद्धसाध्यत्वे मतभेदनिरूपणम् –**

क्रियायाः सिद्धत्व-साध्यत्वविषयेऽपि भूषणकारनागेशयोश्च परस्परं मतभेदो वर्तते। अतः तत्रादौ भूषणकारस्य मतमनूद्यते।

**भूषणकारादीनामतानुवादः –**

एतन्मते **सिद्धत्वं हि – "क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजात्यवत्त्वे सति कारकत्वेन क्रियान्वयित्वे सति कारकान्तरान्वयायोग्यत्वम्"।**

समन्वयः – क्रियान्तरम् = अन्या क्रिया, तस्याः या आकाङ्क्षा अस्या अन्वयिनी का क्रिया इत्येवंरूपा, तस्याः उत्थापकतायाः अवच्छेदकं = परिचायकं यद् वैजात्यं = विजातीयधर्मः, तद्वत्त्वे सति, कारकत्वेन क्रियायामन्वयित्वे च सति कारकान्तरम् = अन्यत् कारकम्, तदन्वयायोग्यत्वम्। **अयं भावः** = यत्र अन्यस्याः क्रियाया विषयिणी जिज्ञासाया उत्थापकता स्यात्, क्रियायामन्वयः स्यात्, अन्यस्य कारकस्य च अन्वय योग्यता च न स्यात् सा सिद्धपदाभिधेया। यथा पाकः इति प्रयुक्ते क्रियते, कृतः, करिष्यते इति वा क्रियान्तरजिज्ञासा भवति, तत्रैवान्वयश्च भवति तस्य कारकस्य, अन्यस्य कारकस्य च तत्र आकाङ्क्षा न भवति।

**साध्यत्वं तु – "क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं सत् कारकान्तरान्वययोग्यतावच्छेदकरूपवत्त्वम्"।**

समन्वयः - क्रियान्तरम् = अन्या क्रिया, तस्याः या आकाङ्क्षा अस्या अन्वयिनी का क्रिया इत्येवंरूपा, तस्याः अनुत्थापकतायाः = उत्थापकताया अभावः तस्य अवच्छेदकं = परिचायकं सत् कारकान्तरम् = अन्यत् कारकम्, तस्य योऽन्वयः, तस्यान्वयस्य या योग्यता तदवच्छेदकं यद्रूपं तद्वत्त्वम्। यत्र अन्यस्याः क्रियायाः अकाङ्क्षा न भवति, कारकविषयिणी च जिज्ञासा भवति तत्साध्यत्वम्। यथा पचति इत्युक्ते नात्र कस्या अपि अपरस्याः क्रियायाः आकाङ्क्षोदेति, तत्र अन्वययोग्यकारकस्य तु जायते आकाङ्क्षा। कः पचति? किं पचति? केन पचति? इत्यादिरूपेण।



**अत्र प्रश्नः** – हिरुगाद्यव्ययानां क्रियान्तराकाङ्क्षादर्शनेन साध्यत्वाभावे साध्या-

त्मकक्रियावाचकत्वव्यवहारः कथं भवति ?

**अत्रोत्तरम्** – हिरुगाद्यव्ययानां साध्यत्वाभावेऽपि क्रियावाचकत्वव्यवहारस्तु क्रियामात्रविशेषणत्वात् ।

तत्र सिद्धत्वं पाक इत्यादौ घञादिवाच्यम् । यतः तत्र घञादिना निष्पन्ने पाक इति प्रयुक्ते क्रियान्तराकाङ्क्षा भवति अक्रियत, क्रियते, करिष्यते इत्यादिरूपेण । साध्यत्वं तु सर्वत्रैव धातुप्रतिपाद्यम्, तिङन्तक्रिया प्रतिपाद्यम् । तत्र क्रियान्तराकाङ्क्षाया अभावात् । उक्तञ्च भट्टोजिना वैयाकरणमतोन्मज्जनकारिकायाम् –

**साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।**
**सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥ इति ॥**

**अत्र प्रश्नः** – यदि साध्यत्वं हि क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजात्येनोपस्थितं तत् इति चेत् तर्हि 'हरिं नमेच्चेत् सुखं यायात्' इत्यादौ स्वभिन्नक्रियायाः 'यायाद्' इत्यादेः अपेक्षितत्वात् कथं साध्यत्वम् ?

**अत्रोत्तरम्** – एतादृशस्थले तु 'चेच्'छब्दसमभिव्याहारेण उत्थापिताकाङ्क्षा विद्यते नतु कारकप्रयुक्ताकाङ्क्षा । अतो नात्र साध्यत्वस्य हानिः ।

**नागेशमते साध्यत्वस्वरूपम्** –

नागेशस्यात्र भूषणकारादीनामपेक्षया मतं भिन्नम् । स हि **साध्यत्वं नाम "निष्पाद्यत्वमेव, तत्तद्रूपेणैव बोधः"** इति वदति । तत्र प्रमाणं च प्रस्तौति – स्पष्टं चेदम् "उपपदमतिङ्" (पा.सू. २-२-१९) इति सूत्र भाष्ये इत्यादिना । निष्पाद्यत्वं नाम उत्पाद्यत्वमिति । पूर्वोक्तरीत्या भूषणकारादीनां मते "पचतिक्रियाः भवतिक्रियायाः कर्त्र्यो भवन्ति" इति महाभाष्यस्य (१-३-१) यद्वचनं तेन सह विरुध्यते । एवमेव 'भुक्त्वा गच्छति' इत्यादौ पूर्वकालिकक्रियाभूतस्य 'भुक्त्वा' इत्येतस्य साध्यत्वं न स्यात् क्रियान्तराकाङ्क्षोत्थापकत्वात् । तथैव 'पूर्वं धातुः साधनेन युज्यते पश्चात् उपसर्गेण । साधनं हि क्रियां निर्वर्तयति' इति महाभाष्यवचनं (२-२-१९) अपि साध्यत्वस्य निष्पाद्यत्वाऽर्थमेव सूचयति ।



एवं साध्यत्वं नाम निष्पाद्यत्वम् = उत्पाद्यत्वं तर्हि 'घटं करोति' इत्यादौ घटस्य

उत्पाद्यत्वात् क्रियाभिन्नद्रव्यस्यापि साध्यत्वेन प्रतीतिः स्यादिति तु न शङ्क्यम्। यतस्तत्र 'करोति'पदसमभिव्याहारात् तथा बोधः भवति तावदेव, न तु स्वतः। स्वतः घटादिपदात् तु द्रव्यस्य सिद्धत्वेनैव प्रतीतिरिति।

**अस्त्यादीनां धातु(क्रिया)त्वोपपत्तिः –**

**अत्र प्रश्नः** – भवदुक्तरीत्या यदा फलव्यापारौ धात्वर्थः इति स्वीक्रियते तदा अस्ति, भवति, विद्यते इत्यादीनां सत्तारूपफलस्यैव प्रतीतेः, तदतिरिक्तस्य कस्यापि व्यापाररूपक्रियाया अप्रतीतेः कथं तेषां धातुत्वोपपत्तिः ?

**अत्रोत्तरम्** – अस्तिभवतिवर्ततिविद्यतीनां सत्तार्थः। सा चानेककालस्थायिनीति कालगतपौर्वापर्य्येण क्रमवतीति तस्याः क्रियात्वम्। सत्तेह आत्मधारणम्। अयमाशयः – सत्तार्थे क्रमाभावात् आश्रितक्रमरूपक्रियात्वं न स्यादित्याक्षेपनिराकरणाय अनेककालस्थायिनीति विशेषणं दत्तम्। एवमपि सत्तायाः नित्यत्वेन क्रमजन्यसमूहरूपक्रियात्वं न स्यादिति निवारणाय कालगतपौर्वापर्य्येण क्रमवतीति उक्तम्। एवञ्च कालगतपौर्वापर्य्यं सत्तायामारोप्य तत्रापि क्रमः वक्तुं शक्य एवेत्यर्थः। तदेव वाक्यपदीयेऽपि उक्तम् –

**आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम्।**
**पौर्वापर्यादिरूपेण प्रविभक्तमिव स्थितम्॥ इति॥**

(वा.प. ३-१-३७)

**सकर्मकत्वाकर्मकत्वलक्षणम् –**

तत्र अस्त्यादिधातवः अकर्मका इति व्यवहारः। अतः किं नाम सकर्मकत्वं ? किं नाम अकर्मकत्वमिति प्रसङ्गाद् निरूप्यते प्राचीनोक्तलक्षणानुसारेण।

**प्राचीनमते सकर्मकत्वाकर्मकत्वलक्षणम् –**

**सकर्मकत्वञ्च फलव्यधिकरणव्यापारवाचकत्वम्। फलसमाना- धिकरणव्यापारवाचकत्वमकर्मकत्वम्। क्वचित्तु फलांशाभावाद- कर्मकत्वम्।** यथा अस्त्यादौ केवलं सत्तादिरेवार्थः। फलांशस्य सूक्ष्मदृष्ट्याऽप्यप्रतीतेः। पूर्वोक्तलक्षणार्थं स्पष्टयामः – फलव्यधिकरणो यो व्यापारः तद्वाचकत्वं सकर्मकत्वम्। फलव्यधिकर-

णत्वञ्चात्र फलनिष्ठाधेयतानिरूपिताधिकरणतावन्निरूपिताधेयताऽभाववत्त्वम्। फलानधिकरणवृत्तित्वमित्याशयः। अस्यैकत्रसमन्वयः - पच्यादिधातुवाच्यं यत् फलं विक्लित्तिः तदधिकरणं तण्डुलादि, तदनधिकरणं यत् देवदत्तादि, तद्वृत्तिफूत्कारादिव्यापारवाचकत्वात् पच्यादीनां सकर्मकत्वम्। एवमेव फलसमानाधिकरणं नाम फलाधिकरणवृत्तित्वम्। यथा – अस्त्यादिधातुवाच्यं यत् फलं सत्तादि, तदधिकरणं देवदत्तादि, तदेवाधिकरणं च तदनुकूलात्मधारणानुकूलव्यापारस्येति तद्वाचकत्वात् अस्त्यादीनामकर्मकत्वमिति लक्षणसमन्वयः। सर्वस्याभिप्रायः यत् फलव्यापारयोरेकनिष्ठतायां धातुरकर्मकः तयोर्धर्मिभेदे तु सकर्मकः इति। तेन गमेः फलस्य कर्तृनिष्ठत्वेऽपि नैव तस्याकर्मकत्वं फलस्य कर्मस्थत्वेन च तयोः समानाश्रयत्वाभावात्।

**नागेशमते सकर्मकत्वाकर्मकत्वलक्षणम् –**

प्राचीनानां मते सकर्मकत्वाकर्मकत्वलक्षणं किमिति प्रदर्श्य स्वमतमुपस्थापयति मञ्जूषाकृद्। **वस्तुतस्तु शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्। तदनन्वय्यर्थकत्वमकर्मकत्वम्।** अयमर्थः – व्याकरणशास्त्रीयो यो कर्मसंज्ञकार्थः, तदन्वय्यर्थकत्वम् सकर्मकत्वम्। तद्विपरीतं तदनन्वय्यर्थकत्वमकर्मकत्वमिति। एतादृशसकर्मकत्वस्वीकराद्धि "अध्यासिता भूमयः" इत्यादौ "अधिशीङ्स्थासां कर्म" (पा.सू. १-४-४६) इति सूत्रेण आधारस्य भूमेः कर्मसंज्ञा विधीयते। एतदर्थेन सह धात्वर्थस्यान्वयो भवति, तेन धातोः सकर्मकत्वात् कर्मणि निष्ठाप्रत्ययो भवतीति भावः।

एवन्तर्हि "जीवति" इत्यादौ प्राणान् धारयतीत्यर्थेन शब्दशास्त्रीयकर्मसंज्ञकप्राणपदार्थान्वय्यर्थकत्वात् जीवति इत्यादावपि सकर्मकत्वं स्यादिति तु नैव शङ्क्यम्। यतः अन्वितस्यार्थोऽत्र धात्वर्थात् पृथग्रूपेण ज्ञातेन कर्मणा अन्वितत्वमेवान्वयो न तु धात्वर्थान्तर्भूतेन। जीवत्यादौ तु प्राणादिरूपकर्म धारणधात्वर्थः = धात्वर्थान्तर्भूत एव, न तु तस्मात् पृथक् बुध्यत इति। तदुक्तं "सुप आत्मनः क्यच्" (पा.सू. ३-१-८) इति सूत्रे भाष्ये।

"अथास्य क्यजन्तस्य कानि साधनानि भवन्ति ? भावः कर्ता च । अथ कर्म ? नास्ति कर्म । ननु चायमिषिः सकर्मको यस्यायमर्थे क्यज्विधीयते । अभिहितं तत्कर्मान्तर्भूतं धात्वर्थः सम्पन्नः । न चेदानीमन्यत्कर्मास्ति, येन सकर्मकः स्यात् । कथं तस्येयं सकर्मको भवति ? अपुत्रं पुत्रमिवाचरति पुत्रीयति माणवकमिति । अस्त्यत्र विशेषः । द्वे अत्र कर्मणी । उपमानकर्मोपमेयकर्म च । उपमानकर्मान्तर्भूतमुपमेयेन कर्मणा सकर्मको भवति ।" एवं जीवत्यादिष्वपि । अनेन भाष्येण स्पष्टं यत् यदा धात्वर्थान्तर्भूतं सम्पद्यते कर्म तदानीमकर्मक इति । अत एव क्यजन्तस्य सकर्मकत्वं सम्पादयितुं द्वे कर्मणी इत्याद्युक्तं सङ्गच्छते ।

**ज्ञाधात्वर्थनिरूपणम् –**

परमलघुमञ्जूषाकृदत्र वक्ति **"जानातेर्विषयतया ज्ञानं फलम्, आत्ममनःसंयोगो व्यापारः" । अत्र फलतावच्छेदकसम्बन्धः विषयता । तृतीयार्थोऽवच्छिन्नत्वम् । तेन विषयतासम्बन्धावच्छिन्नज्ञानानुकूलव्यापारो ज्ञाधात्वर्थ** इति निष्कर्षः । अत एव = आत्ममनःसंयोगरूपव्यापारस्य तत्र सत्त्वादेव मनो जानातीत्युपपद्यते । आत्माऽत्रान्तःकरणम्, मनोऽपि तद्वृत्तिविशेषरूपम् । आत्मा आत्मानं जानातीत्यादौ अन्तःकरणावच्छिन्नः कर्ता, शरीरावच्छिन्नं कर्मेति "कर्मवत् कर्मणा तुल्यक्रियः" (पा.सू. ३-१-८७) इति सूत्रे भाष्ये स्पष्टम् । तत्र भाष्ये "द्वावात्मानौ अन्तरात्मा शरीरात्मा च । अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखेऽनुभवति । शरीरात्मा यत्कर्म करोति येनान्तरात्मा सुखदुःखेऽनुभवति ।" इति अवच्छेदकभेदेन कर्तृत्वं कर्मत्वं च स्पष्टमेव प्रतिपादितम् ।

**अत्र भूषणकृत् –**

आवरणभङ्गो विषयता वा फलम्, व्यापारस्तु ज्ञानमेवेति । अस्यायमाशयः – ज्ञानार्थकधातूनां सकर्मकत्वसिद्धये फलव्यापारोभयार्थकत्वं वक्तव्यम् । तत्र फलम् = आवरणभङ्गरूपं धातुना वाच्यम् । घटादिप्रत्यक्षस्थलेऽन्तःकरणं चक्षुरादीन्द्रियमाध्यमेन घटादिविषयदेशं गत्वा तत्तदविषयाकारेण परिणमति । अयं विषयाकारपरिणाम एव अन्तःकरणस्य वृत्तिरित्युच्यते । तया वृत्त्या चावरणभङ्गो जायते । **आ-**

**वरणं नाम – विषयावच्छिन्नचैतन्याच्छादकज्ञाननिष्ठावरकशक्तिः।** अस्यावरणस्य पूर्वोक्तया ज्ञानपदव्यवहर्तव्यया वृत्त्या भङ्गो जायते स एव आवरणभङ्गः।

**भूषणकृन्मतखण्डनम् –**

यदि आवरणभङ्गो विषयता वा फलं, व्यापारस्तु ज्ञानमिति स्वीक्रियते तदा आवरणभङ्गस्य विषयतायाश्च उभयोः कर्मस्थत्वात् ज्ञाधातोः कर्मस्थक्रियकत्वापत्तिः। कर्मस्थफलक्रियायां हि "कर्मवत्कर्मणा तुल्यक्रियः" इति व्यवस्थया कर्ता हि कर्मवत् व्यवह्रियते, येन 'ज्ञायते घटः स्वयमेव' इत्याद्यसाधु-प्रयोगस्य साधुत्वापत्तिरिति। धातुर्हि द्विविधो मतः – कर्तृस्थक्रियकः कर्मस्थक्रियकश्च। यत्र हि धात्वभिव्यक्तवैशिष्ट्यं कर्तरि कर्मणि च उभयोरेव साधारणरूपेण लभ्यते, तेन न 'दृश्यते घटः स्वयमेव' इत्यादिप्रयोगस्य असाधुत्वं धातोः कर्तृस्थक्रियकत्वात्। यत्र हि कर्मण्येव फलस्याभिव्यक्तिः पतति, न तु कर्तर्यपि तदा धातुः कर्मस्थक्रियकः सम्पद्यते। यथा 'भिद्यते काष्ठं स्वयमेव' इत्यादौ भेदनरूपफलस्य न कदापि कर्तरि अवस्थितिः। ज्ञाधातोरपि धातूपस्थापितफलस्योभयत्र कर्तरि कर्मणि च सत्त्वात् कर्तृस्थक्रियकत्वम्, न तु कर्मस्थक्रियकत्वम्। यदि हि आवरणभङ्गो विषयता वा फलत्वेन गृह्यते तदा तस्यापि कर्मस्थक्रियकत्वापत्तेः 'ज्ञायते घटः स्वयेमव' इत्यादिप्रयोगः स्यात्। अत्र व्यवस्थायां हरिकारिकाऽपि प्रमाणम् –

**विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।**
**क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता॥**

इत्यस्याः कारिकाया अर्थः यत्र कर्मणि कर्तरि वा क्रियाकृतो विशेषः कश्चिद् दृश्यते, तत्र क्रिया व्यवस्थितेत्युच्यते। नन्वेवं पच्यादिकर्तरि अपि श्रमादिरूपविशेषस्य दर्शनादिदमयुक्तम्। किञ्च 'चिन्तयति' 'पश्यति' इत्यादीनां कर्तृस्थभावकत्वानुपपत्तिः। कर्तरि क्रियाकृतविशेषाभावात्। अत आह कारिकायाम् – अन्येषामिति मते इति योजनीयम्। यत्र कर्तृकर्मसाधारणरूपं फलं शब्देन प्रतिपाद्यते, स कर्तृस्थभावको यथा – पश्यति घटम्, ग्रामं गच्छति, हसतीत्यादौ। तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठम्, संयोगश्चोभयनिष्ठः। एवं हासोऽपि। नहि विषयतावरणभ-

ज्ञावेवम्। यत्र कर्त्रवृत्तिकर्मस्थफलं स कर्मस्थभावकः। यथा भिनत्तीत्यादौ, न हि द्विधाभवनादि कथमपि कर्तृनिष्ठमिति हेलाराजः। तथा चावरणभङ्गस्य विषयतायाश्च कर्ममात्रनिष्ठत्वात् जानातेरपि कर्मस्थक्रियकत्वापत्तिरित्याशयः।

**इष्-पत्-कृञ्-धात्वर्थनिरूपणम् –**

इच्छतेरिच्छानुकूलं ज्ञानमर्थः। अतीतानागतयोरपि = भूतभविष्यद्कालसम्बद्धवस्तूनाम्, बुद्ध्युपारोहात् = तात्कालिकबुद्धिविषयत्वेन, फलशालित्वम् = इच्छारूपफलाश्रयत्वम्।

पतिर्गमिवत्सकर्मकः। नरकं पतितः इत्यादिप्रयोगात्। विभाजन्यसंयोगमात्रपरत्वेऽकर्मकः। विभागजन्यो यः संयोगः, तन्मात्रपरत्वे न तु तदनुकूलव्यापारपरत्वे संयोगस्यैव व्यापारत्वात् इत्यर्थः।

कृञस्तु उत्पत्तिव्यधिकरणस्तदनुकूलो व्यापारोऽर्थः। उत्पत्तिभिन्नाधिकरणयुक्तः, तस्याः उत्पत्तेः उत्पत्तिरूपफलानुकूलः व्यापारः कृधात्वर्थः।

यद्यत्र नैयायिकरीत्या कृञ्धातोः यत्नरूपं फलमेवार्थः न तु तदनुकूलो व्यापारः इति स्वीकुर्मः। तदा यत्नार्थको यत्-धातुः यथाऽकर्मकः तद्वत् कृञ्धातुरपि अकर्मकः स्यादिति दोषः।

किञ्च कर्मस्थभावकत्वाभावात् कर्मकर्तरि यगाद्यनापत्तिरिति अपरो दोषः। **अयं भावः** – कृञ्धातोः यत्नमर्थः तच्च केवलं चेतनवृत्तिः। अचेतने घटादावभावात् कर्तृमात्रवृत्तितया कर्मस्थक्रियकत्वाभावात् कर्मवद्भावाभावेन यगाद्यनापत्तौ कर्मकर्तरि 'क्रियते घटः स्वयमेव' इति प्रयोगो न स्यात्।

यद्येवं कृधातोः उत्पत्तिरूपफलानुकूलव्यापारार्थकत्वे कृञो निष्पन्नस्य कृतिशब्दस्य कथं यत्नार्थावबोधः? इति चेद् उच्यते – कृतिरित्यादौ धातूनामनेकार्थत्वात् यत्नमात्रे वृत्तिः। यद्वा यत्नकृतिशब्दयोरपि व्यापारसामान्यवाचितैव। अत एव स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचति इति 'कारके' इति सूत्रे भाष्ये उक्तम्। अत्र यत्ने इत्यस्य व्यापारसामान्यमित्यर्थः।



एतावता अस्त्यादीनां क्रियात्वोपपादनपुरस्सरं इष्यादिधात्वर्थनिरूपणं कृतम्।

अतः परं धात्वर्थविषये नैयायिकमतमनूद्यते ।

**धात्वर्थविषये नैयायिकमतम्** –

**अत्र नव्यनैयायिकाः** – फलव्यापारौ धात्वर्थः । लकाराणां कृतावेव शक्तिः, न तु कर्तरि । नानाकृतिषु अनुगतायाः कृतित्वजातेः किञ्चिद्विशेषितायाः शक्यतावच्छेदकत्वे उपस्थितिकृतलाघवं वर्तते । कृतिमतः कर्तृत्वेन तत्र शक्तौ, कृतिः शक्यतावच्छेदिका प्रतिकर्तृभिन्नाभिन्नेति, शक्यतावच्छेदकधर्माणाम् आनन्त्येन गौरवात् । प्रथमान्तपदेनैव तल्लाभाच्च = कृतिमतो बोधादिति भावः । एवञ्च 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायेन कृतिरेवाख्यातप्रत्ययार्थ इति सिध्यति । आख्यातार्थे = कृतिरूपे धात्वर्थो विशेषणं भवति यथा प्रत्ययार्थे प्रकृत्यर्थः । प्रथमान्तार्थे = कर्तरि आख्यातार्थः = कृतिः विशेषणम् । तेन हि सर्वत्र शाब्दबोधे प्रथमान्तार्थस्य प्राधान्यम् । तत्र अनुकूलत्व-माश्रयत्वञ्च संसर्गः (फलं प्रति व्यापारस्य व्यापारं प्रति कृतेः आनुकूल्यम्, कृतिं प्रति प्रथमान्तार्थस्याश्रयता इति संसर्गः) फलानुकूलो भवति व्यापारो व्यापारनुकूलैव कृतिः । एवं कृतेराश्रयः कर्तेति फलव्यापारकृतिकर्तृणामन्योन्यसम्बन्धः । तथा च चैत्रः पचतीत्यादौ विक्लित्त्यनुकूलव्यापारानुकूलकृतिमांश्चैत्र इति बोधः । रथो गच्छतीत्यादौ तु रथस्याचेतनत्वात् यत्नशून्यत्वेन व्यापारे आश्रयत्वे वा आख्यातस्य लक्षणा । तत्र आख्यातस्य व्यापारेऽर्थे येन 'गमनानुकूलो यो व्यापारः तद्युक्तो रथ' इत्यर्थः लक्षणया स्वीक्रियते । एवं यदि अश्वाऽसंयुक्ते रथे स्थितेऽपि रथो गच्छति इति प्रयोगापत्तिरुच्यते तदाऽयं विकल्पो यत् आश्रयत्वे लक्षणा, तेन आख्यातस्य आश्रयतार्थे तिङन्तपदस्य लक्षणेत्यर्थः तथा सति 'गमनाकूलव्यापाराश्रयतायुक्तो रथ' इत्यर्थो लभ्यते इति वदन्ति ।

**नैयायिकमतखण्डनम्** –

उपर्युक्तं नैयायिकमते बहवः दोषाः सम्भवन्ति इति तन्न युक्तमिति क्रमेण एकैकं दोषं ग्रन्थकारः सूचयति । तथा हि –

लकारार्थः कृतिरिति मते युष्मदस्मदोः लकारेण सामानाधिकरण्याभावात् पुरूषव्यवस्थानापत्तेः । अयमभिप्रायः – "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि

मध्यमः" (पा.सू. १-४-१०५) इति सूत्रे युष्मदः तिङ् सामानाधिकरण्यं = तिङ्वाच्यकारकवाचित्वरूपं स्वीक्रियते। एवञ्च तिङ्वाच्यकारकवाचिनि युष्मदि उपपदे प्रयुज्यमाने अप्रयुज्यमाने च मध्यमः इति सूत्रार्थः। तार्किकाणां मते लकाराणां कृतेर्वाच्यत्वेन कर्तृकारकस्य वाच्यत्वाभावेन कृतेः युष्मदर्थेन सामानाधिकरण्यं न सम्भवति। (लकाराणां कृतिरर्थः न तु कर्तादिः इति सुलभोऽर्थः) तथा सति मध्यमपुरुषादिव्यवस्था न स्यादित्येकः दोषः।

एवमेव तत्र यथा लकाराणां स्थाने तिबादयो भवन्ति तेषामर्थश्च कृतिरूपः नैयायिकैः प्रतिपाद्यते तथैव "लटः शतृशानचावप्रथमासमानाधिकरणे" (पा.सू. ३-२-१२४) इति सूत्रेणापि लकारस्थाने शतृशानजादयो विधीयन्ते तेषामपि कृतिरर्थः स्यात्। एवञ्च पचन्तं चैत्रं पश्य, पचते देवदत्ताय देहीत्यादौ केवलकृतिमात्रबोधः स्यात्। तव नैयायिकस्य इष्टमेवेदम्। एतेषां कृतिरर्थत्वेऽपि तस्याः कृतेः आश्रयाश्रयिभावसम्बन्धेन कर्मणि चैत्रे, सम्प्रदाने देवदत्ते चान्वयो भविष्यति, तेन न दोष इति न वक्तव्यम्। तथा स्वीकृते "नामार्थयोरभेदान्वयो व्युत्पन्नः" इति व्युत्पत्तिभङ्गरूपदोषः स्यात्। तथा हि – राजा पुरुषः, भूतलं घटः इत्यादिवाक्येभ्योऽपि स्वत्वसम्बन्धेन राजविशिष्टः पुरुषः, एवम् आधेयत्वसम्बन्धेन भूतलविशिष्टो घटः इति बोधोऽपि स्यात्। शतृप्रत्ययान्तपदार्थस्य देवदत्तपदार्थेन अभेदान्वय एव, आश्रयतया अन्वयः अव्युत्पन्नः इत्यभिप्रायः।

यदि चोच्येत भवता नैयायिकेन यत् "फलमुखगौरवं न दोषाय" इति न्यायेन शत्रादिनां कर्तरि शक्तिः तिबादीनां कृतावेव इति चेत्तदपि वक्तुं न शक्यते। यतः भवद्भिः नैयायिकैः लाघवं दृष्ट्वा स्थानिनां लकाराणामेव वाचकत्वं स्वीक्रियते, एवञ्च यथा लिपिर्भिन्ना भिन्नापि समानमेव शब्दं स्मारयति तथैव तिबादयः शत्रादयश्च लकारं स्मारयन्ति। एवं लकार एव बोधको भवति। स च लकारः "कर्तरि कृत्" (पा.सू. ३-४-६७) इति सूत्रेण कर्तरि अर्थे प्रथमं शक्तः, स एव लकारः तिबादिप्रत्ययान्ते कृतौ शक्तः इति कथं वक्तुं शक्यते। उभयत्रापि समान एव लकारः स्थानी भिन्नभिन्नार्थं न बोधयेत्। एकस्य शब्दस्यानेकार्थताया अन्याय्यत्वात्।

**लकारस्य कृतिवाच्यत्वे सम्भाविदोषनिराकरणोपायदूषणम् –**

अत्र नैयायिकैः आख्यातर्थः कृतिः लकारस्य कृतिवाच्यत्वे वा ये दोषाः वैयाकरणैः उद्भाविताः, तेषां परिहाराय नैयायिकैः ये उपायाः सूच्यन्ते तेषामुपायानां निराकरणमिदानीं क्रियते।

**नैयायिकानां स्वमतसमर्थनाय युक्तिप्रदर्शनम् –**

"लः कर्मणि च भावे चाकर्मकेभ्यः" (पा.सू. ३-४-६९) इति सूत्रे कर्तृकर्मपदे भावप्रधाने। तथा च कर्तृत्वं कृतिः कर्मत्वं फलं तयोः शक्तौ सूत्रस्वरसः। कर्मप्रत्ययान्ते 'पच्यते ओदनो देवदत्तेन' इत्यादौ देवदत्तनिष्ठकृतिजन्यव्यापारजन्यविल्कित्तिमान् ओदन इति बोधः। "कर्तरि कृत्" इति सूत्रे तु कर्तरि इति पदस्य धर्मिप्रधानत्वात् कृत्याश्रये शत्रादीनां शक्तिरिति।

**अस्यायं भावः** – "लः कर्मणि" इति सूत्रे कर्तृककर्मपदयोः भावप्रधानत्वात् कर्तृत्वं = कृतिः नाम यत्नः, कर्मत्वं = फलम् इत्यनयोः अर्थयोः कर्तृकर्मपदयोः शक्तिः। कृत्याश्रये कर्तरि कृतिः प्रकारीभूता, एवमेव फलाश्रयभूते कर्मणि फलं प्रकारीभूतम्, "प्रकृतिजन्यबोधे प्रकारीभूतो धर्मः भावशब्देनाभिधीयते" इति व्युत्पत्त्या भावप्रधानत्वे कृतेः फलस्य च बोधे इति बोध्यम्।

प्रथमान्तमुख्यविशेष्यकबोधस्तु "पच्यते ओदनः देवदत्तेन" इत्यत्र देवदत्तनिष्ठा या कृतिः, तज्जन्यो यो व्यापारः, तज्जन्या या विक्लित्तिः, तदाश्रयः ओदनः इति।

"कर्तरि कृत्" इति सूत्रे तु कर्तरीति पदस्य धर्मिप्रधानत्वात् = कृत्याश्रयरूपधर्मिबोधकत्वात् कृत्याश्रये = कर्तरि शत्रादीनां प्रत्ययानां शक्तिः।

**नैयायिकयुक्तिनिरासः –**

इत्यनया रीत्या नैयायिकैः यदुक्तं तन्न सम्भवति इति तदुक्तोपायस्य निराकरणं क्रियते। "लः कर्मणि च भावे चाऽकर्मकेभ्यः" इति सूत्रे द्वौ चकारौ, प्रथमचकारेण "कर्तरि कृत्" इति सूत्रात् कर्तरि इति अनुकृष्यते, द्वितीयेन सकर्मकाणां समुच्चयः। "कर्तरि कृत्" इति सूत्रे धर्मिप्रधानमेव कर्तरिपदम्। तत्र यदि 'पाचको

देवदत्त' इत्यादौ विक्लित्त्यनुकूलभावनाश्रयाभिन्नो देवदत्त इति सामानाऽधिकरण्येन अन्वयसिद्धये कर्तृपदमाश्रयबोधकं तदा सूत्रेऽस्मिन्नपि तथैव तत एव तदनुवृत्तेः । तेन "कर्तरि कृत्" इति सूत्रस्थं कर्तरिपदम् आश्रयपरः "लः कर्मणि" इतियत्र तु तदेव कर्तृत्वपरमिति नोपपद्यते, अर्थात् प्रथमसूत्रे धर्मिप्रधानमुत्तरसूत्रे तु धर्मप्रधानमिति वैषम्ये बीजाभावात् तथा वक्तुमशक्यत्वात् नैयायिकोक्तदोषोद्धरोपायस्य असम्भवः ।

एवमेव शत्रादीनां 'स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वम्' इति न्यायेन स्थान्यर्थेन निराकाङ्क्षत्वात् "आकाङ्क्षितविधानं ज्यायः" इति न्यायात् कर्तरि कृत् इत्यनेन शक्तिग्रहाभावात् । अन्यथा 'देवदत्तेन शय्यमाने आस्यमाने च यज्ञदत्तो गतः' इत्यादौ शानजनापत्तेः ।

**अयं भावः** – तार्किकाणां भवतां मते स्थानिनामैव वाचकत्वम् । स्थानिनः अर्थस्याभिधाने शक्त एव आदेशः कथ्यते । तथा च स्थानिनः अर्थेनैव आदेशस्यापि अर्थबोधो जातः, तदर्थबोधविषयिणी चाकाङ्क्षा समाप्तेति निराकाङ्क्षितस्य विधानं नोचितमितिरीत्या "कर्तरि कृत" इति सूत्रं शक्तिग्रहं न साधयति । अन्यथा निराकाङ्क्षितस्यापि विधानेन "कर्तरि कृत्" इत्यनेन कृत् प्रत्ययानां कर्तरि एव शक्तिग्रहबोधने भावेऽर्थे विहितलकाराणां स्थाने "लटः शतृशानचौ०" इति सूत्रेण शानजादेशासम्भवः । तस्मात् "लः कर्मणि०" इत्यनेनैव शक्तिग्रहः । स च तिङन्ते शत्राद्यन्ते च समानरूपेणैव भवति । एवञ्च तिङन्ते कृतिः तस्याः आश्रयत्वेन सम्बन्धेन चैत्रादौ अन्वयः इति वक्तुं न शक्यते ।

अपि च नामार्थयोरभेदान्वयानुरोधाद् 'पचन् चैत्र' इत्यादौ शत्रादीनां कर्तरि शक्तिरस्तु (तिबादीनां तु कृतावेव) । **अयं भावः** – यथा पचन् देवदत्तः इत्यादौ अभेदान्वयानुरोधात् कर्तृवाचकत्वं तथैव 'पचतिकल्पं पचतिरूपं देवदत्तः' इत्यादौ तिङन्तस्थलेऽपि कर्तृवाचकत्वं स्वीकार्यम् । अत्रापि वैषम्ये बीजं किमपि नास्ति । अतः इदमपि शत्रादीनां कर्तरि शक्तिस्तिबादीनां तु कृतावेव इति मतमयुक्तमेव ।



किञ्च आख्यातस्य कृतिवाच्यत्वं = कृत्यर्थत्वं स्वीकुर्वतां भवतां मते 'रथो ग-

च्छति' इत्यत्र रथस्याचेतनत्वात् यत्नशून्यत्वेन व्यापारे आश्रयत्वे वा आख्यातस्य लक्षणा। तत्र आख्यातस्य व्यापारेऽर्थे येन 'गमनानुकूलो यो व्यापारः तद्युक्तो रथ' इत्यर्थः लक्षणया स्वीक्रियते। एवं यदि अश्वाऽसंयुक्ते रथे स्थितेऽपि रथो गच्छति इति प्रयोगापत्तिरुच्यते तदाऽयं विकल्पो यत् आश्रयत्वे लक्षणा, तेन आख्यातस्य आश्रयतार्थे तिङन्तपदस्य लक्षणेत्यर्थः तथा सति 'गमनाकूलव्यापाराश्रयतायुक्तो रथ' इत्यर्थो लभ्यते इत्यनया रीत्या आश्रये लक्षणास्वीकारे लक्षणारूपवृत्तिस्वीकारे लक्ष्यतावच्छेदकप्रयुक्तं गौरवमेव। तथैव अभिहितत्वाऽनभिहितत्वव्यवस्थायाश्च भङ्गः स्यात्। तथा हि – "अनभिहिते" इत्यधिकृत्य "कर्मणि द्वितीया" "कर्तृकरणयोस्तृतीया" इत्यादिसूत्रैः अनभिहिते एव कर्तरि तृतीया, अनभिहिते एव कर्मणि द्वितीया अत्यादिकं विधीयते। तार्किकाणां मते च आख्यातप्रत्ययेन कृतेरेवाभिहितत्वं न तु कर्तुः कर्मणश्च एवञ्च 'चैत्रः ओदनं पचति' इत्यत्र चैत्रपदात् तृतीया स्यात्, प्रथमा च न स्यात्। 'चैत्रेण तण्डुलं पच्यते' इत्यत्र तण्डुलपदात् द्वितीया स्यात्, प्रथमा च न स्यात्।

यदि च भवद्भिः स्वमतसमर्थनाय एवमुच्येत – "द्व्येकयोर्द्विवचनैकवचने" "अनभिहिते" इत्यनयोः सूत्रयोः "कर्मणि द्वितीया" "कर्तृकरणयोस्तृतीया" इति सूत्राभ्यां सहैकवाक्यतया अनुक्तसंख्याके कर्मणि द्वितीया, अनुक्तसंख्याके कर्तरि तृतीया इत्याद्यर्थेन अनभिहितत्वानभिहितत्वव्यवस्था सङ्गच्छते इति चेत्, न तथा। अभिधानञ्च तिङ्-कृत्-तद्धित-समासैः इति सिद्धान्तेन तिङः संख्यावाचकत्वात् तिङा संख्याभिधानं प्रसिद्धम्। कृत्-तद्धित-समासानां संख्यार्थत्वाभावेन तैरभिधानमप्रसिद्धमित्यतः भवदुक्तरीत्या अनभिहितत्वानभिहितत्वव्यवस्थायाः असम्भव एव।

एवमेव आख्यातस्य कृतिवाच्यत्वं यदुक्तं तदपि न सम्भवति यतो भाष्ये यत्नस्य व्यापारसामान्यत्वमेवोक्तम्। तद्धि "कारके" इति सूत्रे भाष्ये "स्थालिस्थे यत्ने पचिना कथ्यमाने" इत्यादिना यत्ने व्यापारसामान्यत्वमेवापादितम्। यतः यत्नो हि चेतनवृत्तिधर्मः, स च कथं वा अचेतनायां स्थाल्यां भवितुमर्हति यदि अत्र यत्नो व्या-

पारसामान्यवाची इति न स्वीक्रियते तर्हि इदं भाष्यमेव असङ्गतं स्यात्। यत्तस्य व्यापारसमान्यवाचित्वं तावद् धातुत एव लभ्यते, न कथमपि तस्य आख्यातेन लाभः। एवञ्च धातुनैव व्यापाररूपार्थस्य लाभात् "अनन्यलभ्यः शब्दार्थ" इति न्यायेन आख्यातेन तस्य शक्तिग्रहोऽसम्भव इत्यर्थः। अनया रीत्या नैयायिकैः यः यः उपायः सूचितः दोषोद्धाराय स स सर्वोऽपि न सम्भवति इति प्रतिपादितम्। अनया रीत्या कृतिः आख्यातप्रत्ययार्थः इति नैयायिकोक्तः प्रथमांशः निराकृतः।

### आख्यातार्थे धात्वर्थो विशेषणमित्यंशस्य निराकरणम् –

कृतिः आख्यातप्रत्ययार्थः इति नैयायिकोक्तं प्रथमांशं निराकृत्य सम्प्रति आख्यातार्थे धात्वर्थो विशेषणमिति द्वितीयांशस्य निराकरणं क्रियते। तथा हि – आख्यातार्थकृतिं प्रति धात्वर्थः फलव्यापारौ विशेषणम् इति नैयायिकाः। तन्न। प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्य प्राधान्यम् इति नियमः। एवञ्च यत्र प्रकृत्यर्थप्रत्ययार्थयोः सहैव प्रतीतिरिष्टा तत्र प्रकृत्यर्थापेक्षया प्रत्ययार्थ एव प्राधान्यमावहति। यथा पच्-धातोः ण्वुल्प्रत्यये पाचक इति पाककर्त्ता इत्यर्थे रूपं ण्वुलः कर्तरि विधानात् तस्यार्थस्य तद्धात्वर्थाश्रयस्य प्राधान्यम्। अत्र पाकः धात्वर्थः, आश्रयः प्रत्ययार्थः, अस्यैव प्राधान्यं पाकक्रियाश्रय इति। एवमेव तद्धितादौ औपगव इत्यादिषु। उपगोरपत्यम् औपगव इत्यत्रापि उपगोः इति षष्ठ्यन्तात् उपगुसम्बन्ध्यभिन्नापत्यमित्यर्थे प्रत्ययस्य विधानात् प्रत्ययेन तदर्थस्य उक्तत्वात् अपत्यप्रत्ययार्थस्य प्राधान्यम्। एवञ्चोभयत्रापि प्रत्ययवाच्यस्य अर्थस्यैव प्राधान्यम्। न तु प्रत्ययद्योत्यार्थस्यापि। तेन 'अजा' इत्यत्र न टाप्-प्रत्ययद्योत्यस्य स्त्रीत्वस्य प्राधान्येन पशुविशेषवृत्तिस्त्रीत्वमिति स्त्रीत्वविशिष्टपशुविशेषः इति वा बोधः। प्रकृतिप्रत्ययार्थयोरित्यादिनियमः उत्सर्गनियमः। नियमस्यास्य "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्कवचनमपवादः। तेन सिध्यति यत् तिङन्तरूपे आख्याते भावस्य (क्रियायाः) एव प्राधान्यं न तु प्रत्ययार्थस्य। तथा ह्यर्थः – आख्यातम् = तिङन्तः, भावप्रधानम् = भावः क्रिया प्रधानं यत्र तादृशम्, नामानि = सुबन्तानि प्रातिपदिकानि, सत्त्वप्रधानानि = द्रव्यं प्रधानं यत्र तानि इति। अत्र

क्रियारूपार्थस्तु धातुनैव प्रतिपाद्यते, तेन धात्वर्थव्यापारस्यैव प्राधान्यं न तु तस्य आख्यातार्थं प्रति विशेषणत्वमिति सिद्ध्यति।

यच्च नैयायिकाः आख्यातपदेन तिङ्प्रत्ययमात्रमर्थमादाय भावप्रधानमित्यत्र बहुव्रीहिस्थले षष्ठीतत्पुरुषमाश्रित्य भावस्य = क्रियारूपार्थस्य प्रधानम्, (प्रधानमित्युक्ते प्राधान्यतावत् इति) अत्रैकदेशे प्राधान्ये षष्ठ्यन्तार्थस्य अन्वयः क्रियारूपार्थश्च आख्यातप्रत्ययार्थो नाम भावद्योतितप्राधान्यमाख्यातमिति कल्पयित्वा न यास्कवचनविरोध इति वदन्ति। तदपि न युक्तम्। यतः "आख्यातमाख्यातेन क्रियासातत्ये" इति मयूरव्यंसकादिगणपाठपठितगणसूत्रे आख्यातपदेन तिङन्तस्यैव ग्रहणं कृतमस्ति, न तु तिङ्प्रत्ययमात्रस्य। यदि हि यास्कस्यापि प्रत्ययार्थस्यैव प्राधान्यमभिमतं स्यात्तर्हि उत्सर्गेणैव निर्वाहे विशेषवचनस्य व्यर्थताऽऽपद्येत। तेन आख्यातस्य तिङन्तमेवार्थः तत्र च क्रियाया एव प्राधान्यमिति पर्यवस्यति। अनया रीत्या आख्यातार्थे धात्वर्थो विशेषणमिति द्वितीयांशस्यापि निराकरणं जातम्।

**प्रथमान्तार्थमुख्यविशेष्यकबोध इति नैयायिकमतनिराकरणम् –**

एतावता आख्यातार्थे धात्वर्थो विशेषणमिति नैयायिकोक्तः द्वितीयांशः निराकृतः। अधुना प्रथमान्तार्थमुख्यविशेष्यकबोध इति नैयायिकोक्तस्य तृतीयांशस्य निराकरणाय उपक्रमः। ते धात्वर्थमाख्यातार्थं प्रति, आख्यातार्थं च प्रथमान्तार्थं प्रति विशेषणमिति स्वीकृत्य प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधं स्वीकुर्वन्ति। तथा हि – लकाराणां कृतावेव शक्तिः, न तु कर्तरि। आख्यातार्थे = कृतिरूपे धात्वर्थो विशेषणं भवति यथा प्रत्ययार्थे प्रकृत्यर्थः। प्रथमान्तार्थे = कर्तरि आख्यातार्थः = कृतिः विशेषणम्। तेन हि सर्वत्र शाब्दबोधे प्रथमान्तार्थस्य प्राधान्यम्। तत्र अनुकूलत्वमाश्रयत्वञ्च संसर्गः (फलं प्रति व्यापारस्य, व्यापारं प्रति कृतेः आनुकूल्यम्, कृतिं प्रति प्रथमान्तार्थस्याश्रयता इति संसर्गः) फलानुकूलो भवति व्यापारो, व्यापारनुकूलैव कृतिः। एवञ्च चैत्रः तण्डुलं पचति इत्यादौ तिङ्वाच्यः कृतिः प्रथमान्तार्थे चैत्रादौ प्रकारीभूय भासते, धात्वर्थव्यापारस्तु कृतौ अनुकूलता सम्बन्धेन प्रकारतया भासते। तथा च चैत्रः तण्डुलं पचतीत्यादौ तण्डुलकर्मकविक्लित्त्यनुकूलव्यापारा-

नुकूलकृतिमांश्चैत्र इति बोधः जायते।

अयं हि प्रथमान्तार्थमुख्यविशेष्यकबोधः अस्माकं शाब्दिकानां मते न युज्यते। यतः शाब्दिकमते 'पश्य मृगो धावति' इत्यादौ मृगकर्तृकं धावनं दृशिक्रियायाः कर्म, प्रधानं दृशिक्रियैव। तथा च मृगकर्तृकधावनकर्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकं दर्शनमिति बोधः। तत्र मृगो धावति इत्यत्र विशेष्यभूतधावनरूपार्थवाचकस्य धावति इत्यस्य कर्मत्वेऽपि प्रातिपदिकत्वाभावात् = प्रत्ययान्तेन प्रातिपदिकत्वाभावात् इत्यर्थः, तेन न द्वितीया। कर्मत्वं तु संसर्गमर्यादया भासते। संसर्गमर्यादा नाम प्रकृते 'पश्य' इति पदे विद्यमानाकाङ्क्षा, तया (आकाङ्क्षा हि पारिभाषिकत्वेन संसर्गमर्यादा इत्युच्यते। 'एकपदार्थे अपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते' इति वचनात्)। मृग इत्यत्र तु प्रातिपदिकत्वेऽपि अप्राधान्यात् न द्वितीया। अत्रार्थे भाष्यनिदर्शमित्थम् - 'पचति भवति' इत्यत्र पचिक्रियाकर्तृका सत्ता इति बोधः। "पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ती"ति भूवादिसूत्रभाष्यात् तथार्थलाभः। तत्र हि भाष्ये "का तर्हि इयं वाचोयुक्तिः? पचति भवति, त्वं पचसि भवति, पक्ष्यति भवति इति सैषा वाचो युक्तिः - पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति" इत्युक्तम्। अत्र 'पचति भवति' इत्यस्य पाककर्तृका भवनक्रिया, 'त्वं पचसि भवति' इत्यस्य त्वदभिन्नाश्रयनिष्ठपाकाभिन्नाश्रयिका भवनक्रिया। 'पक्ष्यति भवति' इत्यस्य भविष्यत्कालिकपाकाभिन्नाश्रयिका भवनक्रियेति बोधः। नैयायिकोक्तरीत्या प्रथमान्तार्थस्य मुख्यत्वे तु अयं शाब्दबोधः न सम्भवति। 'त्वं पचसि भवति' इत्यत्र भवसि इत्यापत्तिः, युष्मदर्थस्यैव प्राधान्येन भवतिक्रियायाः कर्तृत्वापत्तिश्च। वैयाकरणमते तु पाकक्रियाया एव प्राधान्यात् भवति इति प्रथमपुरुषोपपत्तिः। तदुक्तं भर्तृहरिणापि –

**सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम्।**
**तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्॥ इति॥**

अनया कारिकयापि स्पष्टमेव यत् अनेकं सुबन्तं यथा तिङन्तस्य विशेषणं भवति तद्वत् तिङन्तमपि तिङन्तस्य विशेषणमिति। यथा "देवदत्तः पूर्वं स्नाति अर्चति

पचति भुङ्क्ते ततो व्रजति” इत्यादौ व्रजति क्रियाया एव प्राधान्यम् अन्यासां तु तद्विशेषणत्वमेव। तेन शाब्दबोधे क्रियाया एव प्राधान्यं न तु प्रथमान्तार्थस्येति।

तार्किकास्तु अन्यदेशसंयोगानुकूलधावनाकूलकृतिमन्मृग-कर्मकं प्रेरणाविषयीभूतं यद्दर्शनं तदनुकूलकृतिमाँस्त्वम् इति बोधं स्वीकुर्वन्ति। परन्तु एवं बोधे स्वीकारे विशेष्यभूतार्थवाचकमृगशब्दस्य प्रातिपदिकत्वात् दृशिक्रियाकर्मत्वाच्च द्वितीयापत्तौ ‘धावन्तं मृगं पश्य’ इतिवत् ‘पश्य मृगं धावति’ इति अनिष्टमापद्येत। ‘पश्य मृगं धावति’ इति प्रयोगे तु मृगस्य द्वितीयाविभक्त्यन्तत्वेन धावतेः प्रथमाभिन्नविभक्तिसामानाधिकरण्यात् अप्रथमासमानाधिकरणे = प्रथमेतरविभक्त्यन्तसमानाधिकरणे शतृशानचोः नित्यत्वात् ‘पश्य मृगो धावति’ इति प्रयोगस्य विलये सति ‘धावन्तं मृगं पश्य’ इत्यापत्तेः प्रकृतप्रयोग एव न स्यादित्यर्थः। न च ‘तम्’ इति कर्म अध्याहार्यम्, तेन ‘धावनानुकूलकृतिमान् मृगः इत्येको बोधः’, ‘तत्कर्मकदर्शननिरूपिताश्रयतावान् त्वम्’ इत्यपरो बोधः। एवञ्च न द्वितीयापत्तिरिति वाच्यम्। तथोक्ते भाष्यसम्मतैकवाक्यताभङ्गापत्तेः। तत्र हि भाष्ये ‘पश्य मृगो धावति’ इत्यत्र मृगकर्तृकोत्कटधावनं दृशिक्रियायां कर्म। प्रधाना दृशिक्रिया तत्र धावनकक्रियायाः कर्ममत्वेन अन्वयः इत्युक्त्वा एकवाक्यतासम्पादिता। तमिति अध्याहृते तु तत्र वाक्यद्वयं स्यादिति आशयः।

**नैयायिकद्वारा द्वितीयापत्त्युद्धरणप्रयासः –**

अत्र नैयायिकाः विशिष्टार्थवाचकस्य धावति मृग इति वाक्यस्य कर्मत्वेऽपि पृथङ्मृग इत्यस्य प्रातिपदिकत्वाभावान्न द्वितीया इत्युक्त्वा द्वितीयापत्तिरूपदूषणं परिहर्तुं प्रायतन्त। ते हि इत्थं वदन्ति – उत्तरदेशसंयोगानुकूलोत्कटधावनानुकूलकृत्याश्रयः मृगः इति विशिष्टार्थस्य वाचकं ‘मृगो धावति’ इति वाक्यं यद्यपि दृशिक्रियायाः कर्म तथापि “कृत्तद्धितसमासाश्च” इति सूत्रस्थसमासग्रहणेन वाक्यस्य प्रातिपदिकत्वाभावसम्पादकनियमात्, केवलमृगस्य प्रातिपदिकत्वसम्भवेऽपि कर्मत्वपर्याप्तार्थवाचकत्वाभावात् “कर्मणि द्वितीया” इति द्वितीयाया अप्राप्तिरेव अस्मन्मतेऽपि।

## नैयायिकद्वारा द्वितीयापत्त्युद्धरणप्रयासस्य निराकरणम् –

एवमपि भवदुक्तरीत्या विशिष्टार्थवाचकस्य धावति मृग इति वाक्यस्य कर्मत्वेऽपि पृथङ्मृग इत्यस्य प्रातिपदिकत्वाभावान्न द्वितीयाप्रसङ्गः इति चेत् न तथा वक्तुं शक्यम्। "अनभिहिते" इत्यधिकारसूत्रप्रघट्टके 'अभिधानञ्च तिङ्कृत्तद्धितसमासैः' इत्येतत्परिगणनप्रत्याख्यानपरभाष्यरीत्या द्वितीयाऽऽपत्तिः अस्त्येव, अनभिहिते एव द्वितीयादिविधानात्। तथा हि – 'कटं भीष्मं कुरु' इत्यादौ विशेष्यकटशब्दात् उत्पन्नद्वितीयया कर्मत्वस्य उक्तत्वात् विशेषणीभूतभीष्मशब्दात् द्वितीया न स्यात्, अतः परिगणनं भाष्ये कृतम्। तत्परिगणनप्रत्याख्यानं च सर्वकारकाणां साक्षात्स्वाश्रयद्वारा वा अरुणाधिकरण-न्यायेन भावनान्वयस्वीकारात्। अत एवोक्तं भाष्ये "कटोऽपि कर्म भीष्मादयोऽपि" इति। तत्र कटनिष्ठकर्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टकर्मत्वानुक्तेः तस्माद् द्वितीयेति तात्पर्यम्। उभयोः पश्चात् परस्परमन्वयस्तु विशेष्यविशेषणभावेन। एवमेव एतादृशोऽन्वयः अरुणाधिकरणे – "अरुणया पिङ्गाक्ष्यैकहायिन्या सोमं क्रीणाति" इत्यत्र क्रयणक्रियायां मीमांसकैः स्वीकृतः।

**अरूणाधिकरणस्यायं भावः** – तत्र ज्यातिष्टोमप्रकरणे "अरुणया पिङ्गाक्ष्यैकहायिन्या सोमं क्रीणाति" इति श्रूयते। इत्यत्र अरुणेति प्रकृतिभागः, क्रीधातुश्चाभिधात्री श्रुतिः। क्रीणाति इत्यत्र आख्यातप्रत्ययो विधात्री श्रुतिः। अरुणशब्दोऽन्वयव्यतिरेकाभ्यां गुणवचनः, अरुणत्वजातिवचनो वा। तृतीयया च शक्यस्य गुणस्यैव सोमक्रयणसाधनत्वं बोध्यते। तच्चानुपपन्नम्। क्रयणं नाम कञ्चित् पदार्थं दत्त्वा कस्यचित् पदार्थस्यग्रहणम्। दानं ग्रहणं च मूर्तपदार्थस्यैव सम्भवति, नतु अमूर्तस्य गुणमात्रस्य। एवञ्च आरुण्यमपि स्वाश्रयद्रव्यमाध्यमेन क्रयणक्रियायामन्वेति। एवञ्चात्र स्पष्टमेवोक्तं यत् आरुण्यस्य प्रथमं क्रयणक्रियायामन्वयः किन्तु तस्य साक्षात् क्रयणकरणत्वासम्भवेन आश्रयभूतद्रव्यापेक्षायां प्राकरणिकेषु सर्वेषु द्रव्येषु आरुण्यस्य सन्निवेशः प्राप्तः। तत्र च प्रकरणापेक्षया वाक्यस्य बलवत्तरत्वात् आरुण्यवाचकपदघटितवाक्यघटकं-कहायन्यादिपदशक्यं गोरूपद्रव्ये सा-

मानाधिकरण्येनान्वयो भवति। एवञ्चात्र प्रथमं क्रियायां सर्वेषामन्वयः स्पष्टमुक्तः पश्चात् विशेषणविशेष्यभावेनान्वयः। तस्मात् महाभाष्योक्तरीत्या मीमांसकारुणाधिकरणन्यायरीत्या च प्रतिपादितत्वात् "धावति मृग" इत्यत्र अनयोः उभयोरपि दृशिक्रियायाः कर्मत्वे धावतीत्यस्य प्रातिपदिकत्वाभावात् विशेषणत्वेन अन्यत्र निराकाङ्क्षत्वाच्च द्वितीयोत्पत्तेः अभावेऽपि मृगशब्दात् द्वितीया दुर्वारैव। शाब्दिकमते तु क्रियाविशेषणत्वेन = मृगकर्तृकधावनकर्मकमित्यत्र इतरार्थे = दर्शनाद्यर्थे निराकाङ्क्षत्वात् मृगशब्दान्न द्वितीया। यथा राज्ञः पुरुषमानय इत्यत्र पुरुषस्य साक्षात् आनयनक्रियायाम् अन्वयात् कर्मत्वं, तेन द्वितीया। तथैवात्रापि नैयायिकमतानुसारं विशेष्यमृगस्य साक्षाद्दर्शनक्रियान्वयित्वेन कर्मत्वात् द्वितीयावारणमतीवकठिनमिति। इत्थं धात्वर्थसिद्धान्तः सङ्ग्रहेणोपस्थापितः विस्तरेण तु मञ्जूषाभूषणादिग्रन्थेभ्यो ज्ञातुं शक्यः।

॥इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ
धात्वर्थसिद्धान्तनिरूपणम्॥

# अथ लकारार्थसिद्धान्तनिरूपणम्

धात्वर्थनिरूपणानन्तरं ततो विधीयमानानां लकाराणां तदादेशानां वा कोऽर्थ इति विचारोऽपि आवश्यक इत्यतो दशलकारादेशार्थः सङ्गृह्य निरूप्यते। तत्र लकाराणां वाचकत्वं नैयायिका अभ्युपगच्छन्ति। शाब्दिकास्तु तदादेशानाम्। एवञ्चात्र स्थानिनां वाचकत्वमुतादेशानां प्रथमतो विचार्य ततः प्रत्येकं लकारविशिष्टतदादेशस्यार्थनिर्णयाय यतामहे।

**लकाराणां वाचकत्वमुत तिबादीनामिति निर्णयः –**

**अत्र नैयायिकाः** – लकारस्यैवार्थवाचकत्वं, न तु तदादेशानाम्। तदनुसारेण लादेशानां तिबादीनामनेकत्वात् तत्र शक्तिकल्पने अनन्तवाचकताशक्तीनां कल्पनारूपगौरवमेकम्। अपरञ्च तिबादीनां वाचकत्वे एधाञ्चक्रे इत्यादौ तेषां लुकि अभावरूपतया अभीष्टार्थप्रतीतिर्न स्यात्। लकाराणां जातिरूपताधारेण ऐक्यात् तेषां वाचकत्वे एकयैव शक्त्या सर्वत्र निर्वाहसम्भवेन लाघवम्। एतदतिरिक्तं सूत्रकारेणापि "लः कर्मणि च भावे चाकर्मकेभ्यः" इति सूत्रेण लकाराणामेव वाचकत्वं समर्थितम्, यतः अभीष्टार्थे कर्तरि कर्मणि भावे चानेन लकारा विधीयन्ते। यथा हि सूत्रेषु लकाराणामर्था निर्दिष्टा न तथा तिबादीनामिति लाघवात् शास्त्रसम्मतत्वात् च लकाराणामेव वाचकत्वमुचितम्, नतु तिबादीनामादेशानामिति वदन्ति।

**शाब्दिकास्तु** – उच्चारितस्यैवार्थप्रत्यायकत्वं न तु अनुच्चारितस्येति भाष्यवचनात् आख्यातप्रयोगे तिबादीनामेवोच्चरणात् व्यवहारेऽपि अज्ञातलकाराणामपि तिबादिभ्य एवार्थबाधदर्शनादनुभवस्य प्रमाणान्तरश्रेष्ठ्याच्च तिबादीनामेव वाचकत्वम्, न तु लकाराणामिति मन्यन्ते। यदि तिबादीनामेव वाचकत्वं मन्यते तर्हि कथं भगवता पाणिनिना "वर्तमाने लट्" "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यादिसूत्रेषु

तत्तद्विशिष्टार्थवाचकरूपेण लकाराणां विधानं कृतमिति चेदुच्यते – तिबादीनामर्थवाचकानां शास्त्रीयकार्यनिर्वाहाय स्थानित्वेन कल्पितेषु लकारेषु आरोपं कृत्वा तथा सूत्राणि प्रणीतानि सूत्रकारेण नतु लकाराणां वस्तुतः अर्थवाचकत्वमवधार्यैति।

वस्तुतस्तु लकाराणां वाचकत्वं द्योकत्वमुभयमपि भाष्यसम्मतम्। तत्र "वर्तमाने लट्" इत्यस्य 'वर्तमानक्रियावृत्तेर्धातोः लट् स्यात्' इत्यर्थः उक्तः कौमुद्यां दीक्षितेन। तेन स्पष्टं प्रतीयते यत् वर्तमानाद्यर्था धातावेव वर्तमानाः, लकारास्तु तत्तद्विशेषार्थद्योतका इति। तत्र कालस्य सर्वाधारतया कालसामान्यवृत्तिक्रियावाचकस्य धातोः वर्तमानादिकालविशेषविशिष्टे व्यापारे लक्षणा, लडादीनान्तु तात्पर्यग्राहकत्वमिति। विशिष्टलक्षणायां तात्पर्यग्राहकत्वमेव प्रकृते लडादेः द्योतकत्वम्।

एवमेव "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" इति सूत्रे तु 'विध्यादिषु अर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात्' इत्युक्तम्। तेन तेषां वाचकत्वमपीष्टमित्यायातम्। वाचकत्वं तु अन्वयव्यतिरेकाभ्यां साधयितुं शक्यम्। तथा हि – लिङादिलकारसत्त्वे तत्तदर्थप्रतीतिरिति अन्वयः, तदभावे तु नेति व्यतिरेकः। अनेन पक्षद्वयेऽपि स्थिते किमर्थं शाब्दिकानां तिबाद्यादेशवाचकत्वमभिमतमिति चेत् वाचकः लडादिः। वाचकतावच्छेदकं लट्त्व-लिङ्त्वादिकं तदपि लडाद्यादेशे तिबादावनुभवसिद्धमेव। अनुभवबलादेव च तल्लट्त्वादिकं तिबाद्यादेशेष्वारोपितं बोध्यम्।

अनेन तिबाद्यादेशानामेव वाचकत्वं न तु लकाराणामिति प्रतिपादितम्।

**लादेशसामान्यार्थः -**

तत्र संख्याविशेषकालविशेषकारकविशेषभावाः लादेशमात्रस्यार्थाः। तथा हि – लडादेशस्य वर्तमानकालः, शबादिसमभिव्याहारे कर्ता, यक्-चिण्-समभिव्याहारे भावकर्मणी, उभयसमभिव्याहारे एकत्वादिसंख्याचार्थः। तदुक्तं दीक्षितेन वैयाकरणमतोन्मज्जनकारिकाग्रन्थे–

**फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः।**
**व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम्॥ इति।**



**अयमर्थः** – धातूपस्थाप्ययोः फलव्यापारयोर्मध्ये (फलव्यापारयोरित्यत्र निर्द्धा-

रणे षष्ठी, कर्मकर्त्राश्रययोर्मध्ये इत्यर्थः) तङादयः फले आश्रयान्वयं द्योतयन्ति। शबादयश्च व्यापारे। फलान्वयाश्रस्य कर्मत्वात् कर्मद्योतकाः, व्यापाराश्रयस्य कर्तृत्वात् कर्तृद्योतका इति समुदायार्थः। अनेन कर्तृकर्मसंख्याकालाः तिङर्थ इति सिद्धम्। तत्राधाराधेयसम्बन्धेन कर्ता व्यापारस्य विशेषणं यतः व्यापारः कर्तरि आश्रितः। फलस्य कर्माश्रितत्वात् कर्म फलस्य विशेषणम्। संख्या कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये कर्मणि विशेषणं, समानप्रत्ययोपात्तत्वात्। इत्थं आख्याताद् यः शाब्दबोधो भवति स व्यापारप्रधानः, यस्य संख्याविशिष्टकारकं विशेषणं भवति। कर्तृवाच्ये तु कर्ता कर्मवाच्ये तु कर्मव्यापारस्य विशेषणे भवतः। एतदतिरिक्तं कालोऽपि व्यापारस्य विशेषणम्। कर्तृवाच्ये भाववाच्ये च क्रियाप्राधान्यं, कर्मवाच्ये तु फलस्य प्राधान्यम्। कर्तृवाच्ये फलमपि व्यापारविशेषणमिति। एतदेवोक्तं दीक्षितेन स्वरचितकारिकायाम् –

**फलव्यापारयोर्धातुः आश्रये तु तिङः स्मृताः।**
**फले प्रधानं व्यापारः तिङर्थस्तु विशेषणम्॥ इति।**

अस्या अर्थस्तु विस्तरेण धात्वर्थप्रकरणे विचारितः। तिङर्थः कर्ता व्यापारे, कर्म च फले विशेषणमिति मुख्यांशः प्रकृते। 'क्रियाप्रधानमाख्यातम्' इति यास्कोक्तौ क्रियापदं करणव्युत्पत्त्या व्यापारपरं, कर्मव्युत्पत्त्या फलपरम्। तेन कर्तृप्रत्ययस्थले फलविशिष्टव्यापारविशेष्यकः, कर्मप्रत्ययस्थले व्यापारविशिष्टफलविशेष्यकः शाब्दबोधः फलति। तथा च – ग्रामं गच्छति चैत्रः इत्यत्र एकत्वावच्छिन्नचैत्राभिन्नकर्तृको वर्तमानकालिको ग्रामाभिन्नकर्मनिष्ठो यः संयोगः तदनुकूलो व्यापारः, ग्रामो गम्यते मैत्रेण इत्यत्र तु मैत्रकर्तृकव्यापारजन्य एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठः संयोग इति च बोधः।

**वर्तमानकालस्वरूपम् -**

लट्लकारस्य वर्तमानार्थे शक्तिः, लिट्लकारस्य परोक्षे शक्तिः, लुट्लकारस्य श्वो भाविनि शक्तिः, लृट्लकारस्य भविष्यति शक्तिः, लेट्लोट्लकारयोस्तु विध्यादिषु प्रेरणादिषु च शक्तिरिति ज्ञायते। लट्लकारस्य वर्तमाने शक्तिरितति चेत्

कोऽयं वर्तमानो नाम, किं तत्र प्रमाणमिति चेदुच्यते –

वर्तमानकालो लटोर्थः। तथा हि "वर्तमाने लट्" (पा. सू. ३-२-१२३) इति पाणिनिसूत्रम्। वर्तमानकाले विद्यमाना या क्रिया तद्वाचकात् धातोः लट् इति सूत्रार्थः। तदुक्तं कौमुद्यां – वर्तमानक्रियावृत्तेर्धातोः लट् स्यात्। एवं च लटो वर्तमानार्थकत्वे "वर्तमाने लट्" इति सूत्रमेव प्रमाणम्। तत्र कोऽयं वर्तमानकालो नाम इति जिज्ञासिते द्वे लक्षणे भूषणकृता प्रदर्शिते। **प्रारब्धापरिसमाप्तत्वं भूतभविष्यद्भिन्नत्वं वा वर्तमानत्वम्।** अत्र प्रथमलक्षणस्येत्थं समन्वयः – पचति इति वर्तमानकालक्रियाप्रयोगः। पाकक्रिया नाम चुल्ल्युपरिधारणप्रभृति चुल्ल्यधस्स्थापनपर्यन्तं प्रवर्तते। चुल्ल्युपरिधारणेन प्रारभ्यते, चुल्ल्यधस्स्थापनेन च समाप्यते। तथा च तदन्तरालसमये या क्रिया सा प्रारब्धासमाप्ता क्रिया। तदाश्रयः कालः यो अन्तरालकालः सः वर्तमानकालः इत्युच्यते। एवं च तदानीं पचतीति लट्लकारः प्रयुज्यते।

द्वितीयं तु लक्षणं **भूतभविष्यद्भिन्नत्वमिति।** अत्र भूतत्वभविष्यत्वे नाम के इति प्रथमं ज्ञातव्ये। तद्विना प्रकृतलक्षणस्य ज्ञातुमशक्यत्वात्। **वर्तमानकालध्वंसप्रतियोगित्वं हि भूतत्वं, वर्तमानप्रागभावप्रतियोगित्वं हि भविष्यत्वम्।** घटे ध्वस्ते सति अतीतोऽयं घट इति व्यवहारो जायते, तत्र हि वर्तमानो यो ध्वंस इत्युक्ते इदानीं विद्यमानः घटध्वंसः, तत्प्रतियोगित्वं घटे अस्तीति घटः अतीत इति वा भूतकालिक इति वा व्यवहारः। एवं भाविनि घटे उत्पत्स्यमाने सति घटो भविष्यतीति व्यवहारो जायते। तत्र वर्तमानो यः प्रागभाव इत्युक्ते घटप्रागभावः तत्प्रतियोगित्वं घटे वर्तत इति घटो भविष्यत्कालिक इति व्यवहारः। तादृशोभयघटभिन्नो यो घटो वर्तते स वर्तमान इति व्यवहारः। एवं चानया रीत्यापि यदा पाकक्रिया आरब्धा अर्थात् चुल्ल्युपरिधारणं कृतं, तस्यामवस्थायां पाकक्रियाया नापि ध्वंसोऽस्ति नापि प्रागभाव इति तत्प्रतियोगित्वं नास्तीति पाकक्रियायामिति भूतभविष्यद्भिन्नत्वरूपवर्तमानकालिकत्वं वर्तते इति भवति तदा लट्-प्रयोगः। एवं रीत्या लक्षणद्वयस्यापि समन्वयो द्रष्टव्यः।

**द्वयोर्लक्षणयोर्विषये भाष्यादिप्रमाणोपन्यासः** – 'प्रारब्धापरिसमाप्तत्वं वर्तमानत्वम्' इति प्रथमलक्षणस्य विषये "निष्ठा" (पा. सू. ३-२-१०२) इति सूत्रस्थः कैयटग्रन्थः प्रमाणम्। तत्र हि – यावदभिमतफलप्रयोजनसकलक्रियापरिसमाप्तिर्भवति तावद्वर्तमानत्वमेव क्रियायाः, न तु भूतत्वमिति। प्रारब्धा च सा अपरिसमाप्ता चेति कर्मधारयात्त्वप्रत्ययः। तथा च "वर्तमाने लट्" इति सूत्रे भाष्यं "न्याय्या त्वेषा वर्तमानकालता। कुतः? आरम्भानपवर्गात्। आरम्भोत्रानपवृक्तः। एष एव च नाम न्याय्यो वर्तमानकालो यत्रारम्भोनपवृक्तः" इति। अत्र 'प्रारम्भ' इति कर्मघञन्तम्। प्रारब्ध इत्यर्थः। अपवर्गः = समाप्तिः। ततः "यं खल्वपि भवान् मुक्तसंशयं वर्तमानकालं न्याय्यं मन्यते 'भुङ्क्ते देवदत्त' इति। तेनैतत्तुल्यम्। सोऽपि ह्यवश्यं भुञ्जानो हसति वा जल्पति वा पानीयं वा पिबति। यद्यत्र युक्ता वर्तमानकालता दृश्यते, इहापि युक्ता दृश्यताम्।" इति भाष्यम्। अत्र कैयटः – अध्ययनं यदा प्रवृत्तं, न चोपरतं, तदा तस्य भोजनादिक्रिया नान्तरीयकत्वादव्यवधायिका। अथवाऽध्ययनस्यैवावयवक्रियेति भावः। नान्तरीयकत्वाद्भोजनादिक्रियाणां नाध्ययनव्यवधायकत्वमिति प्रथमपक्षस्याशयः। भोजनाद्यपि अध्ययनशब्दात्वेनाश्रीयते। अतश्च यथा स्वावयवक्रिया न व्यवधायिकास्तथेमा अपीति द्वितीयपक्षस्याशयः। निरुक्तं "वर्तमाने लट्" इति सूत्रस्थं भाष्यं हरिणापि द्वेधा व्याख्यातम्। तथा हि – १)

**व्यवधानमिवोपैति निवृत्त इव दृश्यते।**
**क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः॥**
**न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते।**
**सर्वैव हि क्रियान्येन सङ्कीर्णेवोपलभ्यते॥ इति॥**

(वाक्यपदीयम्, तृतीयकाण्डम्, कालसमुद्देशे ८२ - ८३)

अन्तरालक्रियाभिरवयवद्वारेण विच्छिन्नस्वभावोऽसावफलप्राप्तेरनुवर्तनादविरतोपस्थित एव वर्तमानस्वभावः। न केवलं भुज्यादिरेव, यावद्धाससंकथनादिरपि क्रियान्तरैर्व्यवधीयत एव। अक्षिनिमेषादेरपि व्यवधानात्। अन्तत उच्छ्वा-

सनिश्वासादेरपि भावात्। अतो विश्रम्य विश्रम्य क्रियान्तरात्सङ्कीर्णेव, न तु सर्वथा सङ्कीर्णा, आफलप्राप्तेर्विरामाभावात्। अन्तरालक्रियाणामवश्यं भाविनीनां संकरकारित्वस्यायोगात्। संदर्शनादिर्हि फलपर्यन्तः क्षणसमूहक्रिया। तत्र च भौतिकव्यापारोपरमेऽप्यन्तरालदर्शनप्रार्थनादेर्मानसस्य व्यापारस्य यावत्फलावगमस्तावद्विराम एव। एवं भोजनादेरप्यविरतत्वाद्वर्तमानता सिद्धा। अत एव हरिग्रन्थे इवशब्दप्रयोगः।

एवं तावत्फलावसानः समूहः क्रियेति फलान्तरहेतुक्रियान्तरव्यवधानमभ्युपेत्यापि वर्तमानत्वं समर्थितम्। यद्वाऽन्तरालप्रवृत्तं क्रियान्तरं भिन्नजातीयमेव न भवतीति पक्षान्तरमुक्तं हरिणा यथा – २)

**तदन्तरालदृष्टा वा सर्वैवाऽवयवक्रिया।**
**सादृश्यात्सति भेदे तु तदङ्गत्वेन गृह्यते॥ इति॥**

(वाक्यपदीयम्, तृतीयकाण्डम्, कालसमुद्देशे ८४)

कारिकायां तु शब्दोऽप्यर्थे। तस्या भुजिक्रियाया मध्यवर्तिनो ये क्रियाभेदा हसितादयस्ते भुज्यादेरवयवा गुणव्यापाररूपा आचमनादिवदुपकारकत्वात्। ततश्चाचमनादिभिः सादृश्यात्सत्यपि हासादीनां क्वचिदसन्निधाने भुजिनिवृत्तेः प्रसिद्धैर्दध्युपसेवनादिभिरङ्गैर्भेदे भुज्यङ्गत्वेन ग्रहणम्। सुहृदो हि निर्वृतचेतसः परस्परं हाससंकथनादि कुर्वाणा एव भुजिं प्रतिपद्यन्ते। तदेवमत्र प्रत्यवयवं क्रियापरिसमाप्तिः। अतो भोजनस्य हसितादयोऽङ्गभूताः क्रिया एव। एवमध्ययनस्य भुज्यादयोऽवयवभूताः स्वार्था एवेति न तासां व्यवधायकत्वमिति हरिग्रन्थाशयः।

**अथ द्वितीयलक्षणप्रमाणोपन्यासः** – भूतभविष्यद्भिन्नत्वं वर्तमानत्वमिति द्वितीयलक्षणविषयेऽपि भाष्यं प्रमाणम्। उक्तञ्च भाष्ये – "भूतभविष्यद्प्रतिद्वन्द्वो वर्तमानकालः" इति। तद्व्याचक्षाणः कैयटः – साध्यस्यार्थस्यानित्यत्वादवश्यं भविष्यत्त्वेन भाव्यम्। उत्पन्नस्यापि नाशाद्भूतत्वेन भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानो धात्वर्थो, नित्यप्रवृत्तस्य भूतभविष्यत्वाभावाद्वर्तमानत्वाभावः क्रियारूपत्वाभावश्चेत्यर्थः। अनेन द्वितीयलक्षणविषयेऽपि भाष्यकैयटयोः प्रामाण्यस्तीति सिपादितम्।

वस्तुतस्तु "वर्तमाने लट्" इति सूत्रे भूतभविष्यद्भिन्नत्वरूपमेव वर्तमानत्वं विवक्षितम्। "वर्तमाने लट्" इति सूत्रात् प्राक् "भूते" (पा. सू. ३-२-८४) इत्यस्य "वर्तमाने लट्" इति सूत्रादनन्तरं "भविष्यति गम्यादयः" (पा. सू. ३-३-३) इत्यस्य च सूत्रकृतोपादानादित्यपि अवधेयम्।

**नित्येषु वस्तुषु लट्-प्रयोगानुपपत्तिशङ्कासमाधाने**

**अत्र काचिदनुपपत्तिः** – पूर्वोक्तरीत्या या क्रिया प्रारब्धासमाप्ता तदाश्रयकालस्य वर्तमानत्वे, तादृशस्य कालस्य वाचकतया यदि लटः प्रयोगः तदा आत्मा अस्ति, पर्वताः तिष्ठन्ति इति प्रयोगस्य अनुपपत्तिः। यतो हि क्रियायाः प्रारब्धापरिसमाप्तत्वे हि वर्तमानकालः, तदा लट्-प्रयोग इत्युक्तम्। तथा सति आत्मधारणानुकूलक्रियाया नित्यत्वात् सदा वर्तमानत्वात् प्रारम्भ एव नास्तीति प्रारब्धासमाप्तत्वरूपस्य वर्तमानत्वस्य तत्क्रियायाः अभावात् कथं तत्र लट्प्रयोग इति प्रश्नः उदेति। एवमेव पर्वताः तिष्ठन्तीत्यादौ पर्वतकर्तृकस्थितेरपि अनादित्वात् स्थित्यनुकूलक्रियायाः आरम्भस्यैवाभावे प्रारब्धासमाप्तत्वरूपस्य वर्तमानत्वस्य स्थितौ अभावात् कथं तिष्ठन्तीति लट्प्रयोगः इति प्रश्नः उदेति। अतः वर्तमानत्वपरिष्कारो अयुक्तो वा स्यात् अथवा एतादृशः प्रयोग एव असाधुर्वा स्यात् इति चेत् -

**इत्थमनुपपत्तिपरिहारः** – यद्यपि आत्मकर्तृकधारणानुकूलव्यापारस्य, पर्वतकर्तृकस्थित्यनुकूलव्यापारस्य च नित्यत्वात् प्रारब्धासमाप्तत्वरूपं वर्तमानत्वं तत्र दुरुपपादं, तथापि लट् प्रयोगस्तु उपपादयितुं शक्यते। तथा हि – यस्मिन् काले आत्मा अस्ति इति प्रयोगः क्रियते, यस्मिन् काले पर्वताः तिष्ठन्तीति प्रयोगश्च क्रियते तदा तत्कालीनराज्ञां या क्रिया प्रारब्धापरिसमाप्ता वर्तते तत्क्रियागतं वर्तमानत्वं पर्वतकर्तृकस्थितौ आरोप्य पर्वताः तिष्ठन्तीति प्रयोगः उपपादनीयः। एवमेव आत्मा अस्तीति प्रयोगेपि शरीरविशिष्टः आत्मा आत्मशब्दवाच्य इति स्वीकृत्य शरीरस्य या क्रिया प्रारब्धासमाप्ता तदीयक्रियागतं वर्तमानत्वमात्मनि आरोप्य आत्मा अस्ति इति व्यवहारश्चोपपादनीयः।



अर्थात् यथा तमसो निष्क्रियत्वेपि दीपापसरणेन जातस्य "तमो गच्छती"ति

व्यवहारस्य दीपगतक्रियां तस्मि आरोप्य उपपादनं क्रियते तथा पर्वतस्थितेश्च नित्यत्वेपि तत्कालीनराज्ञां या क्रिया तद्गतं वर्तमानत्वं पर्वतस्थितौ आरोप्य पर्वताः तिष्ठन्तीति व्यवहारः। एवमेव आत्मसत्तायाः नित्यत्वेपि समीपस्थशरीरगता या क्रिया तद्गतं वर्तमानत्वम् आत्मसत्तायामरोप्य आत्मास्ति इति व्यवहारश्चोपपादनीय इति सारतोऽवगन्तव्यम्। स्पष्टमिदं "वर्तमाने लट्" इति सूत्रे भाष्ये। प्रकृतानुपपत्तिपरिहारविषये वाक्यपदीयकारेणापि भाष्यमिदमिदमित्थं व्याख्यातम् -

**परतो भिद्यते सर्वमात्मा तु न विकल्पते।**
**पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते॥ इति॥**

(वाक्यपदीयम्, तृतीयकाण्डम्, कालसमुद्देशे ८०)

**तस्यायमर्थः** – सर्वं- नित्यमनित्यं सर्वमपि पदार्थजातम्, परतः - पदार्थान्तरगतक्रियावेशतः, भिद्यते – भूतभविष्यदादिभिन्नव्यवहारविषयो भवति। आत्मा तु – द्रव्यं तु, न विकम्पते - न विचलति, स्वतः क्रियाश्रयो न भवति। तस्मात् – स्वरूपेण सर्वस्याप्यर्थस्य भेदासंभवात् पर्वतादिस्थितिः, आदिना घटादेरनित्यस्य सङ्ग्रहः। तेषां स्थित्यादिः पररूपेण – राजदेवदत्तादिनिष्ठक्रियारूपेण, भिद्यते – भूतभविष्यदादिभिन्नव्यवहारविषयो भवति इति। एवं चास्याः कारिकातः स्पष्टं ज्ञायते यत् आत्मास्ति, पर्वताः तिष्ठन्तीत्यादौ आत्मसत्तायाः, पर्वतकर्तृतस्थितेश्च नित्यत्वेन सनातनत्वात् स्वतः वर्तमानत्वादिभेदस्योपपादयितुमशक्यत्वेपि पदार्थान्तरगतक्रियातः वर्तमानत्वादिकमुपपादयितुं शक्यमिति।

**लिङ्विङर्थः -**

लिङ्विङस्तु भूतानद्यतनकालः परोक्षत्वञ्चाधिकोऽर्थः। शेषं लङ्वत्। शेषमित्युक्ते संख्याकारकादियोगः लङिव भवतीत्यर्थः। परोक्षत्वञ्च कारके विशेषणं न तु क्रियायां, तस्याः अतीन्द्रियत्वेन लिङ्सूत्रे भाष्ये प्रतिपादनात् व्यभिचाराभावात्। अस्यायमाशयः – "परोक्षे लिट्" इति सूत्रेण लिट् विधीयते। अत्र सूत्रे "भूते" इति सूत्रमधिक्रियते। "अनद्यतने लङ्" इत्यस्मात् सूत्रात् "अनद्यतने" इति पदं चानुवर्तते। एवं च अनद्यतनभूते विद्यमाना या परोक्षा क्रिया तद्वाचकात् धातोः लिट्

स्यादिति फलितार्थः। अनद्यतन इत्युक्तत्वात् अद्यतनमपि कालभेदः लक्ष्यते। तथा हि कालो द्विविधः अद्यतनो अनद्यतनश्चेति। अतीतायाः रात्रेः पश्चार्धेन आगामिन्याः रात्रेः पूर्वार्धेन च सहितो दिवसो अद्यतनः। तद्भिन्नः अनद्यतनः। एवं परोक्षत्वं नाम इन्द्रियागोचरत्वम्। इदञ्च परोक्षत्वं कारके विशषणम्, न तु क्रियायाम्। तस्याः अतीन्द्रियत्वात्। किञ्च क्रियायां कदापि परोक्षत्वाभावः नास्ति इति ग्रन्थकारः। तदुक्तं भाष्ये - "क्रिया नामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्" इति। पूर्वापरीभूतावयवसमूहरूपा क्रिया इयम् अत्यन्तम् अपरदृष्टा = परेण प्रत्यक्षेण दृष्टा न, इन्द्रियगोचरा न भवतीति यावत्। तस्मात् भाष्याच्च स्पष्टमेव लभ्यते यत् क्रियायाः सर्वदा इन्द्रियगोचरत्वं नास्तीति। एवं च प्रत्यक्षरूपक्रियाया एवाभावात् व्यावर्त्याप्रसिद्ध्या परोक्षा या क्रिया इति क्रियायां परोक्षत्वविशेषणं व्यर्थमेवेति नागेशाशयः।

एतद्भाष्यात् परोक्षत्वं क्रियायाः विशेषणं न भवति इति प्रतिपादितेऽपि दीक्षितादयो वैयाकरणास्तु परोक्षत्वमपि क्रियाविशेषणमिति वदन्ति। तेषामयभिप्रायः - क्रियायाः अवयवसमूहरूपत्वात्, अवयवानामाशुतरविनाशित्वात् तत्समूहरूपायाः क्रियायाः इन्द्रियगोचरत्वाभावेपि अवयवानामिन्द्रियगोचरत्वं तु अनुभवसिद्धमेव। तथा च परोक्षा या क्रिया तद्वाचकाद् धातोः लिडिति वाक्यस्य क्रियायाः अवयवानां परोक्षत्वे लिट्, अवयवानामपरोक्षत्वे तु नैव लिट् प्रयोक्तव्य इति अवयवपरोक्षत्वापरोक्षत्वे आदाय व्यावर्त्यं सम्पाद्य परोक्षपदमपि क्रियायां विशेषणतया अन्वेति। अवश्यमवयवानामिन्द्रियगोचरत्वं तु अभ्युपेयमेव। अन्यथा "पश्य मृगो धावती"ति प्रयोगो न स्यात्। तत्प्रयोगो हि धावनक्रियायाः दर्शनविषयत्वमभिप्रेत्यैव लोके प्रसिद्धः। यदि अवयवरूपक्रियायाः अपि इन्द्रियगोचरत्वं न स्यात् तर्हि धावनक्रियायाः दर्शनकर्मत्वाप्रसिद्ध्या तदभिप्रायेण प्रयुक्तं "पश्य मृगो धावती"ति वाक्यमसङ्गतमेव स्यात्। अयं दीक्षितकौण्डभट्टमतानुवादोऽपि ग्रन्थे अनुक्तः प्रसङ्गोपात्त एव भवतां ज्ञानाय उपस्थापितः। यतः दीक्षितादिभिः परोक्षत्वमपि क्रियाविशेषणमिति प्रतिपादितम्। तत्पूर्वपक्षत्वेन मनसिकृत्य नागेशस्य परोक्षत्वं न

क्रियाविशेषणमिति प्रतिपादने बीजमन्वेष्टव्यम्।

**लिटि अनुप्रयुज्यमानानां कृभ्वसामर्थनिर्णयः –**

अधुना लिटि अनुप्रयुज्यमानानां कृ-भू-अस्-धातूनां कः अर्थः इति विचार्यते। तथा हि – लिटि अनुप्रयोगस्थले "कास्प्रत्ययादामन्त्रे लिटि" "इजादेश्च गुरुमतोऽनृच्छः" "दयायासश्च" "उषविदजागृभ्योऽन्यतरस्याम्" इत्यादिसूत्रैः आम् विधीयते। आमः परस्य लिटः "आमः" इति सूत्रेण लुक् क्रियते। ततः कृ-भू-अस्-धातुषु अन्यतमस्य तत्र अनुप्रयोगः क्रियते। एतादृशस्थले कृभ्वसां सामान्यवापारो नाम क्रियासामान्यमर्थः। तत्तत्क्रियाविशेषस्तु आम्प्रकृतेः धातोरेव। तत्र सामान्यविशेषयोः अभेदान्वयः। अकर्मकप्रकृतिकामन्तप्रयुक्तकृभ्वसाम् अकर्मिकैव क्रिया। वस्तुतस्तु अनुप्रयुक्तानां कृभ्वसां फलशून्यक्रियावाचकत्वमेव। सकर्मकाकर्मकव्यवहारस्तु आम्प्रकृतिभूतधातोरेव। एवञ्च 'एधाञ्चक्रे चैत्रः' इत्यत्र एकत्वावच्छिन्नपरोक्षत्वावच्छिन्नचैत्रकर्तृका भूतानद्यतनकालाधिकरणिका वृद्ध्यभिन्ना क्रिया इति बोधः।

"परोक्षे लिट्" इति सूत्रार्थवर्णनवेलायाम् "अनद्यतनभूते विद्यमाना या परोक्षा क्रिया तद्वाचकात् धातोः लिट् स्याद्" इत्यर्थः उक्तः। तत्र किं नाम परोक्षत्वमिति चेत् – "साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम्"। एवमेव भूतानद्यतनत्वञ्च "अद्यतनाष्टप्रहरीव्यतिरिक्तत्वे सति भूतत्वम्।" अर्थस्तु स्पष्ट एव।

**अथेदानीं "व्यातेने किरणावलीमुदयनः" इति उदयनाचार्यकृतप्रयोगविषये विचार्यते –**

शब्दप्रयोक्तुः अनद्यतनभूतकालिकक्रियायाः परोक्षत्वे लिट् प्रयोक्तव्यः इति प्रथमः पक्षः। अनद्यतनभूतकालिकक्रियाविशिष्टस्य पुरुषस्य परोक्षत्वे लिट् प्रयोक्तव्य इति द्वितीयः पक्षः इति। एवं सति उदयनाचार्याः स्वकीयग्रन्थप्रणयनसन्दर्भे "व्यातेने किरणावलीमुदयनः" इति व्यातेने इति लिटं प्रायुञ्जन्। तत्कथं सङ्गच्छते इति प्रश्नः उदेति। यतो हि व्यातेने इत्यत्र धातोः विस्ताररूपक्रिया अर्थः। तस्याश्च कर्ता शब्दप्रयोक्ता उदयानाचार्य एवेति स्वकर्तृकक्रियायाः स्वस्यैव परोक्षत्वं कथं स्यात्।

स्वक्रियायाः स्वं प्रति सर्वदा अपरोक्षत्वात्। अतः क्रियायाः पारोक्ष्ये लिडिति प्रथमपक्षे प्रयोगोयमसङ्गतः।

एवं क्रियाविशिष्टस्य पुरुषस्य शब्दप्रयोक्तारं प्रति परोक्षत्वे लिडिति द्वितीयपक्षेपि प्रयोगोयमसङ्गत एव। यतो हि तत्र च क्रियाविशिष्टः पुरुषः स्वयं शब्दप्रयोक्तैवेति स्वं प्रति स्वस्य कथं परोक्षत्वं स्यात्। तस्मात् पक्षद्वयेपि व्यातेने किरणावलीमुदयनः इति उदयनाचार्याणां प्रयोगो असङ्गत एवेत्याक्षेपः। यद्यपि स्थलविशेषे स्वक्रियायाः स्वयं प्रत्यपि परोक्षत्वं संभवति। यथा स्वकर्तृकक्रियायाः वर्तमानत्वदशायामपि स्वस्य विषयान्तरासक्तत्वे स्वक्रियायाः स्वयं प्रति प्रत्यक्षत्वं न संभवति। अत एव कालान्तरेण तादृशीं क्रियामनुमाय "बहु जगद पुरस्तात् तस्य मत्ता किलाहम्" इत्येतादृशाः लिट्प्रयोगाः सङ्गच्छन्ते। तथापि प्रकृते तथा उपपादयितुं न शक्यते। इदानीं स्थलविशेषे दर्शितदिशा शब्दप्रयोक्तुः विषयान्तरासक्ततादशायां क्रियायाः परोक्षत्वोपपादनेपि विस्ताररूपक्रियायाः भूतत्वं अनद्यतनत्वं चोपपादयितुमशक्यमेव। अतः अनद्यतनत्वभूतत्वयोः द्वयोः विशेषणयोः तत्रासंभवात् व्यातेने इति लिट् प्रयोगो असङ्गत एव। तल्लिखितं कौण्डभट्टेन स्वकीये ग्रन्थे व्यासङ्गादिना स्वव्यापारस्य परोक्षत्वोपपादनेऽपि (बहुतरमनःप्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रन्थे) अनद्यतनत्वातीतत्वयोर्विस्तारक्रियायामसत्त्वेन अनद्यतनातीत्वयोरभावेन तदर्थकलिडसम्भवादिति। इत्येतावता लिड्तिङर्थः विवृतः।

**लुङ्-लृङ्-लेङ्-लोङ्-लङादेशार्थः -**

एतावता लिट्तिङर्थः कः इति प्रतिपादितम्। सम्प्रति लुङ्-लृङ्-लेङ्-लोङ्-लङादेशार्थाः के इति क्रमेण प्रतिपाद्यते।

तत्र लुडादेशस्य तु भविष्यदनद्यतनार्थोऽधिकः। शेषं पुरुषवचनाद्युपपत्ति लङ्वत्। **भविष्यत्त्वञ्च "वर्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वम्"।** यस्याः वर्तमाने प्रागभावः तस्याः क्रियाया उपलक्षितत्वं हि भविष्यत्त्वमिति सुलभः अर्थः।



**लृट्तिङस्तु भविष्यत्सामान्यमर्थः।** भविष्यत्सामान्यं सामान्यभविष्यतत्कालः

अद्यतनानद्यतननिर्विशेषः ।

**लेट्विङस्तु विध्यादिरर्थश्छन्दसि "लिङर्थे लेट्" इति सूत्रात्।** लट्वक्रियातः 'लेटोऽडाटौ' इति विशेषः । भवति भवाति इति प्रयोगदर्शनात्। लटि शबादिविकरणप्रत्ययाः उक्ताः । लेटि तु छान्दसत्त्वात् अडागमः, आडागमष मध्ये इति विशेषः इत्यर्थः ।

**लोट्विङस्तु विध्यादिरर्थः ।** तत्राधीष्टं सत्कारपूर्वको व्यापारः 'आगच्छतु भवान् जलं गृह्णातु' इत्यादौ । सम्प्रश्नो अनुमतिः 'गच्छति चेद् भवान् गच्छतु' इत्यादौ । अर्थस्तु सर्वस्यापि स्पष्ट एव ।

**लङादेशस्य तु भूतानद्यतनत्वमधिकोऽर्थः ।** शेषं लङ्वत् ।

**लिङादेशार्थः -**

लिङादेशस्य तु विध्यादिर्थः । तत्र विध्यादिचतुष्टयस्यनुस्यूतप्रवर्तनात्वेन चतुर्णां वाच्यता लाघवात्। अयमर्थः - "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्न-प्रार्थनेषु लिङ्" (पा.सू. ३-३-१६१) इति सूत्रेण विध्यादिष्वर्थेषु लिङ् विधीयते। विध्यादिषु सर्वत्र प्रवर्तनात्वमस्ति। तत्र विध्यादीनां क्रमेणार्थास्तु इत्थं - विधिः = प्रेरणम्, भृत्यादेर्निकृष्टस्य प्रवर्तनमिति। प्रवर्तनञ्च प्रवृत्त्यनुकूलो व्यापारः। अर्थाद् यद्विषयकत्वेन ज्ञानस्य प्रवृत्तिजनकत्वं सैव प्रवर्तना । सा यदि वक्रपेक्षयाऽपकृष्टोद्देश्यकप्रवर्तकज्ञानविषयीभूता तदा प्रेरणा। अन्यादृक् तु निमन्त्रणादिव्यपदेश्येति। एवञ्चाप्रवृत्तप्रयोज्यस्य तदभिलषिताज्ञातोपायप्रवर्तमुपदेशः । यथा "स्वर्गकामो यजेत" इत्यादिः । आदिनाऽत्र लौकिकं "त्वं वस्त्राणि क्षालयेः" इत्यादीनां ग्रहणम्। प्रकृतोदाहरणे स्वर्गोऽभिलषितः । अत्राप्रवृत्तस्य प्रयोज्यस्य देवदत्तादेर्यदभिलषितं स्वर्गः, तत्प्राप्तिविषये योऽज्ञातोपायो यागः, तादृशे स्वर्गप्राप्त्युपायभूते यागे प्रवर्तनं देवदत्तादेरनेन वाक्येन क्रियत इत्यं विधिः । एवन्तर्हि विधिप्रेरणयोस्समानार्थकत्वं वेति चेदुच्यते – स्वसमानोत्तमयोः प्रवर्तनायामतिव्याप्तिवारणाय निकृष्टत्वोक्तिः । एवञ्च नात्र विधित्वमित्यर्थतो लाभः । आज्ञाप्यत्वेन निकृष्टत्वं विवक्षितमिति सूचयितुमेव भृत्यादिरित्युक्तिः । तेन स्वापेक्षयाऽधिकवयस्कभृत्यप्रेरणाया विधित्वमेव ।

निमन्त्रणशब्दे प्रवर्तनायाः किं स्वरूपमिति चेद् – निमन्त्रणं नाम नियोगकरणमिति। आवश्यके श्राद्धभोजनादौ स्वाभिलषिते दौहित्रादेः प्रवर्तनम्। यथा विप्रं निमन्त्रयत इत्युदाहरणे विप्राश्रयकप्रवृत्तिजनकभावनाबोधेन प्रकृते विनियोगपदार्थः = प्रवृत्तिः, तत्करणं = तदनुकूलो व्यापार इत्यर्थः।

एवमेव आमन्त्रणं हि कामचारानुज्ञेत्युक्तम्। सा च स्वाभिलषिते कामचारेण प्रवृत्तस्य निजेष्टसाधनताबोधनमिति यावत्। तदेवं वर्णयति दर्पणकारः "स्वेच्छया प्रवृत्तस्येतरत्र प्रवृत्तिप्रतिबन्धफलकस्वाभिलषितविषयकप्रवृत्त्यनुकूलो व्यापार" इति। यथा 'इहासीत आरब्धं कुरुत' 'तत्कुरुष्व यथाहितम्' इत्यादावुपवेशनादिव्यापारे इष्टसाधनताज्ञानात् प्रवृत्तावितरत्राप्रवृत्तिरर्थतः फलति।

अधीष्टन्तु सत्कारपूर्वकव्यापार इति। "पुत्रमध्यापयेद्भवान्" इत्यादौ "अध्यापनादिव्यापारे सम्मानपूर्वकप्रवृत्त्यनुकूलो व्यापार" अधीष्टपदार्थः।

इत्थमुपवर्णितेषु चतुर्ष्वपि विध्यादिषु प्रवर्तनात्वमनुगतं, तच्चैकरूपत्वेन स्वीकारे शक्यतावच्छेदकसामान्यधर्ममुपादाय तस्यैव वाच्यत्वाल्लाघवम्। एतदनुरोधेन विध्यादिविशेषोपादानं गौरवायेति मनसि निधाय ग्रन्थकारो लिखति – एतच्चतुष्टयानुस्यूतप्रवर्तनात्वेन वाच्यता, लाघवात्। तत्रार्थे वाक्यपदीयकारसम्मतिं प्रदर्शयति –

**अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।**
**तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥ इति।**

**अयमाशयः** – विध्यादिषु चतुर्ष्वपि प्रवर्तना वर्तत एव, अतः शक्यतावच्छेदकसामान्यग्रहणाद्विधिनिमन्त्रणामन्त्रणेत्यादि सूत्रापेक्षया "प्रवर्तनायां लिङ्" इत्येव सुवचम्। अयमेवाशयः कौमुद्यां भट्टोजिदीक्षितैरपि उपवर्णितः।

एवन्तर्हि कथं पाणिनिना चतुर्णामपि पृथगुपादानं कृतमित्याशङ्क्य हरिकारिकान्तरमवतरति –

**न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।**
**विध्यादीनामुपादानं चतुर्णामादितः कृतम्॥ इति।**

अनया चतुर्णामपि पृथगुपादानं स्पष्टप्रतिपत्तये प्रपञ्चितमित्यायातम्।

**प्रवर्तनास्वरूपम् -**

सम्प्रति यत् प्रवर्तनारूपं चतुर्ष्वपि सामान्येनानुगतं किं तस्य स्वरूपमिति चेद् अत्रोच्यते – **"प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वं प्रवर्तनात्वम्" इति। तच्चेष्टसाधनत्वस्यास्तीति तदेव लिङर्थः।** प्रवृत्तिजनकं यत् ज्ञान् इदं मदिष्टसाधनमिति ज्ञानम्। इष्टसाधनताज्ञानमेव सर्वत्र प्रवृत्तिजनकं भवति। अन्यथा प्रवृत्तिविषयधर्मिकस्य इष्टसाधनत्वप्रकारकस्य ज्ञानस्य अभावे प्रेरणारूपे व्यापारे सत्यपि प्रवृत्तिर्न जायते। अतः प्रवृत्तिजनकज्ञानम् इष्टसाधनताज्ञानं, तद्विषयः इष्टसाधनं, विषयतावच्छेदकं इष्टसाधनत्वमिति तदेव प्रवर्तनाशब्देन ग्राह्यमिति वैयाकरणमतम्। एवं च विषयतावच्छेदकत्वरूपं प्रवर्तनात्वम् इष्टसाधनत्वे अस्तीति तदेव प्रवर्तनात्वावच्छिन्नरूपः लिङ्वाच्योर्थः।

**तत्र मतान्तरनिरासः -**

प्रवर्तनात्वं नाम प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वं, तच्च इष्टसाधनत्वस्य वर्तते तदेव लिङर्थ इति वैयाकरणमतम्। तत्रैव विषये केचन विप्रतिपन्नाः। यथा इष्टसाधनत्वे एतादृशं प्रवर्तनात्वं वर्तते तथा कृतिसाध्यत्वेपि वर्तते। तस्मात् कृतिसाध्यत्वमपि विध्यर्थः इति स्वीकर्तव्यमिति वदन्ति। अन्यथा इष्टसाधनताबुद्धिमात्रस्य प्रवृत्तिजनकत्वस्वीकारे चन्द्रगमनं मदिष्टसाधनमिति इष्टसाधनताबुद्धौ सत्यामपि चन्द्रगमने प्रवृत्तिर्न जायते इति कार्यकारणभावस्य व्यभिचारः स्यात्। अतः तन्मात्रस्य न प्रवृत्तिजनकविषयतावच्छेदकत्वरूपं प्रवर्तनात्वमपि तु कृतिसाध्यत्वस्यापि। कृतिसाध्यताज्ञानस्यापि प्रवृत्तिजनकत्वस्वीकारे तु चन्द्रगमने इष्टसाधनताबुद्धौ सत्यामपि कृतिसाध्यताज्ञानं नास्ति। अतस्तदभावाद् प्रवृत्तिर्वार्यते।

एवमेव बलवदनिष्टाननुबन्धित्वज्ञानमपि प्रवृत्तिजनकमिति मन्तव्यम्। तथा च प्रवृत्तिजनकं यत् ज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानम्। तद्विषयतावच्छेदकं बलवदनिष्टाननुबन्धित्वमिति विषयतावच्छेदकत्वरूपं प्रवर्तनात्वं तत्रापि अस्ति। बलवदनिष्टाननुबन्धित्वज्ञानस्यापि प्रवृत्तिजनकत्वास्वीकारे विषसंपृक्तमधुभोजने क-

र्मणि पुरुषस्य इष्टसाधनताबुद्धिरस्ति, कृतिसाध्यताबुद्धरपि वर्तते इति तत्र प्रवृत्तिस्स्यात्। बलवदनिष्टाननुबन्धित्व-ज्ञानस्यापि प्रवृत्तिहेतुत्वस्वीकारे तु तत्र विषसंपृक्तमधुभोजने इदं भोजनं मदनिष्टं मरणं साधयतीति अनिष्टानुबन्धित्वज्ञानमेवास्ति। न तु अनिष्टाननुबन्धित्वज्ञानमिति न तादृशे कर्मणि प्रवृत्तिः।

अतः इष्टसाधनत्ववत् कृतिसाध्यत्वस्य, बलवदनिष्टाननुबन्धित्वस्य च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वरूपस्य प्रवर्तनात्वस्य सत्त्वात् तत्रापि लिङः शक्तिः कल्पनीया इति मतान्तरम्। किन्तु नेदं मतं सङ्गतम्। यतो हि कृतिसाध्यताबुद्धेः भवतु प्रवृत्तिजनकत्वं, एवं कृतिसाध्यत्वस्य भवतु प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वं तावतापि तस्य न लिङ्वाच्यत्वसिद्धिः। यतो हि अनन्यलभ्यः शब्दार्थः इति न्यायेन प्रकारान्तरेण अलभ्य एवार्थः शब्दस्य शक्योऽर्थो भवति। प्रकृते कृतिसाध्यत्वं तु अनुमानप्रमाणगम्यं भवति। यागो मत्कृतिसाध्यः मत्कृतिसाध्यत्वविरोधिधर्मानाक्रान्तत्वात्, चन्द्रगमनं मत्कृत्यसाध्यं मत्कृतिसाध्यत्वविरोधिधर्माक्रान्तत्वात् इति अनुमानप्रमाणेनैव कृतिसाध्यत्वासाध्यत्वे ज्ञातुं शक्ये इति न तयोः लिङा बोध्यत्वमिति वैयाकरणमतम्।

एवमेव बलवदनिष्टाननुबन्धित्वमपि न लिङर्थः। यतः कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणत्वं सर्वतन्त्रसिद्धमस्ति। प्रतिबन्धकसद्भावे कार्यानुदयात् कार्यमात्रं प्रति प्रतिबन्धकाभावो हेतुः। एवं च विषसंपृक्तमधुभोजने कृते मरणं जायेत, अतः भोजनजन्यसुखापेक्षया दुःखमेव अधिकमस्तीति ज्ञानं तादृशे कर्मणि द्वेषमुत्पाद्य प्रवृत्तिं प्रतिबध्नाति। अतः तत्र दुःखाधिक्यज्ञानेन यो द्वेषोऽस्ति स एव प्रतिबन्धकः। द्वेषाभावः प्रतिबन्धकाभावविधया कार्यमात्रं प्रति हेतुरिति तस्य न लिङ्वाच्यत्वस्वीकारः। अतः केवलमिष्टसाधनत्वमेव लिङर्थः इति वैयाकरणमतम्।

अनया रीत्या वैयाकरणाः इष्टसाधनत्वमेव लिङर्थः। कृतिसाध्यत्वं वा बलवदनिष्टाननुबन्धित्वं वा न लिङर्थः इत्यत्र मण्डनमिश्रोक्तिमुद्धृत्य स्वमतं दृढयति।

**पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः।**
**प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम्॥ इति।**

**अयमाशयः** – इष्टाभ्युपायत्वं = इष्टसाधनत्वं, तस्मादन्यः = बलवदनिष्टाजनकत्वादिः पुंसां यागादिक्रियासु प्रवर्तको न = प्रवृत्तिजनकज्ञानविषयो न भवति, अपितु इष्टसाधनत्वमेव। यतः प्रवृत्तिहेतुं धर्मं प्रवृत्तिजनकज्ञानविषयतावच्छेदकं धर्मं प्रवर्तनाशब्देन वदन्ति = व्यवहरन्तीति। इति भूषणादिग्रन्थेषु विस्तरेण निरूपितमेव ग्रन्थकारोऽपि अनुमन्यते।

**लकारार्थः -**

तत्र लडादिलृङन्ता दशलकारा लड्-लिड्-लुड्-लृड्-लेड्-लोड्-लङ्-लिङ्-लुङ्-लृङ्- भेदात्। तत्र लकारस्य कर्ता कालः सङ्ख्येति त्रयोर्थाः। तत्र कर्तेति पातञ्जलाः। "लः कर्मणि च भावे चाऽकर्मकेभ्यः" इति सूत्रे चकारेण कर्तुः परामर्शात्। "कर्तरि कृत्" इति सूत्राद्धि अत्र सूत्रे कर्तरि इत्यस्य अनुकर्षणात्। कर्तृस्थाने व्यापारः इति भाट्टाः। यत्न इति नैयायिकाः। युक्तञ्चैतत्। व्यापारताद्यपेक्षया लाघवेन यत्नस्यैव शक्यतावच्छेदकत्वात्।

**अयं भावः** – शाब्दिकमते कर्ता लस्यार्थः कर्ता च व्यापाराश्रयः। एतत् 'लः कर्मणि' इत्यादि सूत्रे चकारबलादित्यर्थः। भट्टमतानुयायिनः कौमारिलाः कर्तुः स्थाने व्यापारः लकारार्थ इति वदन्ति। व्यापाराश्रयः कर्ता तस्य च लक्षणया गम्यत्वम्। मीमांसकमते फलं धात्वर्थः व्यापारः लकारार्थः। अयमेव व्यापारः क्रियाया वाच्यार्थः, आख्यातं हि सामान्यतया व्यापारवाचकम्। नैयायिकास्तु फलव्यापारौ धात्वर्थः। लकाराणां कृतावेव शक्तिः, न तु कर्तरि। नानाकृतिषु अनुगतायाः कृतित्वजातेः किञ्चिद्विशेषितायाः शक्यतावच्छेदकत्वे उपस्थितिकृतलाघवं वर्तते। कृतिमतः कर्तृत्वेन तत्र शक्तौ, कृतिः शक्यतावच्छेदिका प्रतिकर्तृभिन्नाभिन्नेति, शक्यतावच्छेदकधर्माणाम् आनन्त्येन गौरवात्। प्रथमान्तपदेनैव तल्लाभाच्च = कृतिमतो बोधादिति भावः। एवञ्च 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायेन कृतिरेवाख्यातप्रत्ययार्थ इति सिध्यति। एवं प्रतिपादियमानरीत्या व्यपारताद्यपेक्षया लाघवेन यत्नत्वस्य = कृतित्वस्य एव शक्यतावच्छेदकत्वे लाघवम्।



**लस्य वाचकत्वनिरूपणम् -**

शक्ततावच्छेदकत्वञ्च लकारसाधारणं लत्वमेव। लकारः नैयायिकमते वाचकः शक्तः इत्यर्थः। तेन शक्तता वाचकता वा लकारनिष्ठा। सा च सर्वत्रलकारेषु विद्यमाना समाना इत्यतः अन्यूनातिरिक्तस्य धर्मस्यैव अवच्छेदकत्वात् लत्वमेव शक्तावच्छेदकम्।

यद्येवं लत्वस्य शक्ततावच्छेदकत्वं तर्हि पचतीत्यादितः कृत्यादेर्बोधो न स्यात्, तिबादेः तत्र शक्त्यग्रहादिति, अत्रायं भावः – लत्वस्य शक्ततावच्छेदकत्वे प्रयोगेषु अदर्शनात् तिबादीनाञ्च तत्र दर्शनेऽपि तेषां शक्त्यग्रहात् कृत्यादेर्बोधाभावः। तत्रेदं सामधानं यत् भवतीत्यादौ चादेशेनादेशिनोः लस्यैव स्मरणादन्वयधीः। एवञ्च तिबाद्यादेशैः आदेशिनः स्थानिनः लकारस्य स्मरणम्, ततो बोधः। यस्य तु आदेशस्थानिभावस्य ज्ञानं नास्ति तस्य तु शक्तिभ्रमात् बोधः इति। अत एव अस्माभिः नैयायिकैः आदेशेषु शक्तिः नैव कल्प्यते तेषां बहुत्वात् तत्र शक्तिकल्पने गौरवाच्च। यत्र तु लकारं जानतोऽपि स्मरणाभावः तत्रापि शक्तिभ्रमाद्बोधः। एवमपि 'चैत्रो गन्ता' 'गतो ग्रामः' इत्यादौ तृच्-क्तप्रत्यययोः लकारस्थानिकत्वाभावात् ततो बोधः न स्यादिति चेत्, कृत्प्रत्ययस्थले सामानाधिकरण्यानुरोधेन यथायथं कर्तृकर्मणी कृत्प्रत्ययवाच्ये। अतो न दोषः। एवञ्चेत् "लटः शतृशानचावप्रथमा समानाधिकरणेन" इति सूत्रेण विधीयमानौ शतृशानचौ लकारस्थानिकौ, अत्र कर्तरि शक्तिः उच्यते अनयोः आदेशभूतयोः। आदेशिनः (स्थानिनः) लकारस्य एव शक्तिवाचकत्वे तदसङ्गतमिति। यतः यत्र आदेशिनः शक्त्या निर्वाहः तत्र आदेशे शक्तिकल्पकत्वं न स्वीक्रियते। इति चेत् चैत्रः पचन्नित्यादौ सामानाधिकरण्यानुरोधेन अत्र आदेशिनः शक्त्या अनिर्वाहात् आदेशेऽपि शक्तिः अङ्गीक्रियते।

**कर्तृवाच्ये कर्मवाच्ये कर्मकर्तृवाच्ये शाब्दबोधे वैलक्ष्यणम् -**

**इयाँस्तु विशेषः** – लत्वेन यत्ने शक्तिः आत्मनेपदत्वेन फले। अनेन कर्मवाच्ये हि लकारादेव यत्नस्य फलस्य प्रतीतिः दृश्यते। तत्कथमेकस्यैव लकारस्य द्विविधार्थवाचकत्वम् इति आक्षेपः निरस्तः। कर्मवाच्ये मैत्रेण गम्यते ग्रामः इत्यत्र यत्नस्य (कृतेः) वाचकत्वं लत्वस्यैव, किन्तु फलस्य वाचकत्वमात्मनेपदत्वस्यैव। कर्तृवा-

च्ये तु परस्मैपदत्वात्मनेपदत्वञ्च उभे यत्नस्यैव वाचके न तु फलस्य। कर्मवाच्ये तु न तथा। यथा मैत्रेण ग्रामः गम्यते इत्यत्र कृतिः तृतीयार्थः, मैत्रः कृतौ विशेषणम्, कृतिश्च गमने, गमनञ्च फले मैत्रग्रामसंयोगरूपे, फलञ्च ग्रामे विशेषणमिति जन्यत्वं च संसर्गः। तेन मैत्रवृत्तिकृतिजन्यगमनजन्यफलशाली ग्रामः इत्यन्वयबोधः।

कर्तृवाच्ये ग्रामं गच्छति मैत्रः इत्यत्र तु ग्रामवृत्तिफलजनकगमनानुकूलकृमान् मैत्र इति बोधः। अत्र फलं द्वितीयार्थः। जनकत्वं संसर्गः। ग्रामश्चात्र फले विशेषणम्। तद्गमने (फलं च गमने व्यापारे), तच्च् गमनं कृतौ, सा च कृतिः मैत्रे विशेषणम् इति विशेषणविशेष्यभाव भेदेनैव कर्मकर्तृस्थलीयबोधयोः भेदः। पदार्थास्तु तावन्तः उभयत्र समाना एव।

कर्मकर्तृवाच्ये 'मैत्रेण ज्ञायते इष्यते क्रियते घट' इत्यादौ तु वृत्तिस्तृतीयाया अर्थः। विषयता तु आख्यातस्यार्थः। तेन मैत्रवृत्तिज्ञानविषयो घटः इति बोधः। घटं जानाति मैत्र इत्यादौ तु विषयता द्वितीयाया अर्थः आश्रयत्वञ्च आख्यातस्यार्थः। तेन घटविषयकज्ञानाश्रयो मैत्रः।

**विध्यर्थविचारः –**

**भाट्टमतानुवादः -**

विधिः प्रवर्तना इति भाट्टाः। लिङ्निष्ठो व्यापारः पदार्थान्तरं लिङ्गदज्ञानमेव वा। तस्य प्रवर्तनात्वेन ज्ञानं शब्दाधीनप्रवृत्तौ कारणम्। लिङ्श्रवणे आचार्यो मां प्रवर्तयति इति ज्ञानात् गवानयनादौ प्रवृत्तेः। आचार्यनिष्ठप्रवर्तना तु अभिप्रायविशेष एव इत्याहुः। **अयं भावः** – लिङो हि विध्यर्थः। को नाम विधिरित्यपेक्षायां प्रवर्तना हि विधिरिति भाट्टाः। प्रवर्तना हि प्रवर्तयितुः प्रवृत्त्यनुकूलो व्यापारविशेषः। इयमेव प्रेरणा शाब्दीभावनेत्यप्युच्यते। लौकिकवाक्यप्रयुक्तं विधिलिङप्रयोगप्रतीयमानप्रवर्तना हि वक्तृपुरुषविद्यमानाभि-प्रायविशेषरूपेण गृह्यते। किन्तु स्वर्गकोमो यजेतेत्यादि श्रुतिवाक्यप्रयुक्तविधिलिङ्गयोगे या प्रवर्तना सा नैव पुरुषनिष्ठा यतो हि वेदाः अपौरुषेयाः। नहि तेषां कश्चिद् वक्ता कर्ता वा विद्यते। तेन तत्रत्या प्रवर्तना शब्दनिष्ठा भवति लिङभिव्यक्ता। उक्तमेव तत्र पुरुषप्रवृत्त्यनुकूलः भावयितु-

भावनाविशेषः शाब्दीभावना। भवितुः भवनानुकूलभावयितुः व्यापारविशेषः भावना इति वा। सा लिङंशेन बोध्यते। लिङ्श्रवणे अयं मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेन प्रतीतेः। स च व्यापारविशेषः लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः। वैदिकवाक्ये तु पुरुषाभावाद् लिङादिशब्दनिष्ठ एव। अत एव तस्य शाब्दीभावनेति व्यवहारः। एतद्व्यतिरिक्तमपरा भावना आर्थीभावना इत्युच्यते। विशेषोद्देश्यप्रतिदृष्ट्या तदनुकूलक्रियासाधनाय पुरुषे या मानसिकप्रवृत्ति क्रियाशीलता वा समुत्पद्यते सैवार्थीभावना। एषा हि आख्यातसामान्यस्य वाच्यः अर्थः।व्यापारो हि मीमांसकमते आख्यातार्थः न तु धात्वर्थः। यथोक्तं – प्रयोजनेच्छाजनितक्रियाविशेषव्यापारः आर्थीभावना। स च आख्यातंशेनोच्यते आख्यातसामान्यस्य व्यापारवाचित्वात्। इत्थं हि लिङ्लकारप्रयोगे लिङ् च आख्याततवञ्च द्वौ अंशौ। आख्याततत्वं सर्वलकारसुलभत्वात् तस्य वाच्यो व्यापार आर्थीभावना वा। किन्तु शाब्दीभावना तु केवलं लिङत्वस्यैवार्थः। तदुक्तम् –

**अभिधाभावनामाहुरन्यामेव लिङादयः।**
**अर्थात्मभावना त्वन्या सर्वस्याख्यातगोचरा॥ इति।**

शाब्दीभावना हि पदार्थान्तरमप्युच्यते। यतो हि प्रवर्तना लिङ्निष्ठो व्यापारः तेन लिङ्गरूपपदार्थज्ञानमेव प्रवर्तना वा तज्ज्ञानं प्रवर्तनाहेतुः।

**भाट्टमतनिराकरणम् -**

उपर्युक्तरीत्या प्रवर्तनामात्रं हि नैव कस्यापि कार्यस्य हेतुः, तदभावेऽपि लोके प्रवृत्तिदर्शनात्। प्रेरणानभिज्ञोपि सद्यः जातः शिशुः स्तनपानायप्रवृत्तो भवति, एव पशवोऽपि पर्वर्तनां विनैव कार्ये प्रवृत्ता दृश्यन्ते। तेनेष्टसाधनताज्ञानमेव प्रवृत्तौ हेतुः न तु प्रवर्तना। कारणेनैकेन कार्यसिद्धौ कारणान्तरान्वेषणं व्यर्थमेव। एतत्तु मीमांसाकानामपि अभिमतं यत् स्वर्गकामो यजेतेत्यत्र एतादृशी भावना लभ्येत या हि प्रेरणाया विषयो यस्याः स्वर्गः कर्म यागस्तु करणम्। तेनात्र न केवलं प्रवर्तनैव प्रवृत्तौ हेतुरिति स्पष्टमेव। यावद्धि कश्चिद् यागं स्वर्गसाधनेनाभीष्टसाधकत्वेन न जानाति तावता तस्य न तत्र प्रवृत्तिः। तेन हि न प्रवर्तनामात्रं कार्यप्रवृत्तौ हेतुः कामं

यत्र कुत्र प्रेरणापि प्रवृत्तिहेतुः सम्भवति। किनतु प्रवृत्तौ मुख्यहेतुः इष्टसाधनत्वज्ञानमेव। नवजातशिशावपि इष्टसाधनताज्ञानस्य सूक्ष्मसंस्काररूपेण विद्यमानत्वात् इष्टसाधनताज्ञानस्य प्रवृत्तौ हेतुत्वे न काचित् क्षतिः।

**प्राभाकरमतानुवादः -**

अत्र कार्यं विधिरिति प्राभाकराः। कार्यमिति कृतिसाध्योऽपूर्वोऽदृष्टो वा। कोऽसौ अपूर्व इत्यपेक्षायामुच्यते अपूर्वो हि स धर्मः यो हि यागात् समुत्पद्यते स्वर्गपर्यन्तं स्थिरीभवति। क्षणिके हि यागे निधनानन्तरमात्रप्राप्यस्वर्गसाधनत्वयोग्याता भवितुं नार्हति। एष यागः उत्पन्नः धर्मविशेषः अपूर्वाख्यः यो हि यागस्वर्गप्राप्तिसंयोजनाय सेतोः कार्यं निर्वाहयति। एष एव अदृष्टोपि कथ्यते। यागाद् अपूर्वोत्पत्तिः अपूर्वद्वारेण च स्वर्गप्राप्तिरिति परमपरयैव यागस्य स्वर्गसाधनत्वं सम्भवति। तेन कार्यं विधिरित्यत्र कार्यशब्दः कृतिसाध्ये अपूर्वविशेषे प्रयुक्तः। लौकिकवाक्ये तु सद्यः फलप्राप्तेः तत्र कार्यताज्ञानमेवालम्, किन्तु श्रुतिवाक्ये फलस्य परलोकप्राप्यतया तत्रापूर्वस्य कल्पना आवश्यकी।

यदा नैयायिका हि इष्टसाधनता कृतिसाध्यता बलवदनिष्टाननुबन्धित्वञ्च हेतुत्रयं प्रवृत्तेः मन्यन्ते, किन्तु हेतुत्रयापेक्षया एकस्यैव कार्यस्य (कार्यताज्ञानस्य) प्रवृत्तेः कारणत्वस्वीकारे लाघवम्। अतो लौकिकप्रकरणे कार्यताज्ञानं प्रवृत्तेः हेतुरिति स्वीकर्तव्यम्, तेन तत्र विधेरर्थः तदेव। श्रुतिवाक्ये तु यागस्य साक्षात्स्वर्गसाधनत्वाभावात् तत्रापूर्व एव विधेरर्थः, यतो यागः परम्परया स्वर्गसाधनत्वं भजते। एतदुपपत्तये स्वर्गकामो यजेतेत्यादि वैदिकवाक्यानां पञ्चार्थाः स्वीकृताः मीमांसकैः।

तत्र प्रथमे अर्थे यजेत इत्यत्र यो लिङ् तस्यार्थः एतादृशस्य अपूर्वस्य स्वकीयकृतितः प्राप्तिः यत्र स्वर्गाभिलाषी नियोज्यो यागः कारणम्। शब्दान्तरेण कथने स्वर्गाभिलाषी हि यागतः ही अपूर्वं प्राप्नुयादिति प्रथमो बोधः। यागो हि क्षणिकोपि अपूर्वमाश्रित्य निधनानन्तरप्राप्यस्य स्वर्गस्य परम्परया साधनं भवति इति द्वितीयोर्थः। यतो हि यागः अपूर्वमाध्यमेन स्वर्गसाधकः तेन स्वर्गकामेन अवश्यं यष्टव्यम् इति तृतीयोर्थः। अत्र हि यागे कार्यतायाः उपपत्तिः यतो याजके याग-

भावना उदेति। तेनायमेव मुख्यः शाब्दबोधः। कार्यं हि कृतिसाध्यं तेन कार्येण सहैव कृतेरप्युपस्थितिः अनिवार्या। कृतेराश्रयस्तु स्वर्गकामः एव इति चतुर्थोर्थः। स्वर्गाभिलाषी अहमतः यागो मत्कृतिसाध्यः इति निष्कर्षरूपः पञ्चमोर्थः।

**नैयायिकमतम् -**

प्रवर्तकज्ञानविषयो विधिरिति नैयायिकाः। प्रवर्तकं च कृतिसाध्यत्वेष्टसाधनत्व-बलवदनिष्टाननुबन्धित्वानां ज्ञानम्। एतद्ज्ञानत्रयविशिष्ट एव तत्तत्कार्ये प्रवृत्तो भवति। कृत्यसाध्यतया न कोपि मेरुश्रृङ्गोत्पाटने समर्थो भवति, कामं तस्मात् स्वर्णादिप्राप्तिः पर्याप्ता किं न भवेत्। इष्टासाधनत्वेन न कोपि समुद्रतरङ्गान् परिगणयति। तृप्तिरूपेष्टसाधनत्वेपि ततोपि बलवदनिष्टसाधनतया नकोपि मधुविषसम्पृक्तमन्नं भुङ्क्ते। अतः प्रवृत्तेः एतद्धेतुत्रयमालक्ष्यैव लिङः त्रिविधा वाचकशक्तिः परिकल्प्यते। कृतिसाध्यत्वेन प्रथमा, इष्टसाधनत्वेन द्वितीया बलवदनिष्टाननुबन्धित्वेन च तृतीया।

**अत्र केचित्** – त्रिविधेषु इष्टसाधनत्वस्य प्राधान्यात् तदेव विध्यर्थो भवतु। अथवा समुदिता एका शक्तिः भवतु। तन्न। विशेष्यविशेषणविनिगमकाभावेन त्रिष्वेव पृथक् शक्तेः। शक्तित्रयस्वीकारे एव स्वर्गकामो यजेत इत्यत्र स्वर्गकामीयो यागः कृतिसाध्यः इष्टसाधनं बलवदनिष्टाननुबन्धी च इति बोध इत्येके।

वस्तुतो नामार्थधात्वर्थयोः भेदेन साक्षादन्वयस्य अव्युत्पन्नतया तादृशयागानुकूलकृतिमान् स्वर्गकाम इत्येव बोधः। कृतिसाध्यत्वञ्च प्रवृत्तिसाध्यत्वम्। तेन न समुद्रतरणादौ प्रवृत्तिः। इष्टसाधनत्वञ्च इष्टनिष्ठसाध्यातनिरूपकत्वम् अतः न तृप्तस्य भोजने प्रवृत्तिः। बलवदनिष्टाननुबन्धित्वन्तु स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्। 'न हि सुखं दुःखैर्विना लभ्यते' इति न्यायेन नान्तरीयकं किञ्चित् दुःखमिष्टोत्पत्ताववश्यम्भावि। तदतिरिक्तदुःखराहित्यमेव तत्त्वम्।

**ब्राह्मणो न हन्तव्यः इत्यत्र लिङर्थः -**

अत्र नञर्थः अभावः, तस्मिन् लिङर्थस्य बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपस्य स्वप्रतियोगिकत्वसम्बन्धेनान्वयः, अभावस्य च स्वरूपसम्बन्धेन हनने धात्वर्थे अन्वयः। तथा च बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्व-

प्रतियोगिकाभावविशिष्टब्राह्मणहननमिति बोधः । अत्र विशेषणस्य बलवदनिष्टाजनकत्वस्य विशेष्यस्य इष्टसाधनत्वस्य च अभावप्रयुक्तो विशिष्टाभावः तेन बलवदनिष्टजनकत्वं हनने प्रतीयते नैयायिकमते ।

गुरुमते च हननस्य स्वप्रतियोगिकत्वसम्बन्धेन लिङर्थे अपूर्वे अन्वयः, अपूर्वञ्च पुण्यं, तथा च ब्राह्मणहननप्रतियोगिकाभावप्रयोज्यमपूर्वमिति बोधः । नैयायिकमते ब्राह्मणहननमनिष्टजनकं, न तु तद्धननाभावः पुण्यजनकः । गुरुमते ब्राह्मणहननाभावजन्यं पुण्यं न तु ब्राह्मणहननमनिष्टजनकमिति प्रतीयते इति भेदः ।

एवन्तर्हि ब्राह्मणहनने कुतो न प्रवर्तते गुरुमते इति चेत् पुण्यप्रयोजकाभावप्रतियोगित्वरूपस्य पुण्यप्रतिबन्धकत्वस्य हनने शब्दात् प्रतीतौ पुण्यकामस्य पुण्यप्रतिबन्धके ब्राह्मणहनने प्रवृत्त्यनुपपत्तेः इति भावः ।

एतेन = बलवदनिष्टाननुबन्धित्वस्यैव निषेधे स्वारस्येन समुदिते लिङः शक्तिकल्पनमपास्तम् । समुदिते शक्तिस्वीकर्तृमते कृतिसाध्यत्वस्य इष्टसाधनत्वस्य च निषेधे सम्प्राप्ते वाक्यार्थासङ्गिः स्यादिति तात्पर्यम् । अनया रीत्या नैयायिकमते विध्यर्थविचारः समाप्तः ।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ
लकारार्थसिद्धान्तनिरूपणम् ॥

# अथ विभक्त्यर्थसिद्धान्तनिरूपणम्

अथेदानीं विभक्त्यर्थौ विचार्यते। इतः पूर्वं दशलकारादिविचारो विहितः। तत्र तत्तल्लकारस्य कोऽर्थः इति निरूपितम्। एवञ्च धातुप्रकृतिकानां लकाराणां केऽर्था इति निरूप्य प्रातिपदिकप्रकृतिकसुपामर्थाः उच्यन्ते। यद्यपि प्रातिपदिकार्थ कः ? इति एतावता न निरूपितम्। यथा लकारप्रकृतिभूतं धात्वर्थं निरूप्य ततः तस्माद् विधीयमानानां लकाराणामर्थाः न्यरूपिषतास्माभिः। तद्वदत्रापि आदौ प्रकृतिभूतं प्रातिपदिकार्थं वर्णयित्वैव ततः विधीयमानानां सुपामर्थनिरूपणमुचितम्। तथापि कुतोऽस्य क्रमस्य भङ्गः ? इति चेन्नामार्थस्य लघुभूतविषयत्वात् सुबर्थस्य च वैपुल्यात् तत्तच्छास्त्रकारैः एतद्विषय एव बहुविचारितत्वात् प्रसिद्धत्वाच्चेदं विचार्यते पूर्वम्। तस्मादेव 'सर्वे हताः कारकप्रकियायाम्' इत्युक्तिः चरितार्थीभवति। अर्थात् यद्यपि आलोचनीया बहवः अंशा अत्र शास्त्रे वर्तन्ते तथापि कारकार्थस्य निरूपणे सर्वेषामपि पक्षपात इव दृश्यते यथा धात्वर्थनिरूपणे। किञ्च विदुषां मनोरञ्जको व्युत्पत्तिदायकश्च भवति अयं विचारः।

यद्वा एवमपि वक्तुं शक्यते यद् धात्वर्थक्रियायामन्वयो भवति कारकाणां समेषामपि। अर्थात् शाब्दबोधवर्णनवेलायां धात्वर्थक्रियायां कारकत्वेन अन्वय उच्यते सुबन्तानाम्। तत्र कर्तृकर्मत्वाद्यर्था विभक्तिद्योत्या एव तथापि तादृशकर्तृकर्मरूपभिन्नधर्मनिरूपणाय तु अस्त्येवोपयोगः तत्तद्विभक्तीनाम्। अतस्तत्र कः प्रथमार्थः ? कः द्वितायर्थः ? इत्यादिरीत्या विचारणीयत्वात् तत्र च प्रातिपदिकार्थापेक्षया विभक्तिद्योत्यस्यैव प्राधान्यात् स एव आदौ विचार्यते। यद्यपि 'पञ्चकं प्रातिपदिकार्थः' इति परमसिद्धान्ते शब्दे उच्चारिते स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमिकोपस्थितिः तेन कारकोऽपि तत्र उपस्थितस्तथापि तत्पक्षनिरूपणवेलायां प्रत्येकं विभक्त्यर्थस्य

निरूपणस्य तत्राप्रकृतत्वात् तत्रानुपयोगाच्च अत्रैव निरूप्यते विभक्त्यर्थः । एतेन नामार्थनिरूपणात् प्राक् नामार्थप्रकृतिकसुबर्थस्य पूर्वनिरूपणेऽपि न काऽपि असङ्गतिः ।

यद्वा धात्वर्थं निरूप्य तत्प्रकृतिकः यः लकारः प्रत्ययः, तदर्थनिरूपणं च दशलकारार्थविचारप्रसङ्गे कृतम् । इदानीन्तु प्रत्ययस्य स्मरणात् स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्या सुबाख्यप्रत्ययस्यार्थनिर्णयः क्रियत इति सर्वं सुसङ्गतम् ।

**कारकविभागः –**

**कर्ता कर्म च करणं सम्प्रदानं तथैव च ।**

**अपादानाधिकरणमित्याहुः कारकाणि षट् ॥ इति ।**

अनया कारिकया स्पष्टं यत् कारकाणि हि षट्संख्याकानि । तानि च कर्तृकर्मकरणसम्प्रदानापादानाधिकरणभेदात् षडिति । तत्र किं नाम कर्तृत्वादिकमिति विशेषजिज्ञासायाः प्राक्, सामान्यज्ञानमन्तरा न विशेषविषयिणी जिज्ञासा जायते इति आदौ कारकाणि कानि उद्देशकथनं कृत्वा कारकसामान्यलक्षणमादावुच्यते । ततः कारकसमान्यं नाम किमिति ज्ञाते किं नाम कर्तृत्वादिकमिति विशेषजिज्ञासाशमनाय तत्तत्कारकस्य विचारः करिष्यते । अत आदौ किं नाम कारकत्वमिति जिज्ञासाशमनाय भाष्यसम्मतं कारकलक्षणमित्थम् –

**कारकलक्षणम् -**

**"क्रियानिष्पादकत्वं कारकत्वम्" इति । तच्च कर्त्रादीनां षण्णामपि ।**

**अयमर्थः** – क्रियाया निष्पादकत्वम् = उत्पादकत्वं कारकत्वमिति । इदं हि लक्षणं "कारके" इति सूत्रभाष्याल्लब्धार्थकानुवादपरम् । तथा हि तत्र भाष्ये – "कारक इति संज्ञानिर्देशश्चेत् संज्ञिनोऽपि नर्देशः कर्तव्यः । साधकं निर्वर्तकं कारकसंज्ञं भवतीति वक्तव्यम् । इतरथा हि कर्मसंज्ञाप्रसङ्गश्चाकथितस्य 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति' । अग्रे च – नैष दोषः, कारक इति महतीयं संज्ञा क्रियते, संज्ञा च नाम यतो न लघीयः । कुत एतत्? लघ्वर्थं हि संज्ञाकरणम्, तत्र महत्याः संज्ञायाः करणे एतत् प्रयोजनम् – अन्वर्थसंज्ञा यथा विज्ञायेत "करोति कारकम्" ।" करोति

क्रियां निर्वर्तयति निष्पादयतीत्यर्थः। अनेन भाष्येण क्रियाजनकत्वं कारकत्वमिति लब्धम्। जनकत्वञ्चात्र कारणरूपं विवक्षितम्। कारणत्वं हि अन्यथासिद्धिशून्यत्वे सति कार्यनियतपूर्ववृत्तित्वम्। तथा च 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यादौ ब्राह्मणस्य न कारकत्वम्, पुत्रेण अन्यथासिद्ध्या तस्य कारकत्वाभावात्। क्रियाजनकत्वादेव एषां कारकाणां क्रियायामेवान्वयः।

**अत्र शङ्का** – ग्रन्थकारः कारकत्वं कर्तृकर्मादीनां षण्णामपि इति वदति। तत्कथं सङ्गच्छेत? यतः करोतीति कारकमिति ण्वुल्प्रत्ययस्य कर्तरि अर्थे प्रसिद्धत्वात् कर्मकारकं, करणकारकम् इत्यादिव्यवहाराः कथमुपपादनीयाः। किञ्च एकस्य कारकस्य सम्प्रदानसंज्ञा तस्यैव कारकमित्युक्त्वा कर्तृत्वञ्चोच्यते तर्हि संज्ञासाङ्कर्यदोषः आपपति खलु इति चेत् –

**अत्र समाधानम्** – कारके इति अधिक्रियते, कारके इति व्यत्ययेन प्रथमार्थे सप्तमी। तेन प्रतिसूत्रं वाक्यं भित्त्वा कारकसंज्ञा विधीयते। अपाये ध्रुवं कारकसंज्ञं स्यात्। ततोऽपादानसंज्ञमिति। सा च संज्ञा अधिकारबलात् सर्वेषु कर्मादिषु अवतरन्ती तत्तत्कारकस्य कर्मादिसंज्ञां कारकसंज्ञां च सम्पादयति। संज्ञासाङ्कर्यं तु न शङ्क्यम्। संज्ञाविषये बाध्यबाधकभावो नास्ति इति सिद्धान्तात्। अथवा कारके इति यथाश्रुतार्थः भवतु। विषयसप्तमीयम्। कारकशब्दश्च क्रियापरः। करोति कर्तृकर्मव्यपदेशानिति भाष्ये व्युत्पत्तिप्रदर्शनात्। तदुक्तं भाष्ये "यावद् ब्रूयाद् क्रियायामिति तावत् कारके"। क्रियायां विषयः इत्यर्थः। विषयत्वञ्च जनकत्वेन। तेन अपाये यद्ध्रुवं क्रियाजनकं तत् कारकमपादानसंज्ञं स्यादिति योजना कार्या। अत्र पक्षे वाक्यभेदः न कल्पनीय इति लाघवम्। अनया रीत्या सर्वेषामपि कर्त्रादीनां कारकत्वोपपत्तिः।

**कर्तृत्वविचारः** –

तेषु षट्सु कारकेषु कर्तृत्वस्य लक्षणमुक्त्वा तत्सम्बद्धो विचारः क्रियतेऽधुना। "कर्तृत्वञ्च – प्रकृतधातुवाच्यव्यापाराश्रयत्वम्।" धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते। इति हर्युक्तेः। अन्यकारकनिष्ठो व्यापारस्तु न धातुवाच्यः। यथा – 'वह्निना

पचति' इत्यत्र वह्निनिष्ठः प्रज्वलनादिः। अन्यकारकनिष्ठव्यापाराश्रयस्य कर्तृत्ववारणाय धातुवाच्य इति। तत्रोक्ते तु कारकमात्रे प्रथमैव। 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इति वार्तिकद्वयात्।

**अयं भावः** – कर्तृलक्षणसमन्वयः – देवदत्तः पचति इत्यत्र प्रकृतधातुः पच्धातुः, तद्वाच्यो यो व्यापारः विक्लित्त्यनुकूलो व्यापारः, तद्व्यापाराश्रयः देवदत्तः। यतः व्यापारोऽयं देवदत्तनिष्ठः। अत एव व्यापाराश्रयः कर्ता, फलाश्रयः कर्म इति उच्यते। अत्र यदा स्थाली पचति, काष्ठानि पचन्ति इत्यादिविवक्षया वाक्यानि प्रयुज्यन्ते। तदा तत्तद् वाक्ये तद्धातुपात्तव्यापाराश्रयत्वात् स्थाल्यादीनां कर्तृत्वं सिध्यति। अत्र प्रमाणं "कारके" इति सूत्रभाष्यमेव। तत्र हि – "एवं तर्हि स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली स्वतन्त्रा, कर्तृस्थे यत्ने कथ्यमाने परतन्त्रा"। अनेन च भाष्येण एकदा एककारकस्थव्यापारस्यैव धातुवाच्यत्वं बोध्यते। एवञ्च विवक्षावशादेव कर्तृत्वं करणत्वादिकं बोध्यम्। तदेव स्वातन्त्र्यमपि। "स्वतन्त्रः कर्ता" इति अनुशासनात्। तदुक्तं कैयटेन कारके इति सूत्रभाष्ये प्रदीपे – सर्वेषां कारकाणां साध्यत्वेन साधारणी क्रिया ततश्च सर्वेषां तस्याः कर्तृत्वम्। अवान्तरव्यापाररूपविवक्षायान्तु करणत्वादिकम्। तदुक्तं वाक्यपदीये–

**निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके।**
**व्यापारभेदापेक्षायां करणत्वादिसम्भवः॥ इति।**

अर्थस्तु स्पष्ट एव। उदाहरणेन इतोऽपि स्पष्टं भवति - यथा मातापित्रोः अपत्योत्पादने कर्तृत्वं, भेदविवक्षायां 'अयमस्याम्' 'इयमस्मात्' जनयतीत्यधिकरणत्वाद्यवस्थायां न भवति, "स्वतन्त्रः कर्ता" इत्यत्र कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रविधिः नियमार्थः, तेन स्वातन्त्र्यमेव यस्य कर्तृसंज्ञा तस्य, न तु पारतन्त्र्यसहितस्वातन्त्र्ययुतस्य। अयमाशयः वस्तुतः वाक्यपदीये व्यक्तः स एव प्रदीपेऽनूदितः। तत्र हि – "अयमस्यामियमस्मादिति भेदो विवक्षया" इति कारिका साधनसमुद्देशे पठिता। तत्र च व्याख्याने स्पष्टतरं व्यक्तं – पुत्रजनने इत्यादिना दृष्टान्तः उक्तः। यदा मातापितरौ पुत्रं जनयतः इति उच्यते तदा उभयोः कर्तृत्वम्।

यदा तु पिता अस्यां पुत्रं जनयति तदा पितुः कर्तृत्वम्। यदा तु इयम् अस्मात् पुत्रं जनयति तदा मातुः कर्तृत्वम्। अनया रीत्या एक एव व्यापारो यदा तत्तदाश्रयभेदेन प्रकृतधातुवाच्यः तदा तत्तद्धात्वर्थव्यापाराश्रयस्य कर्तृत्वमित्याशयः। अत एव विवक्षातः कारकाणि भवन्तीति वादः। अत्र यद्यपि एकदैव सर्वेषां कारकाणां ते ते व्यापाराः भवन्ति परन्तु धातुवाच्यव्पाराश्रयस्यैव कर्तृत्वम्। अत एव अन्येषां ये व्यापाराः न धातुवाच्या तदा न तेषां कर्तृत्वमिति। यदा तु यस्य कारकस्य व्यापारः धातुवाच्यः तदा तस्य तस्मिन् व्यापारे स्वातन्त्र्यात् "स्वतन्त्रः कर्ता" इति सूत्रेण कर्तृत्वं, धातुना च अभिहितत्वात् प्रथमा च भवति। तन्नियमयति वार्तिकद्वयम् – 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इति। अनुक्ते तु कर्तरि "कर्तृकरणयोस्तृतीया" इति सूत्रात् तृतीया भवति। अनेन कारकमात्रे कर्त्रर्थे प्रथमा भवति इत्यर्थः सिद्धः वार्तिककारमते।

**प्रथमाविषये सूत्रकारमतम् -**

सूत्रकारमते तु कर्तृकर्माद्यर्थकप्रत्ययेन कर्त्रादेरुक्तत्वात् प्रथमायाः प्रातिपदिकार्थ एवार्थः। तस्य चाख्यातकर्त्रादिनाऽभेदान्वयेन प्रथमार्थस्य कारकत्वम्। अत एवाख्यातार्थद्वारकक्रियान्वयात् तदर्थस्य क्रियाजनकत्वादस्याः कारकविभक्तित्वेन व्यवहारः। चैत्रो भवति इत्यत्रैकत्वावच्छिन्नचैत्राभिन्नकर्तृकं भवनमिति बोधः। आख्यातकृदादिना कर्त्रादेरभिधानेऽपि प्रथमानुद्भूतकर्तृत्वादिशक्तिः प्रतिपाद्यत इति तात्पर्यम्। कर्माख्याते तु चैत्रेण ग्रामो गम्यते इत्यत्र चैत्रकर्तृकव्यापारजन्य एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठः संयोग इति बोधः।

**अस्यायं भावः** – प्रथमाविधायके "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इति सूत्रे कारकवाचकपदाभावात् प्रातिपदिकार्थ एव प्रथमार्थः। वार्तिकद्वये तु 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इत्यत्र कारकवाचकप्रथमार्थबोधकशब्दोपादानात् उक्तकारकमात्रं विभक्त्यर्थ इति निश्चीयते। यद्येवं तर्हि सूत्रकारमते तु प्रथमान्तपदघटितप्रयोगे कथं कर्तृत्वादेर्भानमिति चेत् - कर्तृकर्माद्यर्थकप्रत्ययेन कर्त्रादेरुक्तत्वात् तत्तत्कारकार्थकतिङ्भ्यां कर्तृत्वादीनां भानमित्यर्थः।

एवमपि सूत्रकारमते प्रथमार्थस्य कथं कारकत्वमिति चेत् – आख्यातकर्त्रादिना = आख्यातेनाभिहित कर्त्रादिकारकेण अभेदान्वयेन प्रथमार्थस्य कारकत्वमिति। अत एव प्रथमार्थस्य कारकत्वादेव कारकविभक्तित्वेन व्यवहारः। किञ्च प्रथमान्तार्थस्य क्रियायामन्वयाभावेन क्रियाजनकत्वानुपपत्त्या क्रियाजनकत्वरूपं कारकत्वं क्रियान्वयित्वेनैव साध्यते। तत्र आख्यातार्थस्य क्रियाजनकत्वात् क्रियाजनकस्य क्रियायामन्वयौचित्येन कारकत्वे सति तदभेदेन प्रथमान्तार्थस्यापि क्रियाजनकत्वादस्याः कारकविभक्तित्वेन व्यवहारः। एतस्याः प्रातिपदिकार्थप्रयोजिकायाः प्रथमाया कारकत्वव्यवहारादेव शाब्दबोधे चैत्रकर्तृकपाकानुकूलो व्यापारः इति प्रथमान्तार्थस्य कर्तृत्वादिकारकत्वव्यवहारः उपपद्यते। तथा हि - "चैत्रो भवति" एकत्वावच्छिन्नचैत्राभिन्नकर्तृकं भवनमिति बोधः। अत्र चैत्राभिन्नकर्तृकम् इत्यादिना कर्तृत्वं हि तस्य सूचितम्, भवति इति तिङ्प्रत्ययेनभिधानात् कर्तुः। अत एवोक्तम् आख्यातकृदादिना कर्त्रादेरभिधानेत्यादि। अयं च शाब्दबोधः अस्मन्मते व्यापारमुख्यविशेष्यकत्वादेव। व्यापारश्च क्रिया सा च धातुपात्तेति धात्वर्थप्रकरणे निरूपितमस्माभिः। कर्माख्यातस्थले तु चैत्रेण ग्रामो गम्यते इत्यत्र चैत्रकर्तृकव्यापारजन्य एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठः संयोग इति बोधः। अत्रैवमन्वयोपपत्तिः – चैत्रपदोत्तरतृतीयायाः आश्रयोऽर्थः, कर्तरि तृतीयाविधानात्, तत्राभेदेन चैत्रपदार्थस्यान्वयः, आश्रयस्य च निष्ठत्वसम्बन्धेन धात्वर्थव्यापारेऽन्वयः, कर्मप्रत्ययार्थोपि आश्रयः, तत्राबेदेन ग्रामस्यान्वयः, आश्रयस्य च वृत्तित्वसम्बन्धेन संयोगेऽन्वयः, संयोगे एव व्यापारस्य जन्यत्वसम्बन्धेनान्वयः, आख्यातार्थैकत्वसंख्यायाः समवायेन ग्रामेऽन्वयः। कर्मप्रत्ययस्थले व्यापारविशिष्टफलविशेष्यकः एव शाब्दबोधः नव्यमते। तन्मते विशिष्टशक्तिस्वीकारात्। तथा च फलावच्छिन्नव्यापारः, व्यापारावच्छिन्नफलं धात्वर्थ इति। कर्तृप्रत्ययस्थले तु फलविशिष्टव्यापारविशेष्यकः बोध इत्येत्सर्वं प्राङ्निरूपितमेव।

**सम्बोधनविभक्त्यर्थः -**



एवं प्रथमायाः कारकविभक्तित्वं साधयित्वा सम्बोधनस्य कारकविभक्तित्वं सा-

ध्यते -

सम्बोधनप्रथमार्थस्यापि अनुवाद्यत्वेनोद्देश्यतया युष्मदर्थाभेदेन विधेयक्रियाया-मन्वयात् क्रियाजनकत्वरूपकारकत्वम्। देवदत्त ! त्वं गच्छ इत्यादौ अभिमुखीभ-वद्देवदत्ताभिन्नयुष्मदर्थोद्देश्यकप्रवर्तनादिविषयो गमनमिति बोधः।

**अयं भावः** – "सम्बोधने च" इति सूत्रानुसारेण प्रातिपदिकार्थयुक्तसम्बोधन-मपि प्रथमार्थः। तत्र क्रियोत्पादकत्वाभावात् कथं तस्याः कारकत्वमिति चेदुच्यते सम्बोधनस्यार्थः अनभिमुखस्याभिमुखीकरणमेव। फलञ्च कार्ये प्रवृत्तिः तस्मान्नि-वृत्तिर्वा। इयं च सम्बोधनविभक्ति अनुवाद्यविषया। अनुवाद्यत्वं हि प्रथमतो विद्य-मानस्य सिद्धस्य वा वक्त्राभिमुखीकरणमेव। तदुक्तं हरिणापि–

**सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।**
**प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते॥ इति।**

अनया कारिकया स्पष्टं यत् क्रियासु विनियोगफलकोऽभिमुखीभावः सम्बो-धनमिति। कारिकायां 'सिद्धस्य' इत्यनेन सम्बोधनस्यानुवाद्यत्वम्, 'विनियुज्यते' इत्यनेन च प्रवर्तनाविषयकक्रियासम्बन्धः तस्याः बोधितम्। एवञ्च संख्याया एव सम्बोधनस्य प्रकृत्यर्थे रामादावश्रयत्वसम्बन्धेनान्वयः। प्रकृत्यर्थस्य च स्वोद्देश्य-कत्वसम्बन्धेन साक्षाद्विध्यर्थप्रवर्तनायामन्वयः, तद्वारैव प्रवर्तनाविषयीभूतक्रियाया-मन्वयाङ्गीकारश्च। परम्परयाऽन्वयस्वीकारादेव "नामार्थधात्वर्थयोः भेदेन साक्षा-दन्वयः व्युत्पन्नः" इति व्युत्पत्तेरपि न विरोधः। प्रवर्तनायाश्च विषयत्वसम्बन्धेन गमनादिक्रियासु अन्वयः। तथा च देवदत्त ! गच्छ इत्यादौ अभिमुखीभवद्देवद-त्ताद्युद्देश्यकप्रवर्तनाविषयो गमनमिति बोधः। एवं प्रथमायाः सम्बोधनप्रथमायाश्च कारकत्वं निरूप्य प्रथमार्थस्य कारकत्वे प्रमाणं प्रदर्श्यते–

**आश्रयोवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा।**
**यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः॥ इति।**

इत्युक्तम्। भट्टोजिदीक्षितप्रणीताया एतस्याः कारिकायाः संक्षेपतः अर्थस्तु इ-त्थं वर्तते यत् आश्रयः द्वितीयातृतीयासप्तमीनाम् अर्थः, अवधिः पञ्चम्यर्थः, उद्देश्यः

चतुर्थ्यर्थः, सम्बन्धः षष्ठ्यर्थः इत्येते अंशाः सर्वेऽपि सुपां कर्मादयोऽप्यर्थाः इत्यादिना प्रवृत्तात् भाष्यात् सिद्ध्यन्ति। एतेन शक्तिः = धर्मः विभक्त्यर्थः इति सिद्धम्। अपि च विभक्तीनां धर्म्यर्थः इत्यंशे भाष्योक्ता कारिका प्रमाणम् – तथा हि-

**सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङां।**
**प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा॥ इति।**

उपरितनश्लोके भाष्यकृता स्पष्टमेवोक्तं यत् सुपां सुब्विभक्तीनां कर्मादयोऽर्थाः इति। यदि धर्मवाचकत्वं भाष्यकृता अभिप्रेतं स्यात् तदा सुपां कर्मत्वादयोऽप्यर्था इत्येव वदेत् भाष्यकृत्। तस्मात् कर्मणि द्वितीया इत्यादिसूत्रस्वरसभङ्गापत्त्या, कर्मार्थककृतद्धितानामपि धर्मवाचकत्वापत्त्या, सुपां कर्मादयोऽप्यर्था इत्यादिभाष्यवचनेन च विभक्तीनां धर्मिवाचकत्वमेव, न तु धर्मवाचकत्वमिति सिद्धान्तः।

**प्राचीनोक्तं कारकलक्षणं तन्निराकरणञ्च –**

प्राचीनाः क्रियानिमित्तत्वं कारकत्वमिति वदन्ति। निमित्तशब्दः अत्र कारणपरः। तथा च क्रियायाः कारणं कारकमिति फलति। एवमुक्ते केचन दोषाः समापतन्ति। तथा हि – चैत्रस्य तण्डुलं पचति इत्यादौ सम्बन्धिनि चैत्रे कारकत्वस्यातिव्याप्तिः। यथा हि सम्प्रदाने दानानुमतिप्रकाशनद्वारा दातरि सम्प्रदानत्वं तथैव तण्डुलादिद्वारा सम्बन्धिनि चैत्रादौ क्रियानिमित्तत्वमस्ति एव। अतस्तद्वारणाय क्रियान्वितविभक्त्यर्थान्वितत्वं क्रियानिर्वर्तकत्वं वा कारकत्वम्। विशेष्यतया क्रिया सुप्तिङन्यतरविभक्त्यर्थे अन्वेति। विभक्त्यर्थश्च चैत्रघटादौ विशेष्यतयैव अन्वेति। षष्ठ्यर्थस्य तु तण्डुलादिनामार्थान्विततया क्रियान्वयित्वं नास्ति। अत एव षष्ठ्यर्थस्य उपपदविभक्त्यर्थस्य च न कारकत्वं क्रियान्वयाभावात्। उपपदविभक्तीनामपि सम्बन्ध एवार्थः। तथा च प्रकृते चैत्रस्य न कारकत्वं तस्य क्रियान्वयित्वाभावात्। चैत्रस्य पचति इत्यादावपि तण्डुलादिपदाध्याहरेणैव बोधः। षष्ठ्यर्थसम्बन्धस्य नामार्थेनैव क्रियायाः कर्मत्वादिनैव साकाङ्क्षत्वेन सम्बन्धक्रिययोः निराकाङ्क्षत्वात्। एवञ्च क्रियान्वयाभावात् क्रियानिष्पादकत्वाभावात् वा प्रकृते न चैत्रस्य कारकत्वम्। क्रियानिमित्तत्वं तु भवत्येव तस्यापि कारकत्वमित्यतः क्रियानिमित्तत्वं न कारक-

त्वम्। किञ्च एवं स्वीकारे "कारके" इति सूत्रभाष्योक्तलक्षणस्यासङ्गतिः। तत्र हि करोति क्रियां निष्पादयति इत व्युत्पत्त्या क्रियाजनकत्वस्यैव कारकत्वस्वीकारात्।

**तार्किकोक्तकर्तृत्वलक्षणम् तद्दूषणञ्च -**

तार्किकाः **'कारकान्तराप्रयोज्यत्वे सति कारकचक्रप्रयोज्यत्वकर्तृत्वमिति** वदन्ति।' अचेतनेपि चेतनत्वारोपेण इदम्। तेन स्थाल्यादीनां कर्तृत्वमुपपद्यते। तदयुक्तम् – स्थाली पचति असि छिन्नति इत्यादौ स्थाल्यादेः कारकचक्राप्रयोजकत्वात् कारकान्तरप्रयोज्यवात् च, कर्तृत्वं न स्यात्। स्थालिस्थे यत्ने पचिना कथ्यमाने इत्यदिभाष्यात् स्थाल्यादिनां स्वातन्त्र्ये लब्धे अपि नहि स्थाली देवदत्तादि प्रेरणां विना पक्तुं शक्नोति, तस्याः कारकान्तरप्रयोज्यत्वं तु नैव प्रतिकर्तुं शक्यते। अतः कर्तृत्वं हि धातूपात्तव्यापाराश्रयत्वमेव।

वस्तुतस्तु **"कारकचक्रप्रयोजकत्वं कर्तृत्वम्"** इति "कारके" इति सूत्रभाष्यसम्मतमेव। तत्र हि – "कथं पुनर्ज्ञायते कर्ता प्रधानमिति ? यत्सर्वेषुसन्निहितेषु कर्ता प्रवर्तयिता भवतीति।" एवञ्चाचेतने प्रयोजकत्वादेरारोपे बाधाभावात्तेषां कर्तृत्वं सुलभमिति स्पष्टं लघुमञ्जूषायाम्। विस्तरस्तु तत एव ज्ञेयः। एतावता कर्तृत्वं निरूप्य तत्र कर्तरि तृतीयाया विधानात् प्रसङ्गात् कर्तृतृतीयार्थोप्यनुपदमेवोच्यते।

**भूषणग्रन्थरीत्या कर्तृतृतीयाया आश्रयार्थकत्वव्यवस्थापनम् –**

तत्र तृतीयाया भेदद्वयम्, कर्तरि करणे च तद्विधानात्। उभयोरपि आश्रयोऽर्थ इति प्रकृते कर्तृतृतीयार्थः प्रतिपाद्यते। करणतृतीयार्थस्तु पश्चाद्वक्ष्यते।

**अत्र प्रश्नः** - "कर्तृकरणयोस्तृतीया" (पा.सू. २-३-१८) इति पाणिन्यनुशासनेन कर्तरि वाच्ये करणे वाच्ये च तृतीया विहिता वर्तते। तस्मात् तृतीयायाः कर्तृकारकं करणकारकं चार्थ इति लभ्यते। एवं सति कथं स्वकारिकाग्रन्थे वैयाकरणमतोन्मज्जने दीक्षितेन आश्रयोर्थ इति प्रतिज्ञातम्, तस्मात् सूत्रविरोधोऽस्ति खलु इति।

**अत्रोत्तरम्** - "कर्तृकरणयोस्तृतीये"ति सूत्रबलात् कर्ता एव तृतीयार्थः इति सिद्ध्यति। किन्तु को नाम कर्तेति प्रश्ने "स्वतन्त्रः कर्ता" (पा.सू. १-४-५४) इति सूत्रमहिम्ना स्वातन्त्र्याश्रयः कर्तेति लभ्यते। तत्र किं नाम स्वातन्त्र्यमिति चेत् लोके

इतरानधीनत्वं स्वातन्त्र्यमिति प्रसिद्धमस्ति। तादृशस्य स्वातन्त्र्यस्य प्रकृते विवक्षणे तु देवदत्तः पचतीति स्थले देवदत्तः स्थाल्यादीतरकारकानधीनतयैव पाकक्रियां निर्वर्तयति, अन्यानि तु कारकाणि देवदत्ताधीनतयेति देवदत्तस्यैव कर्तृत्वम्, अन्येषां तु नेति अभीष्टव्यवस्थायाः सिद्धत्वेपि यत्र अचेतनानां कर्तृत्वं यथा घटो भवति, रथो गच्छति इत्यादिस्थले, तत्र अचेतनानां सर्वदा इतराधीनतयैव कार्यनिर्वर्तकत्वमिति तेषामितरानधीनत्वरूपं स्वातन्त्र्यं नास्तीति कर्तृसंज्ञैव न स्यात्, तथा सति तत्प्रयुक्ततृतीयापि न स्यात्।

अतो धातूपात्तव्यापाराश्रयत्वमिति पारिभाषिकं स्वातन्त्र्यं विवक्षितम्। तथा सति रथो गच्छतीति अचेतनकर्तृकस्थले रथस्य स्वयमितराधीनतया कार्यनिर्वाहकत्वेपि धातूपात्तगमनरूपव्यापाराश्रयत्वं निर्बाधमिति तस्यापि कर्तृसंज्ञा, तत्प्रयुक्ततृतीया च सिद्ध्यतीति न कश्चिद्दोषः। एवं च पारिभाषिकस्वातन्त्र्याश्रयणेन व्यापाराश्रयः कर्तेति लब्धः। तत्र व्यापारांशस्तावत् धातुनैव उक्त इति अनन्यलभ्यः शब्दार्थ इति न्यायमनुसृत्य पुनस्तत्रार्थे तृतीयायाः शक्तिकल्पनं नैव क्रियते। अतोऽवशिष्टे आश्रयांशे एव शक्तिस्सिद्ध्यति। एवं रीत्या कर्तरि विहिताया अपि तृतीयाया आश्रयार्थकत्वं सिद्ध्यति। अतो नैव सूत्रविरोध इति सर्वं समञ्जसम्। स्पष्टमिदं वैयाकरणभूषणसारे सुबर्थनिर्णये।

**कारकान्तराणामपि कर्तृत्वसमर्थनम् -**

**अत्र काचिदनुपपत्तिः** - देवदत्तः स्थाल्यां काष्ठैः तण्डुलं पचति इति प्रयोगे देवदत्तस्तावत् कर्तृकारकम्, स्थाली तावत् अधिकरणकारकम्, काष्ठानि करणकारकाणि, तण्डुलं कर्मकारकमिति व्यवस्था। सर्वेषु कारकेषु देवदत्तस्यैव चेतनत्वात् क्रियानुकूलकृतिमत्त्वं तत्रैव संभवतीति देवदत्त एव कर्ता भवति, अन्यानि कारकाणि तावद् देवदत्ताधीनतया पाकक्रियां निर्वर्तयन्तीति न तेषां कर्तृत्वं कथञ्चिदपि सम्भवति लोकरीत्या। परन्तु शास्त्रे तु न यथालोकम्। अधिकरणादिकारकाणामपि अत्र शास्त्रे कर्तृत्वमिष्यते। तत्कथं सङ्गच्छते?



**अत्रेत्थमनुपपत्तिपरिहारः** – लोकरीत्या न तथा भवन्नाम तथापि यथाऽस्माभिः

स्पष्टीकृतम् उपरि यत् कर्तृत्वं नाम न इतरानतधीनत्वरूपं स्वातन्त्र्यं नापि कारकचक्रप्रयोक्तृत्वरूपम् इति विवक्षणीयम्। अचेतनकर्तृकस्थले घटो भवति, रथो गच्छतीत्यादौ अचेतनानां तादृशस्वातन्त्र्यस्य निरूपयितुमशक्यत्वात्। अतः शास्त्रे पारिभाषिकं विवक्षणीयमिति तच्च धातूपात्तव्यापाराश्रयत्वमिति पारिभाषिकमेव।

**नागेशोपाध्यायस्तु "तद्धात्वर्थीयकारकचक्रप्रयोक्तृत्वं सूत्रे स्वातन्त्र्यम्।** अत्र च कारके इति सूत्रस्थं भाष्यं मानम्। तत्र हि कथं पुनर्ज्ञायते कर्त्ता प्रधानमिति? यत्सर्वेषु साधनेषु सन्निहितेषु कर्ता प्रवर्तयिता भवति। एवञ्चाचेतने प्रयोजकत्वादेरारोपे बाधाभावात् तेषां कर्तृत्वं सुलभमिति। एवं स्वेच्छाधीनप्रवृत्तिनिवृत्तिकत्वमपि स्वातन्त्र्यम्। एतच्च स्वतन्त्रः कर्ता इति सूत्रे भाष्ये स्पष्टम्, स्पष्टतरञ्च तत्रैवोद्योते। धात्वर्थव्यापाराश्रयत्वं स्वातन्त्र्यमिति तु न युक्तम्। स्वतन्त्र पदस्य तत्रापरिभाषणात्। लोके उक्तार्थयोरेव तत्प्रवृत्ते। निरूक्तभाष्यार्थप्रतिपादक एव "प्रागन्यतः शक्तिलाभात्" इत्यादिहरिग्रन्थः इत्यभिप्रैति। विस्तरस्तु लघुमञ्जूषायां सुबर्थवादे वर्तते तत्त्वं तत एव ज्ञेयम्। व्यक्तोऽयमाशयः परमगुरुभिः तत्त्वदर्शिनीकारैः भूषणसारव्याख्यायाम् तत्त्वदर्शिन्यामपि।"

एवं च यन्निष्ठव्यापारो धातुना अभिधीयते तदा धातूपात्तव्यापाराश्रयत्वं तस्यैव कारकस्य संभवति। एवं च धातूपात्तव्यापाराश्रयत्वं तस्य कारकस्य वर्तते इति तस्यापि कर्तृता सिद्धा। यथा देवदत्तः स्थाल्यां काष्ठैः तण्डुलं पचतीत्यत्र प्रतिकारकं कश्चन व्यापारो वर्तते। येन व्यापारेण प्रतिकारकं पाकक्रियाजनकं भवति। स्थाल्यां तण्डुलधारणानुकूलरूपो व्यापारो वर्तते। काष्ठेषु ज्वलनानुकूलव्यापारो वर्तते। यदि पच्धातुना स्थालीनिष्ठः धारणानुकूलो व्यापारो विवक्षितश्चेत् तदा धातूपात्तव्यापाराश्रयत्वं स्थाल्या एव संभवतीति स्थाल्या एव कर्तृत्वमतः स्थाली पचीति प्रयोगश्च सङ्गच्छते। यदि काष्ठनिष्ठः ज्वलनानुकूलो व्यापारः धातुना विवक्षितश्चेत् तदा धातूपात्तव्यापारश्रत्वं काष्ठस्यैवेति तस्यापि कर्तृता, तत्प्रयुक्तः काष्ठानि पचन्तीति प्रयोगश्च सङ्गच्छते। एवं रीत्या कारकान्तराणामपि कर्तृत्वं शास्त्रसम्मतं द्रष्टव्यम्। अनया रीत्या कारकान्तराणामपि कर्तृत्वं शास्त्रसम्मतमिति प्रतिपादितं

भूषणसारे।

**कारकान्तराणामपि कर्तृत्वसाधकं प्रमाणान्तरम्** – तत्र कैयटः कारके इति सूत्रभाष्यस्थं स्थालिस्थे यत्ने पचिना कथ्यमाने इत्यदिभाष्यं व्याचक्षाणः प्रदीपे – सर्वेषां कारकाणां साध्यत्वेन साधारणी क्रिया ततश्च सर्वेषां तस्याः कर्तृत्वम्। अवान्तरव्यापाररूपविवक्षायान्तु करणत्वादिकम्। तदुक्तं वाक्यपदीये–

**निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके।**

**व्यापारभेदापेक्षायां करणत्वादिसम्भवः॥ इति।**

अर्थस्तु स्पष्ट एव। उदाहरणेन इतोऽपि स्पष्टं भवति - यथा मातापित्रोः अपत्योत्पादने कर्तृत्वं, भेदविवक्षायां 'अयमस्याम्' 'इयमस्मात्' जनयतीत्यधिकरणत्वाद्यवस्थायां न भवति, "स्वतन्त्रः कर्ता" इत्यत्र कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रविधिः नियमार्थः, तेन स्वातन्त्र्यमेव यस्य कर्तृसंज्ञा तस्य, न तु पारतन्त्र्यसहितस्वातन्त्र्ययुतस्य। अयमाशयः वस्तुतः वाक्यपदीये व्यक्तः स एव प्रदीपेऽनूदितः। तत्र हि – "अयमस्यामियमस्मादिति भेदो विवक्षया" इति कारिका साधनसमुद्देशे पठिता। तत्र च व्याख्याने स्पष्टतरं व्यक्तं – पुत्रजनने इत्यादिना दृष्टान्तः उक्तः। यदा मातापितरौ पुत्रं जनयतः इति उच्यते तदा उभयोः कर्तृत्वम्। यदा तु पिता अस्यां पुत्रं जनयति तदा पितुः कर्तृत्वम्। यदा तु इयम् अस्मात् पुत्रं जनयति तदा मातुः कर्तृत्वम्। अनया रीत्या एक एव व्यापारो यदा तत्तदाश्रयभेदेन प्रकृतधातुवाच्यः तदा तत्तद्धात्वर्थव्यापाराश्रयस्य कर्तृत्वमित्याशयः। अत एव विवक्षातः कारकाणि भवन्तीति वादः। अत्र यद्यपि एकदैव सर्वेषां कारकाणां ते ते व्यापाराः भवन्ति परन्तु धातुवाच्यव्पाराश्रयस्यैव कर्तृत्वम्। अत एव अन्येषां ये व्यापाराः न धातुवाच्या तदा न तेषां कर्तृत्वमिति। यदा तु यस्य कारकस्य व्यापारः धातुवाच्यः तदा तस्य तस्मिन् व्यापारे स्वातन्त्र्यात् "स्वतन्त्रः कर्ता" इति सूत्रेण कर्तृत्वं, धातुना च अभिहितत्वात् प्रथमा च भवति।

**ब्रह्मसूत्रभाष्यविरोधः, तत्परिहारश्च -**



एतावता प्रबन्धेन कारकान्तराणामपि पारिभाषिकं स्वातन्त्र्यं भवितुमर्हति।

तस्मात् तान्यपि कारकाणि कर्तृत्वधर्माश्रयाः भवन्ति इति निरूपितम्। किन्तु एकस्यैव कारकस्य स्वगतधर्मेण सह कर्तृत्वस्यापि स्वीकारे ब्रह्मसूत्रभाष्यविरोधस्स्यात्। तथा हि अस्ति एकं ब्रह्मसूत्रं कर्तृकर्मव्यपदेशाच्च इति। तत्रायं विचारः प्रवृत्तः यत् मनोमयः प्राणशरीरः इत्यत्र मनोमयशब्देन किं जीवात्मा विवक्षितः उत अन्यो वेति। तत्र यदि जीवात्मा मनोमयशब्दवाच्यस्स्यात् तदा एतमितः प्रेत्याभिसंभवितास्मि इति वाक्येऽपि एतमिति सर्वनाम्ना मनोमयशब्दप्रतिपाद्यस्य परामर्शात् एतमित्यस्य जीवात्मानमित्यर्थः फलति। तत्रैव वाक्ये अभिसंभवितास्मि इत्यनेनापि जीवात्मैव परामृश्यते। एवं च एतमित्यनेनापि जीवः परामृष्टः। अभिसंभवितास्मि इत्यनेनापि जीवः परामृष्टः। तथा च एतमिति द्वितीयया प्राप्तिक्रियाकर्मत्वेन परामृष्टः, अभिसंभवितास्मि इत्याख्यातेन प्राप्तिक्रियाकर्तृत्वेन परामृष्टः, एकस्या एव व्यक्तेः कर्तृत्वकर्मत्वधर्मद्वयसमवेशो विरुद्ध इति मनोमयशब्देन जीवात्मा न विवक्षणीयः। तथा सति एतमित्यनेन जीवात्मनो अपरामर्शात् प्राप्तिकर्मत्वं नास्ति, अपि तु प्राप्तिकर्तृत्वमेवेति न दोष इत्यभिहितं भाष्यकृता। तथा च कारकान्तराणामपि कर्तृत्वे भाष्यविरोधस्स्पष्ट एव। कथं तर्हि पारिभाषिकं स्वातन्त्र्यं स्वीकृत्य सर्वेषामपि कारकाणां कर्तृत्वं प्रतिपादितं वैयाकरणैः इति **प्रश्नस्तिष्ठति।**

**अत्रायं समाधिः** - कर्तृकर्मव्यपदेशाच्च इति सूत्रेण एकस्मिन् धर्मिणि कर्तृत्वकर्मत्वधर्मद्वयसमावेशो अयुक्त इति न प्रतिपाद्यते। अपि तु कर्तृत्वकर्मत्वयोः सतोः कर्तृत्वप्रयुक्तकर्तृसंज्ञा कर्तव्या उत कर्मत्वप्रयुक्तकर्मसंज्ञा कर्तव्येति विप्रतिषेधस्स्यात्। तथा सति परया कर्तृसंज्ञया कर्मसंज्ञायाः बाधात् एतमित्यत्र कर्मसंज्ञाप्रयुक्ता द्वितीया न स्यात्। अतः एकदा एक एव व्यवहारो अभ्युपगन्तव्यः। परत्वात् कर्तृसंज्ञाया एवाभ्युपगन्तव्यत्वात् एतमिति द्वितीया असंगता। एवं च एतमिति द्वितीयानुपपत्तिभिया मनोमयशब्दस्य जीवात्मपरत्वं नास्तीत्येव भाष्यकृतो अभिप्रायः। न तु एकस्मिन् धर्मिणि धर्मद्वयसमावेशो अनिष्ट इति तद्भाष्यस्याशयः। अतः कारकान्तराणां कर्तृत्वस्वीकारे ब्रह्मसूत्रभाष्यविरोधाभावात् कारकान्तराणां कर्तृत्वं स्वीकृत्य स्थाली पचति, काष्ठानि पचन्ति इत्यादयः प्रयोगाः उपपादयितुं शक्यन्ते।

**सोदाहरणं कर्मत्वनिरूपणम् -**

**कर्मत्वञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्। इदमेव कर्मलक्षणे ईप्सिततमत्वम्।** अत्र इत्थं समन्वयः – हरिं भजति इत्यत्र प्रकृतधातुः भजधातुः तद्धात्वर्थप्रधानीभूतव्यापारः भजनानुकूलो व्यापारः तत्प्रयोज्यं यत् प्रकृतधात्वर्थफलं प्रीतिरूपफलं तदाश्रयत्वेन उद्देश्यत्वं हरेरिति। सामान्यतस्तु धात्वर्थरूपव्यारपारात् फलस्य साक्षात् उत्पत्तिः तथापि क्वचित् परम्परयापि भवति यथा गां दोग्धि पयः इत्यत्र पयसः कर्मत्वसिद्धये व्यापारप्रयोज्यत्वनिवेशः, प्रयोज्यत्वं तु साक्षात् परम्परया वा जन्यत्वम्। अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारानुकूलव्यापारः दुह्धात्वर्थः। अत्र पयोवृत्तिविभागः, तज्जनकः गोपवृत्तिव्यापारः, गोपवृत्तिव्यापारं विना पयसि व्यापारपूर्वकविभागानुत्पत्तेः गोपव्यापारजन्यः गोव्यापारः धातुवाच्यः। तज्जन्यस्तु पयोनिष्ठव्यापारपूर्वकः विभागः, तत्र पयोनिष्ठव्यापरस्य विभागनान्तरीयकत्वात् न धातुवाच्यता। एवञ्च विभागरूपफलस्य गोपनिष्ठप्रधानव्यापारजन्यत्वाभावात् कर्मसंज्ञा न स्यात् अतः साक्षात्परम्परासाधारणं प्रयोज्यत्वं निवेशनीयम्। यद्यत्र साक्षात् व्यापारजन्यत्वमिति उच्येत तदा प्रधानीभूतगोपवृत्तिव्यापारजन्यत्वस्य गोव्यापारे एव सत्त्वात् विभागे तदभावेन पयसः कर्मत्वं न स्यात्। साक्षात्परम्परासाधारणप्रयोज्यत्वनिवेशे तु प्रधानव्यापारप्रयोज्यत्वस्य विभागेपि सत्त्वात् तदाश्रयत्वेन पयसः कर्मत्वसिद्धिः।

**अत्र दलसार्थक्यम्** – प्रयागात् काशीं गच्छति इत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलमिति निवेश्यते। तेन अत्र यो विभागः दृश्यते स न प्रकृतधात्वर्थः। अयं विभागस्तु नान्तरीयकतया नाम अपरिहार्यत्वेन गमने सत्युत्पद्यते। अत्र प्रयोगे प्रकृतधातुः गम्-धातुः तद्धात्वर्थव्यापारः उत्तरदेशसंयोगानुकूलव्यापारः, तत्प्रयोज्यप्रकृतधात्वर्थफलं संयोगः तत्तु काश्या एव न तु प्रयागस्य। अत्र केवलं यत्किचित्फलमिति कथने तु विभागस्यापि फलत्वेन प्रतीयमानत्वात् तत्रातिप्रसक्तिः।



तदेवोक्तम् प्रयागस्य फलतावच्छेदकसम्बन्धेन फलाश्रयत्वेन अनुद्देश्यत्वात्। फल-

तावच्छेदकसम्बन्धस्तु स एव येन सम्बन्धेन फलाश्रयत्वप्रकारिका इच्छा भवति। स च तत्तद्धातुभेदात् भिन्नो भवति। अत्र उत्तरदेशसंयोगानुकूलव्यापारेण काशी संयोगाश्रयो भवतु इच्छाविषयत्वेन काश्या एव कर्मसंज्ञा। अत एव फलाश्रयत्वेन सम्बद्धुमिष्यमाणस्य कर्मसंज्ञा इति प्रसिद्धिः।

**अत्र प्रश्नः** – लक्षणे प्रकृतधात्वर्थग्रहणेन एव प्रयोगात् काशीं गच्छति इति प्रयोगे प्रयागस्य कर्मत्ववारणाद् उद्देश्यत्वनिवेशः किमर्थः ?

**अत्रोत्तरम्** – उद्देश्यत्वनिवेशस्यासाधारणं प्रयोजनं तु काशीं गच्छन् पथि मृतः इति काश्याः फलाश्रयत्वाभावेपि फलाश्रयत्वेनोद्देश्यत्वसत्त्वात् कर्मत्वम्। अर्थस्तु स्पष्ट एव। काश्याः संयोगरूपफलाश्रयत्वोत्पत्तेः प्राक् कर्तुः मार्गे एव मरणेन संयोगरूपफलोत्पत्तिः असंभविनी तथा सति तदाश्रत्वमपि काश्या न सम्भवति तदा अयं प्रयोगः न स्यात् इष्टश्च। अतः संयोगरूपफलाश्रयत्वोत्पत्तेः प्रागपि तस्याः फलाश्रयत्वेन उद्देश्यत्वं तु अस्ति अतः न कापि अनुपपत्तिः।

**पुनः प्रश्नः** – एवमपि काशीं गच्छति चैत्रे 'चैत्रः काशीं न गच्छति न प्रयागम्' इत्यत्र प्रयागस्य फलाश्रयत्वेन उद्देश्यत्वाभावात् प्रकृतप्रयोगः न स्यात् प्रयागस्य कर्मत्वं न स्यादित्यर्थः।

**अत्रोत्तरम्** – कर्मलक्षणे ईप्सिततमपदस्य स्वार्थविशिष्टयोग्यताविशिष्टे लक्षणा। तथा च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वम्। तच्च प्रयागस्यापि अस्ति। उद्देश्यतायाः सामर्थ्येन युक्तत्वमिति अभिप्रायः। सम्प्रति प्रयागगमनस्य असम्भवेपि अनन्तरं गन्तुं = गमनानुकूलव्यापारेणसंयोगाश्रयस्य अनन्तरमुत्पत्तियोग्यता अस्ति एव इत्यर्थः।

अनेनैव च उद्देश्यत्वयोग्याताशालित्वव्याख्यानेन किं ग्रामं गच्छति अथवा ओदनं पचति इति प्रश्ने न ग्रामं गच्छति न ओदनं पचति इत्यादि प्रयोगाः व्याख्याताः। यत्र तु ताडनादिना पराधीनतया विषभोजनादिकं तत्र विषादिः तादृशफलाश्रयत्वेनोद्देश्यत्वमेव। अत एव "आतश्च विषमीप्सितं तद् भक्षयति ताडनात्" इत्यादिभा-

ष्यं सङ्गच्छते। एतेन कशाभिहतः कारागारं गच्छति इति व्याख्यातम्। सर्वत्रापि योग्यताविशेषशालित्वे = उद्देश्यतासामर्थ्यविशेषयुक्तत्वम्।

एवम् कालत्रये काशीगमनशून्ये चैत्रे काशीं गच्छतीति वारणाय योग्यताविशेषशालित्वे 'विशेष' इति पदं निवेश्यते। तेन उद्देश्यतायोग्यताभावेपि तादृशयोग्यताविशेषराहितत्येन कर्मत्ववारणं क्रियते। किञ्च एतादृशस्थले तद्विशेषवत्त्वेपि अनुभव एव निषेधप्रयोजकः। तेन वक्ता तादृशं पुरुषं जानन् अयं काशीं न गच्छति इति प्रयोगं करोति एव तत्र न किञ्चित् बाधकम्।

**अत्र प्रश्नः** - अन्नं भक्षयन् विषं भुङ्क्ते ग्रामं गच्छन् तृणं स्पृशति इत्यादौ विषतृणयुद्देश्यत्वाभावत् कथं कर्ममत्वम्?

**अत्रोत्तरम्** – अत्र तु "तथायुक्तं चानीप्सितम्" इति लक्षणान्तरात् तदुत्पत्तिः। प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वम् अनीप्सितकर्मत्वमिति तदर्थात्। प्रयागात् काशीं गच्छति इत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफल इति। द्वेष्योदासीनकर्मसङ्ग्रहार्थं इदं लक्षणम्।

तत्र दुहादीनां द्विकर्मकाणां व्यापारद्वयार्थकत्वे 'अकथितञ्च' इति व्यर्थं पूर्वेणैवसिद्धेः। एकव्यापारबोधकत्वपक्षे तु षष्ठीबाधनार्थम्। तत्पक्षे कर्मसम्बन्धित्वे सति अपादानादिविशेषाविवक्षितम् अकथितकर्मत्वम् इति तृतीयलक्षणेन गां दोग्धि पय इत्यादौ गामित्यस्य कर्मत्वसिद्धिः। अयमर्थः – 'गौः पयः त्यजति', 'देवदत्तः गवा पयस्त्याजयति' इत्याद्यर्थस्यापि प्रतीत्या पयोनिष्ठविभागानुकूलगोनिष्ठव्यापारानुकूलव्यापारादिर्दुहादिधात्वर्थः। अत्र पक्षे फलद्वयस्य उपादानात् "कर्तुरीप्सिततमम्" इति सूत्रेणैव गोः पयसश्च कर्मत्वं सिद्धम्। किन्तु यदा गोनिष्ठव्यापारादेः प्रतीत्यभावेपि दुहादेः प्रयोगो दृश्यते तदा पयोनिष्ठविभागानुकूलव्यापारादिरेव धात्वर्थ इति पक्षः। तथा च अपादानत्वाद्यविवक्षायाम् अन्येन असिद्धकर्मत्वार्थम् "अकथितञ्च" इति सूत्रमावश्यकम्। प्रकृतसूत्राभावे अपादानत्वाद्यविविक्षायां सम्बन्धषष्ठी स्यात्, तद्बाधनार्थं सूत्रमावश्यकम्। एकव्यापारबोधकत्वपक्षे उपर्युक्तपरिष्कृतकर्मलक्षणं तृतीयम्।

**अत्रेदं बोध्यम्** – अन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारो दुहधात्वर्थः । अत्र गोः अपादानत्वाविवक्षायामनेन कर्मत्वम्, अपादानविवक्षायां तु पञ्चमी, गोः पयस्यन्वये षष्ठी ।

**तार्किकमते कर्मत्वम्, तत्खण्डनञ्च -**

**अत्र तार्किकाः** – कर्मत्वं तु न करणव्यापारवत्त्वम्, तद्धि करणजन्यव्यापारवत्त्वम् । दात्रेण धान्यं लुनाति इत्यादौ हस्तादिकरणजन्यव्यापारवति दात्रादावतिव्याप्तेः । हस्तादियत्करणं क्रियोपकारकं तज्जन्यस्तदुत्पाद्यः यो व्यापारः तद्वति दात्रे दात्रव्यापारस्य करणजन्यव्यापारत्वात् तत्रातिव्याप्तिः ।

नापि क्रियाजन्यफलशालित्वं तत् चैत्रश्चैत्रं गच्छति इत्यापत्तेः संयोगरूपफलस्योभयकर्मकर्तृनिष्ठत्वात् । यथा संयोगः तदाश्रये कर्मणि तथैव कर्तरि अपि । एतद्वारणाय परसमवेतत्वं क्रियायां विशेषणं दीयते चेत् चैत्रश्चैत्रं गच्चति इत्यापत्ति वार्यते । चैत्रस्य नात्र परसमवेतत्वम् अपितु स्वसमवेतत्वमेव । अनया रीत्या अत्र दोषे वारितेपि अग्रे दोषः भवति । तस्मात् इदमपि न इति मनसि निधाय स्वयं तृतीयामापत्तिं प्रदर्शयति -

नापि परसमवेतक्रियाजन्यफलशालित्वं तत्, गमिपत्योः पूर्वस्मिन् देशे त्यजेश्चोत्तरस्मिन् देशे कर्मत्वप्रसङ्गात् ।

अनया रीत्या पूर्वोक्तापत्तिवारणाय नैयायिकः चतुर्थं लक्षणं कथयति – धात्वर्थतावच्छेदकफलशालित्वम् हि कर्मत्वं तेन सर्वत्र परिहारः । तथा हि – तादृशफलं च गमेः संयोगः, त्यजेर्विभागः पतेरधोदेशसंयोगः । अधोदेशरूपकर्मणो धात्वर्थनिविष्टत्वात् अकर्मकत्वेन पर्णं भूमौ पतति वृक्षात् इति । संयोगमात्रफलपक्षे वृक्षात् भूमिं पतति इति ।

अनया रीत्या चतुर्थलक्षणेन परिहारे उक्तेपि 'चैत्रश्चैत्रं गच्छति' इति दोषः तदवस्थ एव । तत्र हि धात्वर्थतावच्छेदकफलं संयोगः इति चेदुच्यते लक्षणे व्यापारानधिकरणत्वे सति इति विशेषणदानेन नासौ दोषः । यतः चैत्रः यथा फलाश्रयः तथैव व्यापारश्रयोपि ।

**अत्र तार्किकमतखण्डनम् –** धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति परिष्कृतेऽपि 'काशीं गच्छन् पथि मृतः' इत्यादौ काश्याः, 'काशीं गच्छति न प्रयागम्' इत्यादौ प्रयागस्य 'ग्रामं न गच्छति' इत्यादौ ग्रामस्य च तादृशफलशालित्वाभावात् एतस्य लक्षणस्य सर्वत्र अव्याप्तेः नेदं लक्षणं समीचीनम्। तेन अस्मदुक्तमेव स्वीक्रियताम् इति वैयाकरणैः नैयायिकोक्तं सर्वं निराक्रियते।

**करणत्वनिरूपणम् –**

**स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वं करणत्वम्। इदमेव साधकतमत्वम्।** तथा चोक्तम् हरिणा–

> **क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।**
> **विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्। इति**

यद्व्यापारादनन्तरं क्रियायाः परिनिष्पत्तिर्जायते इति विवक्ष्यते तदा तत्कारकं करणमिति स्मृतमिति श्लोकस्यान्वयः।

साधकतमं करणमिति सूत्रेण करणसंज्ञा विधीयते। कारकेषु यत् साधकतमं भवति तदेव कारकं करणमित्यर्थः। साधकतममिति तमब्घटितप्रयोगेन कारकान्तराणामपेक्षया अस्य कारकस्य कश्चन उत्कर्षः बोध्यते। स च उत्कर्षः क इति चेत् सर्वाण्यपि कारकाणि स्वस्वव्यापारद्वारा क्रियां जनयन्त्येव। किन्तु यद्कारकगतव्यापाराव्यवहितोत्तरं फलं जायते, तच्च कारकं कारकान्तरापेक्षया उत्कृष्टमिति परिगण्यते। एवं च अव्यवहितप्राक्क्षणे फलजनकव्यापारवत्त्वं हि उत्कर्षः। तादृशोत्कर्षवत्कारकं करणमिति संज्ञां प्राप्नोति। एवं च "रामेण बाणेन हतो वाली" इति प्रयोगे बाणगतव्यापारो नाम शरीरस्य द्वैधीभावसंपादनरूपो व्यापारः, तत्समनन्तरमेव प्राणवियोगरूपं फलं जायते इति बाणस्य उत्कर्षात् बाणः करणसंज्ञः स्यादिति बाणेन इति तृतीया सङ्गच्छते। यथा अत्रोदाहरणे बाणगतस्य शरीरद्वैधीभावरूपव्यापारस्य अनन्तरं प्राणवियोगानुकूल-क्रियायाः परिनिष्पत्तिरिति विवक्ष्यते तदा तत् करणमिति स्मृतमिति। एवं च करणं नाम फलाव्यवहितव्यापाराश्रय इति सिद्धम्।

पूर्वोक्तोदाहरणे रामेण बाणेन हतो बाली इत्यत्र कर्मप्रत्ययस्थले रामाभिन्नकर्तृनिष्ठव्यापारप्रयोज्यः यो बाणनिष्ठो व्यापारः तज्जन्यं यत्प्राणवियोगरूपफलं तदाश्रयः बाली इति बोधः। रामः बाणेन वालिनं हन्ति इत्यत्र कर्तृप्रत्ययस्थले तु बाणव्यापारजन्यो यो बीलिनिष्ठप्राणवियोगः तदनुकूलो रामकर्तृको व्यापारः इति बोधः।

**करणतृतीयायाः आश्रयार्थकत्वव्यवस्थापनम् -**

आश्रयोवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा इति कारिकया द्वितीयातृतीयासप्तमीनामाश्रयोर्थ इति प्रतिज्ञातं कौण्डभट्टेन। इतः प्राक् कर्तृत्वनिरूपणे कर्तृतृतीयायाः आश्रयार्थकत्वव्यवस्थापनप्रसङ्गे करणतृतीयाया आश्रयार्थकत्वं व्यवस्थापयिष्यत इत्युक्तमासीत्। तदिदानीं निरूप्यते। साधकतमं करणम् (पा.सू. १-४-४२) इति सूत्रेण करणसंज्ञा विधीयते। कारकेषु यत् साधकतमं भवति तदेव कारकं करणमित्यर्थः। साधकतममिति तमब्घटितप्रयोगेन कारकान्तराणामपेक्षया अस्य कारकस्य कश्चन उत्कर्षो बोध्यते। स च उत्कर्षः क इति चेत् सर्वाण्यपि कारकाणि स्वस्वव्यापारद्वारा क्रियां जनयन्त्येव। किन्तु यत्कारकगतव्यापाराव्यवहितोत्तरं फलं जायते, तच्च कारकं कारकान्तरापेक्षया उत्कृष्टमिति परिगण्यते। एवं च अव्यवहितप्राक्क्षणे फलजनकव्यापारवत्त्वं हि उत्कर्षः। तादृशोत्कर्षवत्कारकं करणमिति संज्ञां प्राप्नोति। एवं च "रामेण बाणेन हतो वाली" इति प्रयोगे बाणगतव्यापारो नाम शरीरस्य द्वैधीभावसंपादनरूपो व्यापारः, तत्समनन्तरमेव प्राणवियोगरूपं फलं जायते इति बाणस्य उत्कर्षात् बाणः करणसंज्ञः स्यादिति बाणेन इति तृतीया सङ्गच्छते। अत्रार्थे हरिकारिका अपि प्रमाणम्। तथा हि-

**क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।**
**विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्। इति॥**

यद्व्यापारादनन्तरं क्रियायाः परिनिष्पत्तिर्जायते इति विवक्ष्यते तदा तत्कारकं करणमिति स्मृतमिति श्लोकस्यान्वयः। यथा पूर्वोक्ते उदाहरणे बाणगतस्य शरीरद्वैधीभावरूपव्यापारस्य अनन्तरं प्राणवियोगानुकूल-क्रियायाः परिनिष्पत्तिरिति विवक्ष्यते तदा तत् करणमिति स्मृतमिति। एवं च करणं नाम फलाव्यवहितव्यापाराश्रय इति

सिद्धम्। तथा च फलस्य धातुना लाभात् व्यापारः, आश्रयश्च करणतृतीयार्थ इति पर्यवस्यति। अतो न सूत्रविरोधः।

**ब्रह्मसूत्रभाष्यविरोधाशङ्का, तत्परिहारश्च -**

कर्तृतृतीयार्थप्रतिपादनसंदर्भे यथा कारकान्तराणामपि कर्तृत्वं सङ्गच्छते इति निरूपितं, तथा प्रकृते कारकान्तराणाम् अपि करणत्वविवक्षा इष्यते। यतो हि लोके अधिकरणकारकस्य पथः करणत्वविक्षा दृष्टा। यथा पथा गच्छतीति। तस्मात् इदमेव करणकारकं भवतीति निर्देष्टुं न शक्यते। उक्तं चायमेव विषयो वाक्यपदीयकारेणापि। तद्यथा-

**"वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।**
**स्थाल्या पच्यते इत्येषा विवक्षा दृश्यते यतः"। इति॥**

**अस्यायमर्थः** यत् स्थाल्या पच्यते इति अधिकरणस्यापि करणत्वविवक्षा यतो दृश्यते अतः तद् - करणत्वं वस्तुतः अनिर्देश्यम् - इदमेव करणमिति निर्देष्टुमशक्यम् इति। एवं चानेन वाक्यपदीयश्लोकेनापि ज्ञायते यत् कारकान्तराणामपि करणत्वमिष्टमेवेति। तथा सति कर्तृतृतीयास्थले इव अत्रापि ब्रह्मसूत्रभाष्यविरोधस्स्यात्। तथा हि -

अस्ति एकं सूत्रं "कर्ता शास्त्रार्थवत्त्वात्" इति। जीवः कर्ता उत बुद्धिः कर्त्री इति विचारावसरे प्रवृत्तमिदं सूत्रं कर्ता शास्त्रार्थवत्त्वादिति। जीव एव कर्ता न तु बुद्धिरिति तस्य सूत्रस्यार्थः। तदेव द्रढयितुं सूत्रान्तरमेकं प्रणीतं यत् "शक्तिविपर्ययात्" इति। तस्य सूत्रस्य चायमर्थः यत् यदि बुद्धिः कर्त्री स्यात् विज्ञानपदवाच्यायाः बुद्धेः करणत्वेन श्रुतौ व्यवहारस्य दर्शनात् सा शक्तिर्नश्येत्। कर्तृत्वशक्तिरेव भवेदिति शक्तिविपर्ययस्स्यात्। तस्मात् बुद्धेः करणत्वमेव न तु कर्तृत्वमिति। एवं चानेन सूत्रेण, तद्भाष्येण च स्पष्टं ज्ञायते कारकान्तराणां शक्त्यन्तरं न स्वीकार्यमिति। एवं सति कथं कारकान्तराणां करणत्वेनापि विवक्षा भवितुमर्हतीति कथनमसङ्गतमेव। यतो हि विवक्षातः कारकान्तराणामपि करणत्वे प्रकृते बुद्धेः कर्तृत्वेपि करणतया विवक्षायां बाधकाभावात् करणत्वशक्तेः नाशापत्त्या करणभूतायाः बुद्धेः कर्तृत्वं ना-

स्तीति प्रतिपादनमसङ्गतं स्यात्। तस्मात् विवक्षातः अन्येषामपि करणत्वं स्यादिति कथनमसंगतमिति अभिप्रायः।

**अत्रेत्थं शङ्का परिहारः** - तेन सूत्रेण, तद्भाष्येण च न कारकान्तरस्य करणत्वं विवक्षया सिद्ध्यतीति निरस्यते। अपि तु "तदेतेषां प्राणानां विज्ञानेन विज्ञानमादाय" इति श्रुतौ विज्ञानेनेति करणत्वशक्तिः क्लृप्ता वर्तते। एवं च क्लृतां शक्तिं परित्जज्य कर्तृत्वशक्तिः किमर्थं कल्पनीयेत्येव भाष्यकृतोऽभिप्रायः। न तु सर्वथा कर्तृभूतायाः बुद्धेः करणत्वविक्षा असंभविनीति। इत्थं ब्रह्मसूत्रभाष्यशङ्का तत्परिहारश्च दर्शितः भूषणसारे तृतीयाविभक्त्यर्थनिर्णये।

**सम्प्रदानत्वनिरूपणम्** –

तत्र "कर्मणा यमभिप्रैति स सम्प्रदानम्"(पा.सू. १-४-३२) इति सूत्रं रचयता पाणिनिमहर्षिणा सम्प्रदानस्य, स्वरूपं निदर्शितम्। **अस्यायमर्थः** – दानक्रियाकर्मणा कर्त्ता यं सम्बन्धुमीप्सति तत् सम्प्रदानसंज्ञं भवति। एतदेव परिष्कृत्य नागेशकौण्डभट्टादिभिः अन्यैश्च शास्त्रकारैः तत्तद्ग्रन्थे सम्प्रदानस्वरूपमभिवर्णितम्।

**तत्रादौ परमलघुमञ्जूषाकारमतम्** -

क्रियामात्रकर्मसम्बन्धाय क्रियायामुद्देश्यं यत्कारकं तत्त्वं सम्प्रदानत्वम्। यथा ब्राह्मणाय गां ददाति इत्यत्र दानक्रियाकर्मीभूतगोसम्बन्धाय ब्राह्मणो दानक्रियाद्देश्यः गोब्राह्मणयोः स्वस्वामिभावसम्बन्धः। धात्वर्थभूतकर्मसम्बन्धार्थं क्रियायामुद्देश्यभूतमर्थाद् यदुद्दिश्य कर्म क्रियते तत्कारकं सम्प्रदानं भवति। उद्देश्यकर्मणोः परस्परं स्वस्वामिभावज्ञेयज्ञातृभावादिसम्बन्धः। ज्ञेयज्ञातृभावसम्बन्धोदाहरणं तु चैत्रो मैत्राय कथां श्रावयति इति।

**अत्र वृत्तिकाराः** -

सम्प्रदानं चतुर्थीविभक्तेरर्थ इति सूत्राल्लब्धम्। तत्र न कस्यापि विप्रतिपत्तिः। किन्तु सम्प्रदानशब्दस्य अर्थनिरूपणे अस्ति भाष्यकृतां वृत्तिकाराणां च मतभेदः। तत्र वृत्तिकाराः मन्यन्ते यत् टिघुभादिवत् लघ्वीं संज्ञामकृत्वा सम्प्रदानमिति महासंज्ञाकरणसामर्थ्यात् सम्यक् प्रदीयते अस्मै इति सम्प्रदानमिति अन्वर्थसंज्ञा आद-

र्तव्या। तथा च अन्वर्थसंज्ञाबलात् दाधात्वर्थः मुख्यः व्यापारः वास्तविकः ग्राह्यः। यः स्वस्वत्त्व-निवृत्तिपर्वकपरस्वत्वापादनरूपः। एवं च तादृशव्यापारजन्यफलाश्रयकर्मणा सम्बन्धुमभिप्रेतस्यैव सम्प्रदानत्वं न त्वन्यस्येति वृत्तिकाराणामभिप्रायः। एवं च विप्राय गां ददातीति स्थले भवति सम्प्रदानत्वम्। यतो हि तत्र स्वसत्त्वनिवृत्तिपूर्वकपरस्वत्त्वापादनरूपव्यापारजन्यफलाश्रयेण कर्मणा गवा सम्बन्धुमभिप्रेतस्य विप्रस्य सम्प्रदानत्वं सिद्ध्यति। किन्तु रजकाय वस्त्रं ददातीति प्रयोगः तन्मते असाधुर्भवति। यतो हि तत्र दानरूपे दाधात्वर्थे व्यापारे सत्यपि दाधातोः मुख्योर्थः नास्ति। रजकाय स्वस्वत्त्वनिवृत्तिपूर्वकतया प्रदानं नास्ति। अतो नास्ति तत्र सम्प्रदानत्वम्। अतस्तत्र चतुर्थीविभक्तेः प्रयोगः असाधुरेव। किन्तु रजकस्य वस्त्रं ददातीत्येव प्रयोक्तव्यमिति वृत्तिकाराणामभिप्रायः। स्पष्टमनूदितमिदं वृत्तिकारमतं नागेशेन परमलघुमञ्जूषायां भूषणसारे च कौण्डभट्टेन।

**वृत्तिकारमतसमर्थनम् –**

यद्यपि मतमिदं नागेशकौण्डभट्टाभ्यां न रोचते, भाष्यविरोधात्। तथापि भर्तृहरेः सम्प्रदानत्रैविध्यनिरूपिकां अनिराकरणात् कर्त्तुस्त्यागाङ्गं कर्मणेप्सितम् इत्यादिकारिकां व्याचक्षाणो हेलाराजस्तु वृत्तिकारमते सम्मतिं प्रदर्शयामास। तथा हि – अन्वर्थत्वात् सम्प्रदानस्य त्यागाङ्गमिति लक्षणलाभः। त्यागो दीयमानस्य स्वत्वनिवृत्त्या परसत्त्वोत्पादनम्। 'कन्यां ददाती'ति जन्यजनकभावाव्यावृत्तावपि स्वस्वामिभावसम्बन्धस्य निवृत्तेः मुख्य एव ददातेरर्थः। खण्डिकोपाध्यायः तस्मै चपेटां ददातीत्यादौ वस्तुतोऽसत्यपि चपेटादिस्वाम्ये तदुपकारितया दातुः स्वामित्वाभिसन्धिरस्त्येव। यद्यपि प्रतिकूलरूपत्वात् चपेटायाः तदानीमुपयोगो नास्ति, तथापि फलद्वारेणास्त्येव परोपयोगित्वम्। चपेटासहत्वे शास्त्राभ्यासयोगत्वात् फलावाप्तेः।

**वृत्तिकारमतखण्डनम् -**

तदिदं वृत्तिकारमतं न रोचते नागेशकौण्डभट्टाभ्याम्। ताभ्यां वृत्तिकारमतं समानतयैव भाष्यकारप्रमाणेन दूषितम्। तदित्थं – **भाष्यकृतस्तु** अन्यथा मन्वते।

तैः सम्प्रदानमिति संज्ञायाः अन्वर्थत्वं नाङ्गीकृतम्। अतः दाधात्वर्थव्यापारजन्यफलाश्रयस्य कर्मणा सम्बन्धुमभिप्रेतस्यैव सम्प्रदानत्वमिति नास्ति। किन्तु यत्किञ्चिद्धातूपात्तव्यापारजन्यफलाश्रयरूपकर्मणा सम्बन्धुमभिप्रेयमाणोऽर्थः सम्प्रदानमिति सूत्रार्थाश्रयणम्। तथा च रजकाय वस्त्रं ददातीत्यत्र दाधातोर्निर्णेजनानुकूलेच्छारूपो व्यापारस्तत्र तादृशेच्छारूपव्यापारजन्यनिर्णेजनरूपफलाश्रयत्वेन कर्मत्वात् कर्मणा वस्त्रेण अभिप्रेयमाणत्वात् रजकस्य सम्प्रदानत्वं युज्यते इति रजकाय वस्त्रं ददातीति प्रयोगः साधुरेव। भाष्यकृतामत्रार्थेऽभिप्रायोऽस्तीत्यत्र वृद्धिसूत्रस्थभाष्ये "खण्डिकोपाध्यायः तस्मै चपेटां ददाति" इति भाष्यकाराणां प्रयोग एव प्रमाणम्। अत्र प्रयोगे दाधातोः मुख्योऽर्थः स्वसत्त्वनिवृत्तिपूर्वकपरस्वत्त्वापादनरूपो नास्ति। अत्र ददातेः संयोगविशेषानुकूलव्यापारोऽर्थः। तादृशव्यापारजन्यफलाश्रयकर्मणा चपेटया सम्बन्धुमभिप्रेतस्य शिष्यस्य सम्प्रदानत्वमाश्रित्य शिष्याय चपेटां ददातीति प्रयोगः भाष्यकृता कृतः। वृत्तिकारोक्तरीत्या अन्वर्थसंज्ञाबलात् मुख्यदानार्थकधातुयोग एव यदि सम्प्रदानसंज्ञा प्रवर्तेत तर्हि प्रकृते मुख्यार्थसम्बन्धत्वाभावात् शिष्याय चपेटां ददातीति भाष्यकृता कृतः प्रयोगोऽपि असङ्गतः स्यात्। तस्मादनेन भाष्यप्रामाण्येन ज्ञायते यद् भाष्यकाराणां मते संज्ञाया अन्वर्थत्वं नाश्रितमिति। अतः रजकाय वस्त्रं ददातीति स्थलेऽपि ददातेः निर्णेजनानुकूलव्यापारार्थकत्वमादाय तादृशव्यापारजन्यफलाश्रयकर्मणा वस्त्रेण सम्बन्धुमभिप्रेतस्य रजकस्य सम्प्रदानत्वं वक्तुं शक्यते। अतस्तन्मते रजकाय वस्त्रं ददातीति प्रयोगः साधुरेव। अत एव **'न शूद्राय मतिं दद्यात्'** इति प्रयोगोऽपि सङ्गच्छते।

अन्वर्थसंज्ञाया अस्वीकाराच्चैव **"तदाचक्ष्वासुरेन्द्राय स च युक्तं करोतु तत्"** इति सप्तशतीश्लोकः सङ्गच्छते। अन्यथा अत्रापि दाधात्वर्थत्वाभावात् असुरेन्द्राय इति सम्प्रदानत्वं तत्र न स्यादेव। अत एव परमलघुमञ्जूषाकारेण चैत्रो मैत्राय वार्तां कथयतीत्याद्युदाहरणं प्रदर्शितम्। तत्रापि दाधातोरभावः।

एवन्तर्हि 'रजकस्य वस्त्रं ददाती'ति प्रयोगस्य का गतिरिति चेद् शेषत्वविवक्षया सम्बन्धसामान्ये षष्ठीति तत्प्रयोगसाधुता वक्तव्या। एतत्सर्वं मनसि निधायैव

उक्तं नागेशेन लघुशब्देन्दुशेखरे दाधात्वर्थः उपलक्षणं क्रियामात्रस्येति। तेन सम्प्रदानसंज्ञाविधायकसूत्रे कर्मणा यमभिप्रैति स सम्प्रदानम् इत्यत्र सम्पूर्वकः दाधातोः पाठाद् यत्र दाधातुघटितः प्रयोगः तत्र तु सम्प्रदानसंज्ञा भवत्येव, यत्र तु तदाचक्ष्वासुरेन्द्राय, मैत्राय वार्तां कथयति, न शूद्राय मतिं दद्यादित्यादिस्थलेषु दाधातोरभावस्तत्राऽपि सम्प्रदानत्वं सिध्यति। यतः दानक्रियाऽभावेपि उद्देश्यत्वं तत्र वर्तत इति दाधात्वर्थ उपलक्षणं क्रियामात्रस्येति कथयितुः नागेशस्याभिप्रायः। अत एव पत्ये शेते, ग्रामाय गच्छतीत्यादिप्रयोगाणां सम्प्रदानचतुर्थ्या निर्वाहं प्रदर्श्य "क्रियाग्रहणं कर्त्तव्यम्" इति वार्त्तिकस्य "गत्यर्थकर्मणि" इत्यादिसूत्रस्य च प्रत्याख्यानं भाष्यकृतः सङ्गच्छते। स्पष्टमिदं व्यक्तं भूषणसारव्याख्यायां तत्त्वदर्शिन्याम्।

**चतुर्थ्यर्थनिर्णयः -**

तत्र चतुर्थ्यर्थः क इति जिज्ञासायां परमलघुमञ्जूषाकारो वदति सम्प्रदानचतुर्थ्यर्थः उद्देश्यः इति। तथा च ब्राह्मणोद्देश्यकगोकर्मकदानमिति बोधः। मैत्रोद्देश्यकवार्ताकर्मकं कथनमिति च बोधः। अयं सर्वोऽपि अर्थः सूत्रादेव लब्धः। यत् "कर्मणा यमभिप्रैति स सम्प्रदानमि"ति। तस्य चायमर्थः – कर्मसंज्ञकेन गवादिद्रव्येन सम्बन्धुं कर्ता यमभप्रैति ईप्सति, उद्दिशतीति यावत्। तथा च यत्किञ्चिद्धातूपस्थाप्यव्यापारजन्यफलाश्रयत्वरूपकर्मसम्बन्धाय क्रियायां यदुद्देश्यं तत्सम्प्रदानमित्यर्थादुद्देश्यस्य चतुर्थ्यर्थत्वं फलतीति। एवं च पाणिनिसूत्रेणापि उद्देश्य एव चतुर्थीविभक्तेरर्थ इति लाभात् सिद्धमिदं चतुर्त्यर्थ उद्देश्य इति।

तत्र उद्देश्यः चतुर्थ्यर्थ इत्यत्र मीमांसाशास्त्रप्रमाणमपि अस्ति। तथा हि – स हि भूषणसारमञ्जूषादिषु विवेचितः अत्रापि प्रस्तूयते। तथाहि उद्देश्यत्वं नाम प्राधान्यम्। तच्च चतुर्थीविभक्त्या प्रतीयते इति तस्मिन्नपि दर्शने स्वीकृतमस्ति। प्रासनवन्मैत्रावरुणाय दण्डप्रदानम् इत्यधिकरणे क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति विहितं दण्डदानं न प्रतिपत्तिः, किं तु चतुर्थीश्रुत्या अर्थकर्मेति तत्र निर्णीतम्। तेन च प्रकरणेन चतुर्थीविभक्तेः उद्देश्यत्वं तैरपि स्वीकृतमस्तीति ज्ञायते।



तथा हि सोमक्रयणानन्तरं मैत्रावरुणाय प्रोक्तं दण्डदानं प्रतिपत्तिकर्म, अर्थकर्म

वेति संदिह्य चात्वाले कृष्णविषाणां प्रास्यतीतिवद्दण्डदानं प्रतिपत्तिकर्म, दण्डेन दीक्षयतीति दीक्षायां दण्डस्य विनियुक्तत्वादिति पूर्वपक्षयित्वा मैत्रावरुणायेति संप्रदाने चतुर्थीश्रवणात्, सम्प्रदानस्य च क्रियोद्देश्यत्वात्, उद्देश्यत्वस्य च प्राधान्यसमनियतत्वात् मैत्रावरुणस्य उद्देश्यत्वलक्षणप्राधान्यावगमात् दण्डदानमर्थकर्म प्रधानकर्मैव, न तु प्रतिपत्तिकर्मेति सिद्धान्तितं मीमांसादर्शने। उपयुक्तस्य आकीर्णककरस्य द्रव्यस्य विहितप्रदेशे प्रक्षेपः प्रतिपत्तिकर्म। यत्तु कर्म स्वातन्त्र्येण मुख्यकर्मण उपकारकं तत्प्रधानकर्म अर्थकर्म चेत्युच्यते इति अर्थप्रतिपत्तिकर्मणोर्भेदः। अयं विचारः विस्तरेण तत्तद्व्याख्यानेषु उपलभ्यते।

अनेन व्याख्यानेन उद्देश्यः चतुर्थीविभक्तेरर्थ इति मीमांसाप्रमाणेनापि दृढीकृतः।

**सम्प्रदानस्य लक्षणान्तरम् -**

अकर्मकक्रियोद्देश्यत्वं सम्प्रदानत्वमिति लक्षणान्तरम्। यथा 'पत्ये शेते' इत्यत्र पत्युद्देश्यकं नायिकाकर्तृकं शयनम् इति बोधः। पत्युः सम्प्रदानत्वञ्च अकर्मकशीङ्धातुक्रियोद्देश्यत्वात्।

**अत्र प्रश्नः** – दानादीनां तदर्थत्वात् तादर्थ्ये चतुर्थ्यां सिद्धौ किमनेन कर्मणा यमभिप्रैति इति सूत्रेण सम्प्रदानसंज्ञया? इति "चतुर्थी सम्प्रदाने" इति सूत्रं तु "रुच्यर्थानां प्रीयमाणः" इत्यादिसूत्रविहितसम्प्रदानसंज्ञाविषये चतुर्थीसम्पादनायेति चेत् -

**अत्रोत्तरम्** – तथा वक्तुं नोचितम्। दानक्रियाकर्मभूतस्य गवादेः ब्राह्मणार्थत्वेन तत्र तादर्थ्ये चतुर्थी तु भवत्येव, तथापि दानक्रियायाः परलोकाद्यर्थत्वात् ब्राह्मणार्थत्वाभावेन न हि तस्य चतुर्थ्यन्तार्थस्य क्रियायामन्वयः इति न तस्य कारकत्वमित्येतदर्थं "कर्मणा यमभिप्रैति" इति सूत्रस्यावश्यकत्वम्। तादर्थ्यचतुर्थ्यर्थौ हि उपकार्योपकारकत्वसम्बन्धः, सम्प्रदानस्य तु उद्देश्यः इति भेदः। 'ब्राह्मणाय दधि' इत्यत्र ब्राह्मणोपकारकमिति बोधः।



**सम्प्रदानस्य त्रैविध्यम् -**

एवंभूतं सम्प्रदानं शास्त्रे त्रिविधमिति परिगण्यते। यद्यपि उद्देश्य एव सम्प्रदान-मित्युच्यते। त्रिविधेष्वपि सम्प्रदानेषु उद्देश्यत्वं समानो धर्मः, समानविधं च वर्तते। तथापि त्रिविधमिति विभागः तस्याः व्यक्तेः उद्देश्यत्वरूपसम्प्रदानत्वसम्पादकनि-मित्तभेदप्रयुक्तः। तदुक्तं वाक्यपदीये–

**अनिराकरणात् कर्त्तुस्त्यागाङ्गं कर्मणेप्सितम्।**

**प्रेरणानुमितिभ्यां च लभते सम्प्रदानताम्॥ इति॥** कारिकयानया नि-रूपितं यत् कर्तुरनिराकरणात् प्रथमविधं सम्प्रदानम्, कर्तुः प्रेरणया, कर्तुरनुमतिप्र-दानेन च यत् उद्देश्यत्वं प्राप्नोति तत् द्वितीयविधं, तृतीयविधं च सम्प्रदानम्। तत्र अनिराकरणहेतुकस्य सम्प्रदानस्य उदाहरणं भवति सूर्याय अर्घ्यं ददाति इति। अत्र स्वस्वत्त्वनिवृत्तीच्छाधीनपरस्वत्त्वोत्पत्तीच्छारूपः त्यागो दाधातोर्थः। तादृशव्या-पारजन्यफलाश्रयेण कर्मणा अर्घ्येन सम्बन्धुमभिप्रेतस्य सूर्यस्य भवति सम्प्रदान-त्वम्। किन्तु अत्र सूर्यः न अर्घ्यं देयमिति प्रार्थयते, न वा प्रत्याचष्टे। अतः तस्य अनिराकरणात् उद्देश्यत्वं प्राप्तमिति प्रथमविधसम्प्रदानस्य उदाहरणं भवति। क-र्तुः प्रेरणया उद्देश्यत्वं यत्र भवति तद् द्वितीयविधस्य सम्प्रदानस्य उदाहरणं भवति। यथा विप्राय गां ददाति। विप्रेण मह्यं देहीति प्रवर्तितो ददातीति प्रेरणया विप्रस्य उद्देश्यत्वं प्राप्तमिति द्वितीयविधस्य उदाहरणं भवति। अनुमतिहेतुकं सम्प्रदानं तृ-तीयविधम्। तत्रोदाहरणं भवति उपाध्यायाय गां ददाति इति। अत्र उपाध्यायो न गोप्रदानं प्रार्थयते, न निराकरोति वा, किन्तु दीयमानं गोप्रदानमनुमन्यते। अनुम-तिश्च इमां गां तुभ्यं दातुमिच्छामीति परोक्तार्थस्य यत्स्वीकरणं तदनुकूलो व्यापारः दीयतां प्रतिग्रहीष्यामीत्येवंशब्दप्रयोगरूपः।

**अपादानत्वनिरूपणम् - तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधात्ववाच्यवि-भागाश्रयत्वम् अपादानत्वम्। तदेवावधित्वञ्च।** अत्र इत्थं बोधप्रकारः – तत्तत्क-र्तृसमवेता या तत्क्रिया, तज्जन्यः प्रकृतधात्ववाच्यः यो विभागः तदाश्रयत्वम् अ-पादानत्वमिति। देवदत्तः ग्रामादायाति इत्यत्र समन्वयः – अत्रोदाहरणे कर्ता देव-दत्तः, तस्मिन् समवेता = समवायेन स्थिता या क्रिया उत्तरदेशसंयोगानुकूला पा-

दप्रक्षेपादिरूपा आगमनक्रिया, तज्जन्यः प्रकृतधात्ववाच्यः यो विभागः तदाश्रयत्वं ग्रामस्य अस्तीति लक्षणसमन्वयः। अयञ्च विभागः न केवलः वास्तविकः अपितु बुद्धिपरिकल्पितोपि। तेन माथुराः पाटलिपुत्रकेभ्यः आढ्यतराः इत्यादौ बुद्धिपरिकल्पितापादानत्वमाश्रित्य भाष्ये पञ्चमी साधिता। अत एव चैत्रो मैत्रात् सुन्दरः इत्यादिलोके प्रयोगश्च सङ्गच्छते।

**दलसार्थक्यम्** – वृक्षं त्यजति खगः इत्यत्र वृक्षस्य अपादानत्ववारणाय प्रकृतधात्ववाच्य इति पदम्। प्रकृतधातुवाच्यत्वात् हि विभागस्य प्रकृते वृक्षस्य कर्मत्वं सिध्यति। अत्र विभागः त्यज्धातुवाच्यः न तु अवाच्यः, तेन तदाश्रयस्य कर्मसंज्ञैव।

परस्परस्मात् मेषौ अपसरतः इत्यत्र परस्परस्मात् इत्यस्य अपादानत्वसाधनाय तत्तत्कर्तृ इति विशेषणम्। तत्तत्पशुविशेषनिष्ठव्यापारजन्यविभाघाश्रयः तत्तत्पशुविशेषः। किं च मेषपदवाच्ययोः पशुविशेषयोः क्रियाश्रयत्वविवक्षा, परस्परपदवाच्ययोः तयोस्तु विभागाश्रत्वविवक्षा इत्यौपाधिकस्तयोर्भेदः। शब्दरूपोपाधिकृतभेदोपि अर्थे गृह्यते। यथा आत्मनात्मानं वेत्ति इत्यत्र शरीरावच्छिन्नं कर्तृ, अन्तःकरमावच्छिन्नं करणम्, निरवच्छिन्नं निरीहं कर्म। एकस्यैव शब्दभेदाद्भेदः शब्दाल्लिङ्गितस्यैव सर्वत्र भानात्। तदुक्तम्–

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति।**

**अत्र प्रश्नः** – यद्येवं औपाधिकभेदमादायैव अपादानत्वे सिद्धे तत्तत्कर्तृसमवेत इत्यस्य किं प्रयोजनम्?

**अत्र समाधानम्** – पर्वतात् पततः अश्वात् पतति अश्ववाहः इत्यत्र अश्वस्य अपादानत्वाय तदपेक्षितम्। यतः अत्र पतनक्रियाद्वयम् कर्तृद्वयसमवेतम्। अतः तत्तत्कर्तृनिष्ठक्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वस्य अश्वस्य अपादानत्वसिद्धिः।



**अत्र पुनः शङ्का** – एवमपि वृक्षात्पर्णं पतति इत्यादौ तादृशफलाश्रयत्वात् पर्णस्य

अपादानत्वं कुतो न स्यात् विभागस्यापि द्विष्ठत्वाद् इति चेत्

**अत्र समाधानम्** – पर्णस्य तु परया कर्तृसंज्ञया बाधात् कर्तृत्वमेव। अत एव अपादानमुत्तराणि कारकाणि बाधन्ते इति भाष्यमपि सङ्गच्छते।

**भूषणकारमतानुवादः तत्खण्डनञ्च –**

**भूषणकारस्तु** – गत्यनाविष्टे सति तज्जन्यविभागाश्रयत्वम् अपादानत्वमिति। भूषणकारस्यायमाशयः यत् परस्परस्मात् मेषावपसरतः इत्यत्र एकः मेषः निश्चलः क्रियानाविष्टः विश्लेषक्रियायाः अनाश्रयः इत्यर्थः, तस्मात् मेषादपसरन् = विभागजनकक्रियाश्रयो यो मेषः तत्क्रियामादाय निश्चलमेषस्य ध्रुवत्वम्। एवञ्च तत्तन्मेषवृत्तिक्रियाया व्यक्तेः तद्व्यक्तिभिन्नत्वेन भिन्नयोः उभयोः तत्क्रियाऽनाश्रयत्वात् अपादानत्वम्।

परन्तु नागेशस्तु तत्र विप्रतिष्ठते। तदनुसारेण उभयोरपि मेषयोः अपसरणक्रियाश्रयत्वात्, कुड्यात् पततः अश्वात् पतति इति वाक्ये च अश्वस्य च पतनक्रियाश्रयत्वात् अपादानत्वं न स्यात्।

न चात्र सृधातुना गतिद्वयस्य उपादानात् एकनिष्ठां गतिं प्रति इतरस्य अपादानत्वम् अविरुद्धमिति चेन्न। क्रियाया एकत्वात्। अत एव ‘“न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वात्” इति भाष्यं सङ्गच्छते।

एतावता निरूपितः पञ्चमयर्थः अवधिः। वृक्षावधिकं पर्णकर्तृकं पतनमिति बोधः। पर्वतावधिकपतनाश्रयाभिन्नाऽश्वावधिकमश्ववाहकर्तृकं पतनमिति बोधः। परस्परमेषावधिकं द्वित्वावच्छिन्नं मेषकर्तृकमपसरणमिति बोधः।

**अपादानस्य त्रैविध्यम्-** ईदृशमपादानं शास्त्रे त्रिविधमिति स्वीकृतमस्ति। निर्दिष्टविषयं, किञ्चिदुपात्तविषयं, अपेक्षितक्रियं चेति। निर्दिष्टविषयमित्यस्य निर्दिष्टः – शक्त्या बोधितः, विषयो – विभागनिरूपकार्थो यस्येत्यर्थः। एवं च यत्र साक्षात् धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयमिति पर्यवस्यति। यथा अश्वात् पतति। तत्र विभागनिरूपकार्थस्य पतनक्रियायाः साक्षात् धातुना प्रतिपादितत्वात् तत्रत्यमपादानं निर्दिष्टविषयमिति उच्यते। यस्य अपादानस्य विषयः निर्दिष्टो वर्तते तत् नि-

र्दिष्टविषयम्। यथा अश्वात् पतति। उपात्तविषयमित्यस्य उपात्तः-लक्षाणादिवृत्त्या बोधितः, विषयः – विभागनिरूपकार्थः यस्य इति अर्थः। बलाहकाद् विद्योतते विद्युत् इति उदाहरणम्। विद्योतते इत्यस्य प्रकाशते इत्यर्थात् विभागनिरूपकक्रिया न साक्षात् धातुना निर्दिष्टः। किन्तु तस्यैव धातोः निस्सरणपूर्वकविद्योतने वृत्तिः स्वीकर्तव्या। तथा च विभागनिरूपकार्थस्य निस्सरणस्य धातुना निर्देशाभावेपि तस्य लक्षणया उपात्तत्वात् तत्रत्यस्य अपादानस्य उपात्तविषयत्वव्यवहारः। अपेक्षितक्रियमित्यस्य तु स्पष्ट एवार्थः। अपेक्षिता अध्याहृता क्रिया यस्य अपादानस्य तदपेक्षितक्रियं चेति। यथा कुतो भवान् इति प्रश्ने पाटलिपत्रात् इति समाधानम्। तत्र विभागनिरूपकार्थस्य आगमनक्रियायाः अध्याहारः कर्तव्यः। एवं रीत्या अपादानस्य त्रैविध्यं बोद्धव्यम्।

**अधिकरणस्वरूपम्** – कर्तृकर्मद्वारकफलव्यापाराधारत्वमधिकरणत्वम्। अत एव कौमुद्यामपि "आधारोऽधिकरणम्" इत्यस्य सूत्रस्य कर्तृकर्मद्वारा क्रियायाः आधारस्य अधिकरमसंज्ञा भवति इत्यर्थः वर्ण्यते। यथा स्थाल्यामोदनं गृहे पचति इत्यादौ कर्मद्वारकविक्लित्तिरूपफलाधारः स्थाली, कर्तृद्वारकव्यापाराधारो गृहमिति।

**अत्रायं विशेष उच्यते** - कर्तृकर्मादिसंज्ञाभिः अधिकरणसंज्ञायाः बाधे सति क्रियाश्रयस्य कर्तुः, फलाश्रयस्य कर्मणश्च यदि अधिकरणसंज्ञा न स्यात् तर्हि अधिकरणसंज्ञायाः कुत्र वा प्रवर्तेत। इति **प्रश्ने** -

एवं **समाधानम्** - आधारोधिकरणमिति सूत्रे कारके इति पदमधिक्रियते। तच्च पदं क्रियाजनकपरम्। करोति क्रियां जनयतीति व्युत्पत्त्या कारकपदं क्रियाजनकपरम्। एवं च क्रियाया जनकमाधारोधिकरणसंज्ञं स्यादिति सूत्रार्थः पर्यवस्यति। तत्र कस्याधारः अधिकरणसंज्ञस्स्यादिति आशङ्कायाम्, उपस्थितत्वात् क्रियाया आधार एव अधिकरणमित्यर्थः फलति। तथा च क्रियाया एव आधारः अधिकरणमिति संज्ञां लभते। तेन साक्षात् क्रियाश्रयत्वाभावेपि कर्तृकर्मद्वारा परम्परया क्रियाश्रयत्वात् अधिकरणसंज्ञां कृत्वा सप्तमी उपपादनीया।



ननु सूत्रेण तावत् साक्षात् क्रियाश्रयस्यैव अधिकरणसंज्ञा विधीयते। परम्परया

क्रियाश्रयस्य अधिकरणसंज्ञायां किं प्रमाणमिति चेत् उच्यते यत् "आधारोऽधिकरणमि"ति सूत्रमेव तत्र प्रमाणम्। तथा हि तेन सूत्रेण क्रियाश्रयस्य अधिकरणसंज्ञा विधीयते। क्रियाश्रयस्य च परत्वात् कर्तृसंज्ञा भवति, फलाश्रयस्य च कर्मसंज्ञा भवति, तथा सति अधिकरणसंज्ञा तु कुत्रापि न प्रवर्तते इति निरवकाशा भूत्वा परम्परया क्रियाश्रये प्रवर्तते। अर्थात् कर्तृकर्मद्वारा क्रियाश्रये अधिकरणसंज्ञा प्रवर्तते। एवं च कर्तृद्वारा क्रियाश्रयस्य गृहस्य अधिकरणसंज्ञा, कर्मद्वारा क्रियाश्रयस्य स्थाल्याः अधिकरणसंज्ञा सिद्ध्यतीति स्थाल्यां पचतीति गेहे इत्यादि प्रयोगेषु अधिकरणत्वोपपत्तिः। अत्रार्थे वाक्यपदीयेपि उक्तम्-

**कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्।**
**उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥ इति।**

**अधिकरणस्य त्रैविध्यम्** - एतच्चाधिकरणमौपश्लेषिकं, वैषयिकमभिव्यापकमिति भेदेन त्रिधा। औपश्लेषिकं नाम उपश्लेषः संयोगादिसम्बन्धः तत्कृतमधिकरणमौपश्लेषिकमित्यर्थः। विषयतासम्बन्धकृतमधिकरणं वैषयिकमधिकरणमित्यर्थः। सकलावयवव्याप्तिकृतमधिकरणमभिव्यापकाधिकरणमित्यर्थः। यथा कटे शेते इत्यत्र कर्तृगतां शयनक्रियां प्रति कटस्य संयोगसम्बन्धं पुरस्कृत्य देवदत्तद्वारा तदाधारत्वात् अधिकरणत्वम्। इदं कर्तृद्वारकौपश्लेषिकमधिकरणमित्युच्यते। स्थाल्यां पचति इत्यत्र तु कर्मगतां पाकक्रियां प्रति स्थाल्याः संयोगसम्बन्धं पुरस्कृत्य तण्डुलद्वारा अधिकरणत्वम्। इदं च कर्मद्वारकौपश्लेषिकमधिकरणमित्युच्यते। वैषयिकस्य अधिकरणस्य उदाहरणं भवति मोक्षे इच्छा अस्तीति। तत्र अधिकरणस्य मोक्षस्य आधेयस्य इच्छायाश्च विषयतासम्बन्धः। इच्छायां विषयो मोक्षः तस्मात् इच्छा विषयतासम्बन्धेन मोक्षे वर्तते इति प्रक्रियानुरोधेन विषयतासम्बन्धकृतमधिकरणं हि मोक्षः। कर्तृभूतेच्छागतां सत्ताक्रियां प्रति मोक्षस्य विषयतासम्बन्धपुरस्कारेण इच्छाधारत्वात् अधिकरणत्वमिति सारः। तस्मात् तद्वाचकात् सप्तमी उपपद्यते च। अभिव्यापकाधिकरणस्य उदाहरणं भवति तिलेषु तैलमिति। तत्र हि तैलं कृत्स्नावयवान् व्याप्य तिलेषु तिष्ठति।

तैलगतसत्ताक्रियां प्रति तिलस्य व्याप्तिसम्बन्धं पुरस्कृत्य अधिकरणत्वात् भवति अभिव्यापकाधिकरणस्य उदाहरणमिदम्।

**भावसप्तम्याः विचारः** - ज्ञापकक्रियाश्रयवाचकादुत्पन्नायाः सत्सप्तस्यास्तु क्रियान्तरज्ञापकत्वमर्थः। तत्रानिर्णीतकालिकायाः क्रियाया निर्णीतकालिका ज्ञापिका। 'गोषु दुह्यमानासु गत' इत्यादौ गोनिष्ठदोहनक्रियाज्ञापितगमनाश्रयश्चैत्र इति बोधः।

**षष्ठीविचारः** - कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः षष्ठ्या वाच्यः। तत्र 'राज्ञः पुरुष' इत्यादौ षष्ठीवाच्यसम्बन्धस्याश्रयाश्रयिभावसम्बन्धेन पुरुषेऽन्वयः। राजनिरूपितसम्बन्धवान् पुरुष इति बोधात्।

**अत्र शङ्का** - ननु सम्बन्धस्योभयनिष्ठत्वात् पुरुषशब्दादपि षष्ठ्युत्पत्तिरस्तु इति

**चेदत्र समाधानम्** - राजसम्बन्धिपुरुष इति विवक्षायां राजशब्दादेव षष्ठी प्रकृत्यर्थप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति व्युत्पत्त्यनुरोधात्। अन्यथा तद्विवक्षायां राजा पुरुषस्येति पुरुषशब्दात् षष्ठ्या पुरुषार्थं प्रति षष्ठ्यर्थस्य विशेषणत्वापत्त्या व्युत्पत्तिभङ्गापत्तेः। अत एवाहुः–

**भेद्यभेदकयोश्चैकः सम्बन्धोऽन्योन्यमिष्यते।**
**द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात्॥ इति**

भेदकः सम्बन्धनिरूपकः। भेद्यो निरूपितसम्बन्धाश्रयः। इति षट्कारकाणि निरूपितानि।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ
विभक्त्यर्थसिद्धान्तनिरूपणम् ॥

# अथ नामार्थसिद्धान्तनिरूपणम्

अथेदानीं नामार्थो विचार्यते। पूर्वत्र प्रकरणे एकैकस्याः कारकविभक्तेः कोऽर्थः इति विचार्य सुब्विभक्तीनामर्थमुक्त्वा ततो नामार्थो जिज्ञासितः। यतः सुब्विभक्तेः प्रकृतिभूतं भवति नाम अथवा प्रातिपदिकम्। विभक्तयो हि प्रातिपदिकाद् विधीयन्ते। तत्र पाणिनिमहर्षिणा "ङ्याप्प्रातिपदिकात्" इति प्रातिपदिकाधिकारमारभ्य विभक्तय उक्ताः। इत्थं च तत्तद्विभक्तीनां प्रकृतभूतानि यानि नामानि तेषां कोऽर्थः ? इति जिज्ञासा जायते एव। अत एव विभक्त्यर्थनिरूपणानन्तरं नामार्थो विचार्यत इति सुबर्थनामार्थयोः पौर्वापर्यसङ्गतिः।

वस्तुतो नामानि = प्रातिपदिकानि अनन्तसंख्याकानि भवन्ति, प्रत्येकं नाम्नश्च स सोऽर्थः भवत्येव। यथा राम इत्युक्ते दशरथापत्यं वा लोके विद्यमानः कश्चन मांसपिण्डः यस्य राम इति संज्ञा भवति, तमर्थं मनसीकृत्य अस्माभिः स शब्दः प्रयुज्यते। एवं सति यदा प्रत्येकं नाम्नः अर्थः लोके सिद्ध एव वर्तते तर्हि का वाऽऽवश्यकता पृथक्तया प्रकरणारम्भस्य यत्र नामार्थः विचार्यते इति चेदुच्यते प्रत्येकमपि नाम्नः उच्चारणानन्तरं केषाञ्चन अर्थानां भानं स्वतः भवत्येव यथा रामः इति उच्चारिते स्वार्थः तत्र भासते, एवमेव लिङ्गादिप्रतीतिरपि। यथाऽत्र रामः इत्युक्ते रामत्वं, तदाश्रयः द्रव्यं, ततः लिङ्गं पुंस्त्वं, ततः एकत्वसंख्या, ततः प्रथमाया सत्त्वात् कर्तृत्वादिकारकं क्रमेणोपस्थितं भवति। इयञ्च प्रतीतिः सर्वेषु नामसु अनुगततया औत्सर्गिकतया भवत्येव। अतः प्रकरणेऽस्मिन् अस्माभिः एतेषामेव अर्थनिर्णयाय यत्नो विधीयते। एतत्पञ्चकं मिलित्वैव "पञ्चकं प्रातिपदकार्थः" इति सिद्धान्तश्च प्रसिद्धिमायातः। तत्र पञ्चसु अर्थेषु स्वार्थरूपप्रवृत्तिनिमित्तमेकमेव नामार्थ इति प्रथमः पक्षः। प्रवृत्तिनिमित्तं नार्थः, अपि तु द्रव्यं नामार्थो भवतीति द्वितीयः पक्षः। न केवलं

प्रवृत्तिनिमित्तद्रव्ये, अपि तु स्वार्थद्रव्यलिङ्गानि त्रयमपि नामार्थ इति तृतीयः पक्षः। एवमेव एतत्त्रितयसहितवचनमपि नामार्थः इति चतुर्थः पक्षः, एतच्चतुष्टययुतकारकं पञ्चकं प्रातिपदिकार्थः इति पञ्चमः पक्षः। एवमेव लोकानुभसिद्धमेतद् यच्छब्दोऽपि शाब्दबोधे भासते, तस्मात् न केवलं पञ्चकं प्रातिपदिकार्थः, अपि तु शब्देन सहितं षट्कं प्रातिपदिकार्थ इति अङ्गीकर्तव्यमिति। अयमपि पक्षोऽत्र विचार्यते।

**जातिः नामार्थः इति पक्षोपस्थापनम् -**

तत्र वाचकत्वशक्तिः जातौ वर्तते उत व्यक्तौ इति प्राचीनः विवादः। तत्र जातिर्हि पदार्थस्यासाधारणो धर्मः, व्यक्तिस्तु द्रव्यविशेष एव। तत्र मीमांसकाः जातौ शक्तिमङ्गीकुर्वन्ति, नैयायिकास्तु जातिविशिष्टव्यक्तौ। अतः पञ्चकं प्रातिपदिकार्थ इत्यत्र स्वार्थशब्देन किं जातिः ग्राह्या उत व्यक्तिः इति प्रश्ने मीमांसकाः – शब्दानां जातौ शक्तिः लाघवाद् व्यक्तीनामानन्त्येन गौरवाद्।

**अत्रेदं ज्ञातव्यम्** – अत्र जातिशब्देन न नित्यमेकमनेकानुगतं सामान्यमिति पारिभाषिकजातिः गृह्यते। अपि तु प्रवृत्तिनिमित्तं विवक्षितम्। तेन आकाशत्वादीनां जातित्वाभावेऽपि न क्षतिः। स्वार्थशब्देनापि तदेव विवक्षितमस्ति। जातिः नामार्थ इति व्यवहारस्तु केवलं जातिप्रवृत्तिनिमित्तकशब्दानामभिप्रायेणैव। सर्वत्र शब्दस्य जातिरेव अर्थ इति तु न। अयमेव पक्षः जातिशक्तिवादः इति नाम्नापि प्रसिद्धः।

**अत्रायमाशयः -** शब्दानां जातौ शक्तिर्लाघवात्। जातेरेकत्वेन सर्वत्र व्यक्तिषु अनुगततया उपलम्भात् शक्तिग्रहोऽपि एकविषयत्वेन भवतीत्यतः जातौ शक्त्यङ्गीकारे लाघवात्।

**अत्र प्रश्नः -** शक्तिग्राहकशिरोमणिना व्यवहारेण व्यक्तावेव शब्दानां शक्तिग्रहात् कथं जातौ शक्तिसिद्ध्येदिति चेत्

**अत्रोत्तरम् -** व्यक्तीनामानन्त्यात् तत्र शक्तिकल्पने गौरवम्। तद्धि भूतभविष्यद्वर्तमानानां गोव्यक्तीनामानन्त्याद् एकदा उपस्थितेरसंभवात् तावतीषु शक्तिग्रहासंभवात् तदाश्रयभेदेन नानाशक्तिकल्पने गौरवम् स्फुटम्।



**जातिपक्षसाधकयुक्तयः -**

जातावेव शक्तिः, न तु व्यक्तौ इति स्वीकारे अस्ति किंचित् कारणम्। तथा हि - **"नागृहीतविशेषणा बुद्धिः विशेष्ये (विशिष्टेषु) उपजायते"** इति कश्चन न्यायः। अगृहीतं विशेषणं यया बुद्ध्या सा अगृहीतविशेषणा बुद्धिः। या बुद्धिः विशेषणं न विषयीकरोति, सा बुद्धिः विशेष्ये (विशिष्टेषु) नोपजायते इति न्यायस्य अर्थः। सा बुद्धिः विशेषणविशिष्टं न विषयीकरोति। यतो हि विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वात्। लोकसिद्धोऽयं विषयः। नहि दण्डमविषयीकृत्य दण्डविशिष्टं दण्डिनं या कापि बुद्धिः विषयीकरोति। यतः दण्डी इत्युक्ते यथा तत्र ज्ञाने बुद्धिः दण्डविशिष्टं विषयीकरोति, तथैव दण्डमपि। दण्डमविषयीकृत्य कथमपि तद्विशिष्टस्य भानं न सम्भवति। एवं च शब्दादपि विशिष्टस्य यदि प्रतीतिः अनुभवसिद्धा तर्हि प्रथमतः विशेषणस्य प्रतीतिः शब्दात् सम्पादनीया। एवं च विशेषणे शक्तिकल्पनं विना विशिष्टस्य प्रतीतिरपि न सम्भवति। यदि विशेषणप्रतीत्युपपत्तये विशेषणे जातौ (प्रवृत्तिनिमित्ते) शक्तिः कल्प्यते तदा विशेष्ये(व्यक्तौ) शक्तिकल्पनं नैव संभवति। **"विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे"** इति न्यायेन। अभिधा नाम शब्दस्य शक्तिः विशेष्यं = व्यक्तिं, न गच्छेत् = न बोधयति न विषयीकरोतीत्यर्थः। यतो हि सा अभिधा क्षीणशक्तिर्विशेषणे। विशेषणांशं बोधयित्वा तस्याः शक्तिः क्षीणा जाता इत्यर्थः।

एवं च विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वात् प्रथमतः विशेषणे प्रवृत्तिनिमित्ते अवश्यं शब्देन बोधनीये पुनः व्यक्तौ शक्तिः कल्पयितुं न शक्यते इति केवलं जातावेव शक्तिस्सिध्यति इति मीमांसकपक्षः।

**अत्र प्रश्नः** – यदि भवन्मते केवलं जातावेव शक्तिस्तर्हि व्यक्तिप्रतीतिः कथं भवति?, यतो हि गामानय इत्युक्ते आनयनादिक्रियासु सकलगोत्वजातेः आनयनासम्भवात् यदा गोव्यक्तिरेवानीयते तदा व्यक्तेरन्वयः कथं वक्तव्यः भवत्पक्षे?

**अत्रोत्तरम्** – सत्यम्। गामानय इत्युक्ते आनयनादिक्रियासु सकलगोत्वजातेः आनयनासम्भवात् गोव्यक्तिरेवानीयते तत्र व्यक्तेरन्वयस्तु लक्षणया प्रतीतायाः व्यक्तेरेव सर्वत्र इति न कश्चिद्दोषः। यथोक्तं भवतैव आनयनादिक्रियासु सकलगोत्व-

जातेः आनयनासम्भवात् जातेः लक्षणया व्यक्तेरुपस्थितिः तेन गवादिव्यक्तेः आनयनादिक्रियासु अन्वयः सुलभः।

लक्षणा नाम स्वशक्यसम्बन्धः इति। स्वं जातिः, तत्शक्यत्वं जातौ, तत्सम्बन्धो नाम सर्वासु व्यक्तिषु स्वाश्रयत्वमेव। स्वं जातिः, तदाश्रयत्वं निखिलासु व्यक्तिषु वर्तते इति लक्षणया आनयनादिक्रियासु व्यक्तेः अन्वयः सूपपादः।

**अत्र पूर्वपक्षी** - एवं तर्हि यदा लक्षणया जातौ शक्तिरङ्गीक्रियते तर्हि साक्षादेव एकस्यामेव व्यक्तौ शक्तिः कल्प्यतामिति तेन लक्षणाकृद्गौरवं न भवति खलु। इति चेद्

**अत्र सिद्धान्ती** – यदि भवदुक्तरीत्या एकस्यां व्यक्तौ शक्तिः कल्प्यते इति मन्यताम्, तदा एकस्यां व्यक्तौ शक्तिकल्पने शक्त्यविषयस्य व्यक्त्यन्तरस्य बोधो न स्यादिति दोषः भवत्पक्षे। अतः जातौ शक्तिकल्पनमुचितम्।

**पुनः पूर्वपक्षी प्रतिबन्द्या समाधत्ते** – भोः यथा भवता जातिशक्तिवादिना व्यक्तावन्वयसम्पादनाय लक्षणा स्वीक्रियते तद्वदस्माभिरपि व्यक्त्यन्तरस्य बोधविषयत्वसम्पादनाय व्यक्त्यन्तरे लक्षणा कल्प्यते। तेन न दोषः। लक्षणाकल्पनं भवतः मम च समानम्। परन्तु मम मते व्यक्तेः साक्षादन्वयो भवति इति सौकर्यम्।

**पूर्वपक्षिणं प्रति आक्षेपः** - व्यक्तिशक्तिवादिनो भवन्मते तु लक्षणायां स्वं शब्दः, स्वशक्यः व्यक्तिः, तत्सम्बन्धः व्यक्त्यन्तरे कथं स्यादिति?

**अत्र पूर्वपक्षी** – अस्मन्मते व्यक्त्यन्तरबोधः स्वसमवेताश्रयत्वसम्बन्धेन। तथा हि – स्वं शब्दः, स्वशक्यः व्यक्तिः, तत्सम्बन्धः व्यक्त्यन्तरे स्वसमवेताश्रयत्वसम्बन्धेन। स्वं व्यक्तिः, तत्समवेता = तस्मिन् समवायेन वर्तमाना जातिः, तदाश्रयत्वं व्यक्त्यन्तरे वर्तते इति रीत्या स्वशक्यसम्बन्धः स्वसमवेताश्रयत्वसम्बन्धः भवति।

**अत्र सिद्धान्ती** -अन्ततोगत्वा व्यक्तिशक्तिवादिना व्यक्त्यन्तरस्य बोधविषयत्वसम्पादनाय व्यक्त्यन्तरे लक्षणा कल्पनीयैव भवति भवताऽपि। परन्तु भवन्मते मम मते चास्ति वैलक्षण्यं किञ्चित्। अस्माकं मते जातिरेव शब्दस्य शक्योऽर्थः इति स्वीकारे व्यक्तिप्रतीतिः लक्षणयैव उपपादनीया भवति यद्यपि। तथापि लक्षणाघट-

कसम्बन्धे तत्रास्ति लाघवम्। तथा हि - अस्मन्मते स्वं जातिः, तत्शक्यत्वं जातौ, तत्सम्बन्धो नाम सर्वासु व्यक्तिषु स्वाश्रयत्वमेव। स्वं जातिः, तदाश्रयत्वं निखिलासु व्यक्तिषु वर्तते इति लक्षणाघटकसम्बन्धे लाघवं वर्तते।

व्यक्तिशक्तिवादिनो भवन्मते तु स्वं शब्दः, स्वशक्यः व्यक्तिः, तत्सम्बन्धः व्यक्त्यन्तरे कथमिति चेत् स्वसमवेताश्रयत्वं सम्बन्धः इति निरूपणीयम्। स्वं व्यक्तिः, तत्समवेता = तस्मिन् समवायेन वर्तमाना जातिः, तदाश्रयत्वं व्यक्त्यन्तरे वर्तते इति रीत्या स्वशक्यसम्बन्धः कल्पनीयः।

तत्र भवतः लक्षणायां स्वसमवेताश्रयत्वसम्बन्धत्वं वर्तते। अस्माकं तु स्वाश्रयत्वमेवेति अस्ति लक्षणाघटकसम्बन्धे लाघवम्। इदमेवात्र वैलक्षण्यम्।

अनया रीत्या व्यक्तिपक्षे लक्षणाघटकसम्बन्धकल्पने गौरवमस्ति। जातिपक्षे लक्षणाघटकसम्बन्धकल्पने लाघवमस्तीति स एव पक्षो युक्त इति तेषां मीमांसकानामभिप्रायः।

**व्यक्तिः नामार्थः इति पक्षोपस्थापनम् -**

उपर्युक्तरीत्या जातिः नामार्थः इति साधयितुं युक्तिषु सतीष्वपि व्यक्तिरेव नामार्थ इति पक्षमपि आश्रयन्ते केचन। तदेव आश्रित्य शास्त्रज्ञा व्यक्तिः नामार्थः इति समर्थयन्ति। तत्र जातिशक्तिपक्षाश्रयणे सन्ति काश्चन अनुपपत्तयः, तस्मादेव परमलघुमञ्जूषाकारेण तन्न इत्यारभ्य जातिशक्तिपक्षः निराकृतः नामार्थनिर्णयाख्ये प्रकरणे। जातिशक्तिपक्षस्य साधिकासु युक्तिषु सतीष्वपि कथं व्यक्तिशक्तिवादं स्वीकरोति तद्ग्रन्थकृदिति चेत् -

तत्र मूले **"गोत्वमस्तीत्यर्थे अन्वयानुपपत्त्यभावेन गौरस्तीति प्रयोगे व्यक्तिभानानापत्तेः।" अयं भावः** – तत्र गौरस्तीति प्रयोगे जातिशक्तिवादिनां मते गोपदादुपस्थितस्य गोत्वस्यापि सत्तायामन्वयसम्भवेन अन्वयानुपपत्तिरूपलक्षणाबीजस्य अभावात् तत्र लक्षणा न सम्भवति। तेन व्यक्तिबोधस्यानुपपत्तिः। अत्र केचित् अन्वयानुपपत्तिः न लक्षणाबीजं, तात्पर्यानुपपत्तिरेवलक्षणाबीजम्। अन्यथा 'गङ्गायां घोष' इत्यत्र घोषपदस्य मीने लक्षणापत्तिः। तावताऽपि अन्वयानुपपत्तिप-

रिहारः सम्भवति इत्यतः दूषणोद्भावकमतमिदमयुक्तमिति चेत् न। 'आयुर्वैघृतम्' इति वेदवाक्यानुरोधेन अन्वयानुपपत्तेरपि क्वचित् लक्षणाबीतस्वीकारात्, अन्यथा मीमांसकमते वेदस्यापौरुषेयत्वेन कर्तृत्वाभावात् तात्पर्यस्याप्यभावे तात्पर्यानुपपत्तिरूपबीजाभावात् लक्षणाया अभावात्।

**अत्र जातिशक्तिवादिनः आक्षिपन्ति** – व्यक्तिशक्तिपक्षं स्वीकुर्वतां भवतां मतेऽपि व्यक्तीनामानन्त्यात् शक्त्यानन्त्यप्रसङ्गः तदवस्थ एव खलु ! यतः प्रतिव्यक्ति शक्तिस्वीकारात् शक्तिग्रहसमये शक्तीनामपि आनन्त्यं भवत्येव। कथमयं दोषः परिहर्तव्यः ? इति क्लेश भवतां पक्षे अस्त्येवेति भावः।

**अत्र व्यक्तिशक्तिवादिनः समादधते** – अस्मन्मते व्यक्तीनामानन्त्येऽपि अस्ति मार्गः तद्दोषपरिहराय। तदित्थम् – अस्माकं व्यक्तीनामान्त्येऽपि शक्यतावच्छेदकजातेरूपलक्षणत्वेन तदैक्येन च तादृशजात्युपलक्षितव्यक्तौ शक्तिस्वीकारेण अनन्तशक्तिकल्पनाविरहेण नास्ति गौरवम्। लक्ष्यतावच्छेदकतीरत्वादिवच्छक्यतावच्छेदकस्य अवाच्यत्वे दोषाभावात्।

**अयं भावः** – व्यक्तौ शक्तिस्वीकारे व्यक्तीनामानन्त्यात् अनेकशक्तिकल्पनाप्रयुक्तं गौरवं स्यादिति हि मुख्यं दूषणम्। तत्तु इत्थं परिह्रियते। व्यक्तीनामानन्त्येपि न सर्वासु व्यक्तिषु प्रत्येकं शक्तिः कल्प्यते येन शक्त्यानन्त्यरूपदोषस्स्यात्। अपि तु एकैव शक्तिः कल्प्यते। व्यक्तीनामानन्त्ये सति कथमेकया शक्त्या निर्वाहः, निर्वाहेपि कथं शक्त्यविषयस्य व्यक्त्यन्तरस्य बोधविषयत्वमिति चेत्, सर्वासु व्यक्तिषु विद्यमानमनुगतधर्ममादाय तेन धर्मेण व्यक्तीनामनुगमं कृत्वा शक्तिः कल्प्यते। अर्थात् गवादिशब्दानां न गवि शक्तिः अपि तु गोत्वावच्छिन्ने गवि शक्तिः। एका श्वेतगोव्यक्तिः गोत्वावच्छिन्नेति तस्याः सङ्ग्रहे सिद्धे, व्यक्त्यन्तरस्यापि गोत्वावच्छिन्नत्वात् तस्या अपि सङ्ग्रहः सिद्ध्यति। एवं च एकस्यां व्यक्तौ शक्तिकल्पने शक्त्यविषयस्य व्यक्त्यन्तरस्य बोधविषयत्वानापत्तिरिति दूषणस्य नास्ति अवकाशः। सर्वस्या अपि व्यक्तेः गोत्वावच्छिन्नत्वेन रूपेण शक्तिविषयत्वात्, तेनैव रूपेण सर्वस्या अपि व्यक्तेः शाब्दबोधविषयत्वसंभवाच्च। एतदेव स्पष्ट्यते इतोऽपि धर्ममुपलक्षणीकृत्य शक्तिग्र-

हात् वस्तुतः तत्तद्धर्माकृतिविशिष्टा व्यक्तिः बुध्यते, न तु तद्धर्मप्रकारेणेति व्यक्ति-शक्तिवादः। एतदेव जात्यादेरुपलक्षणत्वं यत् स्वाश्रयाणां व्यक्तीनां सर्वेषां स्वरूपतः शक्तिग्रहविषयत्वं सम्पाद्य स्वयं शक्तिग्रहाविषयो बोधाविषयश्च। यथा काकवद्देवदत्तगृहम् इत्यत्र काकः स्वोपलक्षिततृणत्वादिना तद्गृहमितरेभ्यो व्यावर्तयति। तथा जातिः व्यक्तीः उपस्थाप्य स्वोपलक्षिताभिः व्यक्तिभिः शक्तिमितरेभ्यो व्यावर्तयति। एवञ्च शक्यव्यक्तीनामानन्त्येऽपि उपलक्षणीभूतघटत्वादिजातेः ऐक्यात् शक्तेरैक्यं कारणताया निरूपकाश्रयव्यक्तिबाहुल्येऽपि अवच्छेदकदण्डत्वादेः ऐक्यात्। अत्र शक्यः घटः, शक्यतावच्छेदकं घटत्वं, तद्धि सर्वत्रापि शक्येषु अनुगततया एकमेवेति अभिप्रायः। तेन शक्यतावच्छेदकभेदे एव शक्तेर्भेदः इति फलितम्। अतः नास्ति अनन्तशक्तिकल्पनगौरवमिति।

**अत्र शङ्का** – अनया रीत्या निरूपिते गोत्वादेः जातेः शक्यतावच्छेदकत्वे शक्यत्वे सति शक्यविशेषणस्यैव शक्यतावच्छेदकत्वनियमेन गोत्वादिकमपि शक्यं स्यात्, तर्हि कथमुच्यते शक्यं गौरित्येव?

**अत्र समाधानम्** – प्रकृतशङ्कां मनसि निधाय परमलघुमञ्जूषाकारेणोक्तम् – **लक्ष्यतावच्छेदकतीरत्वादिवच्छक्यतावच्छेदकस्य अवाच्यत्वे दोषाभावाद्** इति। **अयं भावः** अस्य – "गङ्गायां घोषः" इत्यत्र शक्यसम्बन्धो लक्षणेति पक्षे तटत्वतटयोरेकविधशक्यरूपसम्बन्धा लक्षणा न सम्भवतीति तटत्वस्य अलक्ष्यत्वेऽपि तस्य लक्ष्यतावच्छेकत्वमङ्गीक्रियते, एवमेव घटं प्रति दण्डत्वस्यान्यथासिद्धत्वेन कारणत्वाभावेपि कारणतावच्छेदकत्वमङ्गीक्रियते तथैव प्रकृतेऽपि गोत्वादिजातेः अशक्यत्वेऽपि शक्यतावच्छेदकत्वे न किमपि बाधकम्। एवञ्च तस्य शक्तिग्रहविषयत्वं नावश्यकमिति बोध्यम्।

**पुनः पूर्वपक्षी जातिशक्तिवादी** – "नागृहीतविशेषणाबुद्धिर्विशेष्ये उपजायते" इति पूर्वोक्तन्यायेन विशिष्टज्ञाने विशेषणज्ञानं कारणम्, एवञ्च उपजीव्यत्वात् गोत्वादिजातेरेव वाच्यत्वमुचितम्।



**अत्र सिद्धान्ती व्यक्तिशक्तिवादी** – नागृहीत......इति न्यायस्य विशेषणविशि-

ष्टविशेष्यबोधे तात्पर्येऽपि भवदुक्ततात्पर्ये मानाभावात्। जातेरुपलक्षकत्वेन तदाश्रयसकलव्यक्तिबोधेन व्यक्त्यन्तरबोधाप्रसङ्गभङ्गाच्च। अयमभिप्रायः यदनेन न्यायेन इदमेव प्रतीयते यद् विशिष्टज्ञाने विशेषणज्ञानं आवश्यकम्। न तु विशेषणे शक्तिः विशेष्ये लक्षणेति भवद्भिः मीमासंकैः यत् कल्पितं तत्। किञ्च अस्मन्मतनिराकरणाय यच्चोक्तं भवद्भिः एकस्यां व्यक्तौ शक्त्युपदेशे व्यक्त्यन्तरे तदभावेन तद्बोधाप्रसङ्गादिति, तदपि न। अत्र पक्षे कस्याञ्चित् एकस्यामेव व्यक्तौ न शक्तिः स्वीक्रियतेऽपितु जात्युपलक्षितासु सर्वास्वपि व्यक्तिषु एकैव शक्तिः कल्प्यते इति सर्वासां बोधे न किञ्चित् बाधकम्। तदुक्तं **कुमारिलभट्टपादैः तन्त्रवार्तिके–**

**"आनन्त्येपि हि भावानामेकं कृत्वोपलक्षणम्।**

**शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति" ॥ इति** भावानां = वाच्यत्वेन अभिमतानां घटादिव्यक्तीनाम्, आनन्त्येपि = नानात्वादपरिच्छेद्यत्वेपि, एकम् = अनुगतजातिधर्मम्, उपलक्षणम् = शक्यव्यावर्तकम्, कृत्वा = अङ्गीकृत्य, शब्दः = गवाद्यात्मकः, सुकरसम्बन्धः = सुग्राह्यगवादिनिष्ठवाच्यतासम्बन्धः। न च व्यभिचरिष्यति = शक्तिग्रहाविषयव्यक्तिं न बोधयिष्यतीति कारिकार्थः। व्यक्तीनामानन्त्येपि एकमनुगतधर्ममादाय तदवच्छिन्ने शक्तिकल्पनेन न दोष इति तु भट्टपादानां कारिकायाः सङ्गृहीतार्थः।

**अत्रेदं युक्त्यन्तरम् –** अत्र पक्षे व्यवहार एव मुख्ययुक्तित्वेन प्रदर्शयितुं शक्यते। व्यवहारः शक्तिग्राहकशिरोमणिः। तदुक्तं वृद्धैः–

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**

**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥ इति।**

एवं च शक्तिग्राहकशिरोमणिस्तु व्यक्तावेव शक्तिं ग्राहयति। गामानय अश्वं बधानेत्यादि वृद्धव्यवहारात् शक्तिं गृह्णन् बालः व्यक्तावेव शक्तिं गृह्णाति न तु जातौ। अनुभवसिद्धश्चायं विषयः। अतः बालेन वृद्धव्यवहारात् व्यक्तावेव शक्तिग्रहणात् तस्यामेव शक्तिकल्पनमुचितम्।



**व्यक्तिः नामार्थ इत्यत्र शास्त्रीयं प्रमाणम् -**

पक्षेऽस्मिन् न केवलं पूर्वोक्तयुक्तय एव प्रमाणम्, अपि तु शास्त्रसम्मतिश्च वर्तते। तत्रापि सूत्रकाराणां पाणिनिमहिर्षीणां सम्मतिश्च वर्तते इति। भगवता पाणिनिना "अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रं, "सरूपणामेकशेष एकविभक्तौ" इति सूत्रं च प्रणीतम्। तत्सूत्रद्वयेन पाणिनेः व्यक्तिशक्तिवादे एव अभिप्रायोऽस्तीति अनुमीयते।

तथा हि "इको यणचि", "अस्य च्वौ" इत्यादिषु अकार-इकारादयः स्वसवर्णान् अष्टादशवर्णान् गृह्णीयुरिति धिया पाणिनिना "अणुदित्सवर्णस्य चाऽप्रत्ययः" इति सूत्रं प्रणीतम्। यदि पाणिनेः जातिशक्तिवादो अभिप्रेतस्स्यात् तर्हि इदं सूत्रमेव नारब्धं स्यात्। तथा हि – जातिशक्तिवादे "ब्राह्मणो न हन्तव्य" इत्युक्ते जातेश्च हननिषेधायोगात् जात्यवच्छिन्नो न हन्तव्य इत्यर्थे पर्यवसानं कृत्वा ब्राह्मणत्वाविशेषेण सर्वेऽपि ब्राह्मणा न हन्तव्या इत्यर्थः सिद्ध्यति तथा अकारादिशब्देनापि अत्वादिजातयः उच्यन्ते। जातिषु उच्यमानं कार्यमनुपपन्नं सत् लक्षणया आक्षेपेण वा सर्वेऽपि अकाराः गृह्यन्ते एवेति 'अणुदित्'सूत्रारम्भ एव व्यर्थस्स्यात्। यदि व्यक्तिशक्तिवादपक्षः स्वीक्रियेत तदा एकेन अकारेण एकैव अकारव्यक्तिः ग्राह्येति अष्टादशाकाराणां ग्रहणसिद्ध्यर्थं 'अणुदित्'सूत्रारम्भस्य सार्थक्यम्। एवं चानेन सूत्रारम्भेण ज्ञायते यत् पाणिनिः व्यक्तिशक्तिवादपक्षमेव समर्थयते इति।

तुल्यया रीत्या 'सरूप'सूत्रमपि अत्रार्थे ज्ञापकम्। जातिपक्षे तज्जात्यनुगतीकृतानेकव्यक्तीनाम् एकेनापि शब्देनाभिधानसंभवाद् 'एकशेष'सूत्रं नारम्भणीयम्। केवलव्यक्तिशक्तिपक्षे त्वेकेन शब्देनैकस्या एव व्यक्तरेभिधानात् द्व्यादिव्यक्तिबोधार्थं द्व्यादिशब्दोपादानस्यावश्यकत्वेन तत्रेतरनिवृत्तिपूर्वकैकस्यावस्थानार्थं तदारम्भणीयम्। 'एकशेष'सूत्रारम्भेण च पाणिनिमहर्षिणा केवलव्यक्तिपक्षो मनसि धृत इत्यवगम्यते। तथा च केवलव्यक्तिशक्तिवादपक्षे सरूपसूत्रम्, अणुदित्सूत्रं च प्रमाणम्। एवञ्च केवलव्यक्तिरेव नामार्थः इति **व्यक्तिशक्तिवादिनां** मतम्।

**लिङ्गं नामार्थ इति पक्षोपस्थानम् -**



एतावता जातिः नामार्थः इति पक्षे जातौ शक्तिरिति निरस्य व्यक्तिः नामार्थ

इति निरूप्य च एतत्त्रिकं नाम स्वार्थद्रव्यलिङ्गानि नामार्थः इति पक्षं निरूपयितुमुच्यते "लिङ्गमपि नामार्थः, प्रत्ययानां द्योतकत्वात्। अन्यथा वागुपानदादिशब्देभ्यः इयं तव वागिति स्त्रीत्वबोधानापत्तेः।" **अयं भावः** – "स्वमोर्नपुंसकात्" "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यादिप्रामाण्येन 'वेधाः' 'वाग्' 'मधु' इत्यादौ प्रकृतिमात्रेण पुंस्त्वादेर्बोधेन च लिङ्गमपि प्रातिपदिकार्थः। अपि शब्देन स्वार्थद्रव्ययोर्ग्रहणम्। तद्धि जातिव्यक्ती इति द्वयं द्विकमिति शब्देन व्यवह्रियते। तद्द्वययुतं लिङ्गं = त्रिकं प्रातिपदिकार्थ इत्यर्थः। अत एव उक्तञ्च – यदि लिङ्गं न नामार्थः तर्हि वाग्, उपानद् इत्यादौ स्त्रीत्वस्य बोध एव न स्यात्।

**लिङ्गस्य शब्दनिष्ठत्वोपपादनम् –**

सम्प्रति लिङ्गं नामार्थः इति प्रतिपादनप्रसङ्गे लिङ्गं शब्दनिष्ठमेव शास्त्रीयं, न तु लौकिकमिति प्रतिपाद्यते। तदित्थम् – अयमिति व्यवहारविषयत्वं क्लीबत्वमिति विलक्षणं शास्त्रीयं स्त्रीपुंनपुंसकत्वम्। अत एव खट्वादिशब्दवाच्यस्य स्तनकेशादिमत्त्वरूपलौकिकस्त्रीत्वाभावेऽपि तद्वाचकात् टाबादिप्रत्ययः।

अस्यायमाशयः –

**स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।**
**उभयोरन्तरं यच्च तदभावे नपुंसकम्॥**

इति प्रसिद्धकारिकया लौकिकलिङ्गविषये सूचितम्। एतादृशलौकिकलिङ्गस्य खट्वादिषु अप्राणिषु अभावात् शास्त्रे स्त्रीत्वप्रयुक्तं कार्यं न स्यादिति शास्त्रीयं लिङ्गमिह शास्त्रे गृह्यते। एवं लौकिकपुंस्त्वस्य दाराशब्दवाच्ये अभावेन तद्वाचकशब्दस्य पुंस्त्वाभावे दारान् इति पुंसि विहितं "तस्माच्छसोः न पुंसि" इति नत्वं न सिद्ध्येत्। अतो लौकिकं लिङ्गमत्र न ग्राह्यम्। अपि तु शास्त्रीयं पारिभाषिकं लिङ्गमत्र शास्त्रे ग्राह्यमस्ति। किं तत् पारिभाषिकं लिङ्गमिति चेत् –

**सत्त्वरजस्तमोगणानां साम्यावस्था नपुंसकत्वम्। आधिक्यं पुंस्त्वम्। अपचयः स्त्रीत्वमिति।** एतादृशपारिभाषिकलिङ्गस्य खट्वादिषु अपि संभवात् न तत्र टाबाद्यनुपपत्तिः। उपचयापचययोः विरुद्धस्य एकत्रार्थे तीरादौ समावेशायोगात् तटः

तटी तटमित्यादि व्यवहारानुपपत्तिः। किं च सर्वविकाररहिते परब्रह्मणि उपचयाद्यसंभवात् आत्मा ब्रह्मेति पुंस्त्वनपुंसकत्वयुक्तव्यवहारानुपपत्तिश्चेत्यतो लिङ्गं नार्थनिष्ठमपि तु शब्दनिष्ठमिति स्वीकर्तव्यम्। "पुल्लिंगश्शब्दः" इति सामानाधिकरण्येन व्यवहारात्, "आङो नाऽस्त्रियाम्" "तस्माच्छसो नः पुंसि", "स्वमोर्नपुंसकात्", इत्यादिशास्त्रप्रामाण्याच्च भाष्योक्तपारिभाषिकलिङ्गस्य शब्दनिष्ठत्वं सिद्ध्यति। यद्युपचयाद्यात्मकलिङ्गस्य अर्थनिष्ठत्वं स्यात् तर्हि तटः, तटी, तटमित्यादौ लिङ्गत्रयनिमित्तककार्याणामसिद्धिः, परस्परविरुद्धाया उपचयाद्यवस्थाया एकत्र शब्दे अनवस्थानात् आत्मा ब्रह्मेत्यस्याप्यनुपपत्तिः स्यादिति लिङ्गस्य शब्दनिष्ठत्वमिति सिद्धान्तः।

**अत्र प्रश्नः** – भाष्योक्तपारिभाषिकलिङ्गस्य शब्दनिष्ठत्वमिति स्वीकारेपि एकस्मिन् शब्दे विरुद्धलिङ्गानां कथं समावेशः स्यात्। समावेशानङ्गीकारे एक एव शब्दः त्रिलिङ्गकः, द्विलिङ्गक इति व्यवहारः कथं वा युज्यते? इति चेद्

**अत्रोत्तरम्** - विरुद्धलिङ्गमादाय शब्दा अपि भिद्यन्ते। एकस्मिन्नेव शब्दे नानालिङ्गसमावेशो नैव स्वीक्रियते। किन्तु लिङ्गभेदेन शब्दा अपि भिन्ना एव स्वीक्रियन्ते। तथा सति केषांचन शब्दानामनेकलिङ्गवत्त्वव्यवहारः कथं युज्यते इत्युक्ते समानानुपूर्वीकत्वरूपसाजात्येन भिन्नेष्वपि शब्देषु अभेदमारोप्य तथा अनेकलिङ्गकत्वव्यवहारः। तथा च तटादिशब्देषु समानानुपूर्वीकेषु लिङ्गत्रयं, छागादिषूभयं पदार्थादिष्वेकमिति बोध्यम्। भाष्योक्तपारिभाषिकलिङ्गस्य शब्दनिष्ठत्वादेव सर्वत्रायं पदार्थः, इयं व्यक्तिः, इदं वस्तु इति व्यवहारः, तटस्तटी तटमिति व्यवहारश्चोपपद्यते। तथा हि –

स्तनकेशवती नारीत्यादिलौकिकलिङ्गस्य अर्थे अविद्यमानत्वेपि परस्परविरुद्धपारिभाषिकलिङ्गभेदेन भिन्नानां तटादिशब्दानां पुंस्त्वादितत्तल्लिङ्गप्रयुक्तकार्यानुभवः उपपद्यते। यदि तु लौकिकलिङ्गमिव भाष्योक्तं पारिभाषिकलिङ्गमप्यर्थनिष्ठं स्यात् तर्हि स्त्रीव्यक्तावपचयात्मकस्त्रीत्वस्यैव सत्त्वेन तत्र इयं व्यक्तिरित्येव प्रयोगः स्यात्, न तु अयं पदार्थः, इदं वस्तु इति प्रयोगः। स्त्रियां पुंस्त्वनपुंसकत्वयोरभा-

वात्। एवं पुंसि उपचयात्मकपुंस्त्वस्यैव सत्त्वेन तत्र इयं व्यक्तिः इदं वस्तु इत्यादिप्रयोगो न स्यात्। पुंसि स्त्रीत्वनपुंसकत्वयोरभावात्। उपचयाद्यवस्थानां परस्परविरुद्धत्वेन एकस्मिन्नर्थे समावेशासंभवादेकयैव कयाचिदवस्थया भाव्यमिति एकत्रार्थे कस्यचिदेकस्यैव लिङ्गस्य युक्तिसिद्धत्वात्। ततश्च एकत्रार्थे लिङ्गद्वयस्य लिङ्गत्रयस्य वा सुतरामसंभवात्। लिङ्गस्य शब्दनिष्ठत्वे तु अर्थस्य सर्वथा लिङ्गराहित्येन पुंस्त्वस्त्रीत्वादिमात्रवाचकपदार्थव्यक्त्यादिपदैः सह सामानाधिकरण्ये बाधकाभावात् सर्वत्रायं पदार्थ इयं व्यक्तिः, इदं वस्तु इत्यादिव्यवहारः सङ्गच्छते।

**संख्या नामार्थ इति पक्षोपस्थानम् -**

एतावता जातिव्यक्तिलिङ्गमितित्रिकं नामार्थ इति प्रतिपाद्य संख्याऽपि नामार्थः इति प्रतिपादयितुमुपक्रमः। "संख्यापि नामार्थः, विभक्तीनां द्योतकत्वात्। अत एव "आदिर्ञिटुडवः" इति सूत्रे आदिरिति बहुत्वे एकवचनम्। वाच्यत्वेऽन्वयव्यतिरेकाभ्यां जसं विना नामार्थबहुत्वप्रतीत्यभावापत्तेः।" इति एतावता ग्रन्थेन संख्या नामार्थ इति प्रत्यपादि। अत्रायमाशयः – वैयाकरणानां मते संख्यापि प्रकृतेरर्थः, एकवचनादिकं च एकत्वाद्यर्थे तात्पर्यग्राहकमेव। अत एव दधि मधु इत्यादौ विनापि प्रत्ययं संख्याया प्रतीत्या तस्याः प्रकृत्यर्थत्वमेव वक्तुमुचितम्।

अत्रेदं तु न वक्तव्यम् यत् लुप्तविभक्तिस्मरणात् तत्तत्संख्याप्रतीतिः भवति। यतः विभक्तिलोपमजानतोऽपि पुरुषस्य नामतः = प्रातिपदिकादेव तस्याः प्रतीतिर्जायते।

एवन्तर्हि "द्व्येकयोर्द्विवचनैकवचने" इत्यादिसूत्राणां व्यर्थता भवेदित्यपि न चिन्तनीयम्। यतो हि अस्मन्मते विभक्तीनां द्योतकत्वं वर्तते। तद्योतनाय हि तस्याः विधानस्य उपयोगः वर्तते एव।

एवमस्ति तर्हि अनन्तप्रकृतीनां शक्तिकल्पने गौरवं खलु इति चेत् कथयामोऽत्र फलमुखगौरवं न दोषाय। यतोऽत्र प्रकृतिमात्रेऽपि तथा अगृहीतशक्तिकस्य बोधदर्शनात् तत्तद्विभक्तिविधानं द्योतकतासम्पादनफलपरमिति स्वीकारात्। एवञ्च विभक्तिद्वारा प्रकृत्यर्थद्योतनमेव फलमिति अभिप्रायः।

नेयमस्माकं कपोलकल्पना विभक्तीनां द्योतकताप्रतिपादनम्। अस्त्यत्र प्रमाणं शास्त्रीयमपि। अत एव = विभक्तीनां द्योतकत्वादेव "आदिर्ञिटुडवः" इत्यत्र टुडवः इति बहुवचनम् तद्विशेषणीभूते आदिशब्दे तु एकवचनम्। एतत्कथं सङ्गच्छेत इति चेत् बहुत्वे एकवचनमिति स्वीक्रियते। अन्यथा तु जसोऽभावे बहुत्वस्य अभानात् पाणिनिनिर्देशस्यैवासङ्गतिः। तदित्थमन्वयव्यतिरेकाभ्यां साधयितुं शक्यते – तत्सत्तवे तत्सत्त्वमन्वयः, तदबावे तदभावः व्यतिरेकः इति अन्वयव्यतिरेकस्वरूपम्। तथा हि – संख्याप्रतिपादकप्रत्ययसत्त्वे एकत्वादिप्रतीतिः, संख्याप्रतिपादकप्रत्ययाभावे तु न एकत्वादिप्रतीतिः। एवञ्च प्रकृते जसोऽभावेऽपि बहुत्वस्य भानात् व्यतिरेकव्यभिचारस्य सत्त्वात् विभक्तीनां वाचकत्वं स्वीकर्तुं न शक्यते। अतः द्योतकत्वमेव विभक्तीनां सिद्धम्। एतेन हि चतुष्कं नामार्थ इति पक्षः सिद्धः।

**कारकं नामार्थ इति पक्षोपस्थानम् –**

इत्येतावता चतुष्कं नाम स्वार्थद्रव्यलिङ्गसंख्याः नामार्थः इति निरूप्य पञ्चकं नाम कारकमप्यन्तर्भाव्य स्वार्थद्रव्यलिङ्गसंख्याकारकाणि पञ्चकं प्रातिपदिकार्थ इति पक्षोपस्थापनायोच्यते – "कारकमपि प्रातिपदिकार्थ इति पञ्चकं प्रातिपदिकार्थः।"

**अत्र शङ्का** – यत् दण्डसत्त्वे घटसत्त्वं दण्डाभावे घटाभाव इति अन्वयव्यतिरेकाभ्यां घटं प्रति यथा दण्डस्य कारणत्वं स्वीक्रियते तथा टापः सत्त्वे स्त्रीत्वप्रतीतिः, तदभावे नेति टाबादीनामेव स्त्रीवाचकत्वं सिद्ध्यति। एवं अमादिप्रत्ययेषु सत्स्वेव कर्मत्वादिप्रतीतिः संख्याप्रतीतिश्च, तदभावे नेति द्वितीयादीनामेव कारकवाचकत्वं संख्यावाचकत्वं च सिद्ध्यति। एवञ्च अन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यत्वमिति तत्कथं पञ्चकं नामार्थ इति पक्षस्स्वीकृतः? इति चेत्

**अत्र समाधानम्** - अस्यापि पक्षस्य साधकयुक्तिरस्ति अस्माकम्। यदि प्रत्ययस्यैव लिङ्गसंख्याकारकवाचित्वं स्यात् तदा 'दधि पश्यति' 'दधि तिष्ठति' इत्यादिस्थले प्रत्ययं विना लिङ्गसंख्याकारकाणां प्रतीतिरेव न स्यात्। न च तत्रापि लुप्तप्रत्ययस्य अनुसंधानं कृत्वा लिङ्गादीनां प्रतीतिः संभवतीति शङ्क्यम्। प्रत्ययः आसीत् स च प्रक्रियावशात् लुप्त इति वैयाकरणा जानन्ति। किन्तु अनधीतवैयाकरणो

लौकिकोपि पुरुषः दधि पश्यतीति वाक्यं श्रुत्वा बोधमनुभवति। तस्मात् तदनुरोधेन नाम्न एव पञ्चकवाचकत्वमङ्गीकर्तव्यम्। प्रत्ययास्तु केवलं द्योतका एवेति वैयाकरणः पक्षः। एतच्च संख्या नामार्थ इति पक्षेऽपि इतः प्रागेव विवेचितम्, अतः अन्वयव्य-तिरेकाभ्यां द्योतकत्वसाधनाय कृतस्य विचारस्य नात्र पुनः विचारः विस्तरभयात्। एवञ्च पञ्चकं प्रातिपदिकार्थ इति पक्षः सिद्धः। एतदेव भट्टोजिदीक्षितेन एकया कारि-कया सङ्गृहीतम्। तदित्थम्–

**एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।**
**नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे व्यवस्थिताः॥ इति।**

**षट्कं नामार्थ इति पक्षोपस्थानम् –**

उपर्युक्तरीत्या पञ्चकं प्रातिपदिकार्थ इति प्रतिपाद्य षष्ठः कश्चन पक्षः षट्कं प्राति-पदिकार्थ इति, स प्रस्तूयते। तथा हि स्वार्थद्रव्यादिवत् शब्दस्यापि शाब्दबोधे भानं भवतीति विशेषणतया। अतः शब्दोपि नामार्थः। अत्र पक्षे वाक्यपदीयकारिका प्र-माणम्। तथा हि–

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति।**

**अयमाशयः** – सर्वेषामनुसिद्धोऽयं विषयः यल्लोके तादृशः शाब्दबोधात्मकः प्रत्ययो नाम ज्ञानं नास्ति, यत्र शब्दरूपविशेषणभानं न भवति। यतः सर्वं ज्ञानं शाब्दबोधात्मकं शब्देन शब्दरूपविशेषणेन अनुविद्धं = नित्यसम्बद्धं भासते = प्र-तीयते इति कारिकाया अर्थः। अपि च अस्माकमनुभवोपि वर्तते यद् विष्णुमुच्चारय इत्यादिप्रयोगैः शब्दस्य विशेषणत्वेन शाब्दबोधे भानं सिध्यति। तद्वाक्यात् जाते बोधे यदि शब्दस्य विषयत्वं न स्यात् तर्हि केवलार्थस्य उच्चारणायोग्यत्वात् तादृशः प्रयोग एव असङ्गतः स्यात्। अतः स्वार्थद्रव्यादिवत् शब्दोपि शाब्दबोधे भासते इति स्वीकर्तव्यमिति षट्कं प्रातिपदिकार्थ इति पक्षस्सिध्यति।

**अत्र प्रश्नः** - अस्तु हरिकारिकया, अस्मदनुभवेन च शब्दोपि शाब्दबोधविषयः। तथापि एकस्यैव शब्दस्य वाचकत्वं वाच्यत्वं चेति परस्परविरुद्धधर्मद्वयं कथं स्यात्?

अतः शब्दस्य वाचकत्वमात्रमङ्गीकार्यं, न तु तस्य शाब्दबोधे विषयत्वमिति चेद् –

**अत्रोत्तरम्** – प्रश्नस्यास्य वाक्यपदीये सयुक्तिकं समाधानं वर्तते। तथा हि–

**ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।**

**तथैव सर्वशब्दानामेते पृथगवस्थिते॥** विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते। इति।

**अयमाशयः** – ग्राह्यत्वं = बोध्यत्वं, ग्राहकत्वं = बोधकत्वं, तेजसः = दीपादेः ग्राह्यत्वग्राहकत्वरूपे द्वे शक्ती यथा तथा शब्दस्यापि बोध्यत्वं बोधकत्वमुभयं संभवतीति। अपि च विषयत्वं = शाब्दबोधविषयत्वं (अत्र स्वं नाम शब्दः), अनादृत्य = असम्पाद्य, शब्दैः = बोधकैः, अर्थो न प्रकाश्यते = अर्थो न बोध्यते इति। घटादिद्रव्यस्य चाक्षुषप्रत्यक्षे दीपाद्यालोकसंयोगः कारणमिति तु निर्विवादम्। तथा च घटदीपाद्यालोकसंयोगः घटस्येव स्वस्यापि प्रत्यक्षं जनयति। विषयसन्निधाने सति दीपादितेजसि शक्तिद्वयस्य लोके प्रत्यक्षसिद्धत्वात्। एवमर्थगोचरशब्दनिष्ठशक्तिसहकृत एव शब्दो अर्थस्य स्वरूपस्य च बोधं जनयति। यथा च विषयाऽसन्निधाने तु स एवाऽऽलोकसंयोगः केवलं स्वरूपस्यैव प्रत्यक्षं जनयति तथा अर्थे तात्पर्याभावे शब्दे च तात्पर्ये सति स एव शब्दः स्वनिष्ठतादृशवृत्त्यैव स्वस्यैव बोधं जनयतीति शब्दस्य शाब्दबोधे भाने न किंचित् बाधकम्।

**शब्दस्य शाब्दबोधे भानस्य फलम्** –

शब्दोऽपि शाब्दबोधे भासते इत्यत एव विष्णुशब्दमुच्चारयेत्यादौ अर्थोच्चारणासम्भवात् शब्दप्रतीतिः। अत एव च अनुकरणेन अनुकार्यस्वरूपप्रतीतिः। तथा हि – **स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वमनुकरणत्वम्।** अत्र स्वं पदेन अनुकरणम्। अनुकार्यस्य लक्षणन्तु – **स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वमनुकार्यत्वम्।** तत्रानुकार्याद् अनुकरणं भिद्यते इति तयोः भेदविवक्षायाम् अनुकार्यस्वरूपप्रतिपादकत्वेन अर्थवत्त्वात् प्रातिपदिकत्वात् स्वादिसिद्धिः। भेदपक्षज्ञापकः "भुवो वुग्लुङ्लिटोः" इत्यादिनिर्देशः। तत्र हि भुवः इति षष्ठ्यन्तनिर्देशः तदानीमेव सङ्गच्छते यदा अनुकार्यानुकरणयोर्भेदः। यतः तस्मिन्नेव पक्षे तस्यार्थवत्वत्त्वञ्च सि-

द्यति। अभेदपक्षे तु आनुपूर्विमात्रार्थकत्वात् कस्यापि अर्थस्याभावात् प्रातिपदिकत्वं न स्यात्। तदभावे च तन्निबन्धना विभक्तिरपि न।

अनुकार्यादनुकरणमभिन्नमिति अभेदविवक्षायां तु अर्थवत्त्वाभावान्न प्रातिपदिकत्वम्, नापि पदत्वम्। अभेदपक्षज्ञापकस्तु 'भू-सत्तायाम्' इत्यादिनिर्देशः। प्रातिपदिकत्वपदत्वाभावेऽपि 'भू' इत्यादि साधु भवत्येव।

**अत्र शङ्का** – 'अपदं न प्रयुञ्जीत' इत्यादिभाष्यात् एतादृशप्रयोगस्यासम्भवात् असाधुत्वमिति। यतः अभेदपक्षे अर्थवत्त्वाभावेन प्रातिपदिकत्वाभावात् पदत्वं नोपपद्यते। तथा सति पदत्वाभावे लोकेप्रयगार्हत्वं कथमुच्यते इत्याशयः शङ्कायाः।

**अत्र समाधानम्** – अपदमित्यस्य हि अपरिनिष्ठितमित्यर्थः। **परिनिष्ठितत्वञ्च – अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्।** अस्य समन्वयः – यथा रामः इति परिनिष्ठितमित्युच्यते। तत्र राम सु इत्यवस्थायाम् अप्रवृत्तो नित्यविधिः "ससजुषो रुः" इति रुत्वविधिः, तस्य उद्देश्यतावच्छेकं = पदान्तत्वविशिष्टसत्त्वम् (पदान्ते सस्य सजुश्शब्दस्य च रुः स्यादित्यत्र पदान्तत्वविशिष्टसकारमुद्दिश्य रुत्वविधानात् उद्देश्यं पदान्तत्वविशिष्टसः, उद्देश्यतावच्छेदकं पदान्तत्वविशिष्टसत्त्वम्, उद्देश्यतावच्छेकत्वं पदान्तत्वविशिष्टसत्त्वे) तेन तादृशेन पदान्तत्वविशिष्टसत्त्वेन आक्रान्तः राम सु इति समुदायः यतः अत्र स रुत्वविधिः न प्रवृत्त एतावता। तदाक्रान्तत्वञ्च राम सु इति समुदाये। एतादृशोद्देश्यतावच्छेदकानाक्रान्तत्वं राम इत्यत्र यतः सः विधि प्रवृत्तः अतः इदं परिनिष्ठितमिति उच्यते। राम सु इति प्रकृतिप्रत्ययोः पृथक्प्रतीतिविषयकः समुदायस्तु न परिनिष्ठितः। तत्र ग्रन्थकारः उपर्युक्तपरिष्कारे दलसार्थक्यं स्वयं प्रदर्शयति अव्याप्त्यादिदोषवारणाय। तथा हि – देवदत्तो भवति इत्यादौ 'तिङतिङः' इति निघाते जाते अतिङन्तपदपरतिङन्तत्वरूपोद्देश्यतावच्छेदकसत्त्वे अपरिनिष्ठितत्ववारणाय अप्रवृत्तेति दलम्। अत्र नित्यविधिः एकवारं प्रवृत्ता इति न दोष इत्यर्थः। एवमेव "स्वरतिसूतिसूयतिधूञूदितो वा" इति इड्विकल्पविधायकसूत्रस्य पाक्षिकप्रवृत्तौ 'सेद्धा' इत्यादौ असाधुत्ववारणाय नित्यविधीति दलम्। अत्र वैकल्पिकत्वात् सेद्धा इत्यत्र अप्रवृत्तावपि न दोषः। अतः

सेधिता, सेद्धा इति उभयं साधु।

अभेदपक्षे तु 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रस्यार्थवत्त्वरूपोद्देश्यातवच्छेदकानाक्रान्तत्वात् सूत्राप्रवृत्तावपि 'भू' इत्यादि परिनिष्ठितम्। परिनिष्ठितसाधुशब्दौ पर्यायौ।

अनुकरणस्य अनुकार्यस्वरूपबोधकत्वाभावेऽपि अनुकार्यस्वरूपप्रतीतिः सादृश्याख्यसम्बन्धेनेति स्वीकार्यम्। यथा मैत्रसदृशपिण्डदर्शने मैत्रस्मरणम्। एवं भू-इत्याद्यनुकरणज्ञाने तादृशानुकार्यस्य ज्ञानमिति संक्षेपः।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ
नामार्थसिद्धान्तनिरूपणम् ॥

# अथ समासशक्तिसिद्धान्तनिरूपणम्

अथ नामार्थविषये विज्ञाय समासस्यापि नामविशेषत्वात् तदर्थोऽपि ज्ञातव्य इति तदर्थं प्रकृते समासशक्तिविचार आरभ्यते। प्रसिद्धमेतत् यत् वृत्तयो भवन्ति पञ्च। यथोक्तम् - **कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः। परार्थाभिधानं वृत्तिः इति वृत्तेः लक्षणम्।** अर्थात् प्रत्ययान्तर्भावेन अन्यपदार्थान्तर्भावेन वा यो विशिष्टः अर्थः सः परार्थः। परार्थः अभिधीयते येन इत्यर्थे करणे ल्युटि परार्थाभिधानम् इति शब्दस्य व्युत्पत्तिः। अत एव तिङन्तस्य वृत्तिरिति व्यवहारः न भवति। तत्रैकार्थीभावाभावात्। इदं लक्षणं समर्थः पदविधिः इति सूत्रे भाष्ये दृश्यते। **तत्र कैयटः – परस्य शब्दस्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिरित्यर्थः यथा राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते** इति। पञ्चवृत्तय इति व्यवहारस्तु प्राचीनमतानुसारेण।

**नव्यास्तु** एकशेषस्य वृत्तित्वं नाभ्युपगच्छन्ति। परार्थान्वितस्वार्थोपस्थापकत्वरूपवृत्तित्वस्य तत्राभावात्। परन्तु द्वन्द्वापवादतया एकशेषस्यापि वृत्तित्वमुचितमिति अन्ये वदन्ति।

अनया रीत्या समासोऽपि वृत्तिषु अन्यतमः इति स्पष्टम्। अत्रापि धात्वर्थकारकार्थवत् नैयायिकामीमासंकादीनां शाब्दिकैः मतभेदः वर्तते। अतः तन्मतालोचनापूर्वकं शाब्दिकसिद्धान्तमुपस्थापयितुमयमुपक्रमः।

**वृत्तिभेदनिरूपणम् –**

तत्र कृत्-तद्धित-समास-एकशेष-सनाद्यन्तधातुरूपाः पञ्च वृत्तय इति पूर्वं सूचितमेव। वृत्तिरिति पदस्य परार्थाभिधानम् इत्यर्थोऽप्युक्तः।



परस्य = अन्यस्य = अवयवपदार्थेतरस्य, अर्थस्य अभिधानम् = परार्थाभि-

धानमिति व्युत्पत्तिरेका।

परस्य = विशिष्टस्य = अवयवपदार्थसहितस्य अर्थस्य अभिधानम् = परार्थाभिधानमिति व्युत्पत्तिरन्या।

इममेव व्युत्पत्तिभेदमाश्रित्य वृत्तिरियं द्विधेति स्वीक्रियते – जहत्स्वार्था अजहत्स्वार्थेति।

**जहत्स्वार्थाऽजहत्स्वार्थानिरूपणम् –**

जहत्स्वार्थेति बहुव्रीहिसमासपदम्। जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था इति कथ्यते। वस्तुतस्तु जहति = त्यजन्ति, स्वानि = वृत्तिघटकीभूतानि पदानि, यं स जहत्स्वः = अर्थः, तादृशोऽर्थः यस्यां सा जहत्स्वार्था, वृत्तिः अन्यपदार्थः। जहति इति शत्रन्तम्, न तु तिङन्तमिति ज्ञातव्यम्। तेन अवयवानां वृत्तिघटकानां पदानां योऽर्थः तन्निरपेक्षत्वे सति तत्समुदायार्थबोधकत्वम् इति जहत्स्वार्थायाः लक्षणं पर्यवस्यति। तदुक्तं **मञ्जूषादिग्रन्थेषु – "अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वं जहत्स्वार्थात्वम्"।**

एवमेव न जहत्स्वार्था = अजहत्स्वार्थेति। नञ्तत्पुरुषगर्भितबहुव्रीहिसमासोऽयम्। अत्रापि पूर्ववत् समासविग्रहादिज्ञातव्यम्। तथा च अवयवपदानां योऽर्थः तत्संवलितसमुदायार्थबोधकत्वम् इति अजहत्स्वार्थायाः लक्षणं सिद्धं भवति। तच्चोक्तं तत्तद्ग्रन्थेषु – **"अवयवार्थसंवलितसमुदायार्थबोधिकात्वमजहत्स्वार्थात्वम्" इति।**

अत्र लक्षणे स्वशब्दः आत्मीयपरः, अर्थस्य आत्मीयञ्च पदमेव। एवञ्च जहत्स्वार्थत्वमेवैकार्थीभावः इति फलितम्। अजहत्स्वार्थत्वञ्च व्यपेक्षा। अत एव जहत्स्वार्था वृत्तिः समासादिवृत्तावेव तत्रैव एकार्थीभावस्य सत्त्वात् इत्युच्यते। एकार्थीभावपक्षे समुदायस्यैव विशिष्टार्थोपस्थापकत्वम्, अवयवभूतानि पदानि स्वार्थोपस्थापने असमर्थानि, अतः तेषां निष्फलत्वम् अनर्थकत्वञ्चेति ज्ञातव्यम्। व्यपेक्षापक्षे – परस्परापेक्षत्वरूपव्यपेक्षात्वस्य सम्भवात् तत्पक्षे अवयवाः स्वार्थोपस्थापकाः एव। तथा च स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परान्वयः स व्यपे-

क्षेति कथ्यते।

एतदुदाहरणेन स्पष्टं भविष्यति। तथा हि – रथन्तरं = सामभेदः, शुश्रूषा = सेवा इत्यादीनि जहत्स्वार्थाया उदाहरणानि। अत्र रथोपपदात् तृधातोः खचि सिद्धो रथन्तरशब्दोऽवयवभूतयोः रथस्य 'तृ'इत्यस्य च अर्थमुपेक्ष्य तद्विलक्षणं सामगान-विशेषरूपसमुदायार्थं बोधयति। अत्र अवयवयोः रथ - तरशब्दयोः अर्थस्य निर-पेक्षैव। एवं च अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधकत्वमत्र समन्वितमेव।

एवमेव शुश्रुषा इत्यत्रापि श्रुधातोः सनि सिद्धः शब्दोऽयम्, श्रुधातोः श्रवणार्थं नापि सनः इच्छारूपार्थमव बोधयति अपितु तद्विलक्षणं सेवार्थमपि बोधयति।

राजपुरुष इत्यादिकं तु अजहत्स्वार्थावृत्तेः उदाहरणानि। प्रकृते राज्ञः पुरुष इति पदद्वययोगेन षष्ठीतत्पुरुषात्सिद्धः शब्दोऽयमेकतः राजसम्बद्धपुरुषरूपावय-वार्थमपि बोधयति, बोधयति च समुदायबोध्यं राजसेवकरूपार्थमपि। तेन राज-सम्बन्ध्यभिन्नस्य पुरुषस्य बोध्यतया अवयवार्थसंवलितसमुदायार्थबोधकत्वं स्पष्ट-मेवात्र। अनया रीत्या उदाहरणेन स्पष्टं यत् वृत्तौ विशिष्टा काचिच्छक्तिः। तदेव विस्तरेण कथ्यतेऽधुना -

**समासे विशिष्टशक्तिस्वीकारः –**

एवं राजपुरुषाद्युदाहरणैः स्पष्टं जातं यत् समासे विशिष्टा शक्तिः स्वीक्रियते। तदेवोक्तं नागेशोपाध्यायेन – समासादिपञ्चसु विशिष्टे एव शक्तिः न तु अवयवे इति। विशिष्टशक्त्यङ्गीकारादेव महाभाष्ये सामर्थ्यं व्यपेक्षा इति कल्पे अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इत्युक्तम्। एकार्थीभावकृतवि-शेषा यथा – धवखदिरौ इत्यत्र साहित्यम् = सहविवक्षा, अयं च इति निपातवाच्यः इतरेतरयोगरूपः। एकार्थीभावमहिम्ना समासे तस्याश्रवणेऽपि तदर्थः गम्यते, व्य-पेक्षायास्तु परस्परापेक्षत्वरूपत्वात् अवयवाः स्वार्थोपस्थापका एव भवन्ति, तथा च स्वार्थमात्रपर्यवसायिनां पदानाम् आकाङ्क्षादिवशात् यः परस्परमन्वयः तस्यैव व्य-पेक्षासामर्थ्यव्यवहार इति चार्थः विशिष्य यत्नेन वक्तव्यः।



एवमेव निष्कौशाम्बिः इत्यत्र निष्क्रान्तः कौशाम्ब्याः इति क्रान्ताद्यर्थः एका-

र्थीभावमहिम्ना लभ्यः, व्यपेक्षायां पुनः सामर्थ्ये सोऽपि वक्तव्यः।

गोरथः = गोभिर्युक्तः रथ इत्यर्थः एकार्थीभावमहिम्ना लभ्यः, व्यपेक्षायां पुनः सामर्थ्ये युक्तेत्यर्थः अधिकः वक्तव्यः।

घृतघटः = घृतपूर्णः घट इत्यर्थ एकार्थीभावमहिम्ना लभ्यः, व्यपेक्षायां पुनः सामर्थ्ये पूर्णरूपोऽर्थो वक्तव्यः।

गुडधानाः = गुडमिश्रिता धाना इत्यर्थ एकार्थीभावमहिम्ना लभ्यः, व्यपेक्षायां पुनः सामर्थ्ये मिश्रणरूपोऽर्थोऽधिको वक्तव्यः।

केशचूडः = केशानां सङ्घातः चूडा यस्य इत्यर्थ एकार्थीभावमहिम्ना लभ्यः, व्यपेक्षायां पुनः सामर्थ्ये सङ्घातरूपोऽर्थः वक्तव्यः।

सुवर्णालङ्कारः = सुवर्णस्य विकारः अलङ्कारः इत्यर्थः एकार्थीभावमहिम्ना लभ्यः, व्यपेक्षायां पुनः सामर्थ्ये विकाररूपोऽर्थो वक्तव्यः।

द्विदशाः = द्विरावृत्ता दश इत्यर्थः, अत्र द्विशब्दादावृत्त्यर्थे विहितस्य सुच्प्रत्ययस्य लोपः एकार्थीभावमहिम्ना लभ्यः, व्यपेक्षायां पुनः सामर्थ्ये सुच्प्रत्ययलोपो वक्तव्यः।

सप्तपर्णः = प्रतिपर्व सप्त सप्त पर्णानि यस्य इति वीप्सा अर्थः, अयं च एकार्थीभावलभ्य एव, व्यपेक्षायां सामर्थ्ये वीप्सार्थो वक्तव्यः।

अत्र प्रदर्शितेषु सर्वेष्वपि उदाहरणेषु ये सङ्घाताद्यर्थाः ते सर्वेऽपि एकार्थीभावसामर्थ्यकृतविशेषाः, व्यपेक्षायां सामर्थ्ये तु एते शब्दाः तत्तत्समभिव्याहारवशात् एतादृशार्थबोधका इति वा लक्षणावृत्त्या वा सोऽर्थः कल्पनीय इति गौरवम्। अतः एकार्थीभावसामर्थ्ये अङ्गीकृते तु वृत्तिषु यावान् विशेषः लक्ष्यते, स सर्वोऽपि एकार्थीभावकृतः विशेषः इति विशिष्टशक्तिस्वीकारस्य प्रयोजनतया वक्तुं शक्यमिति भाष्यकाराणामाशयः।

इत्थमेकार्थीभावकृतान् विशेषान् उदाहरणमुखेन प्रदर्श्य एकार्थीभावसामर्थ्ये विशिष्टशक्तिरूपे एव वृत्तिरिति शाब्दिकसिद्धान्तस्थापनात् परं परमतमप्रतिषिद्धमनुमतं भवतीति न्यायेन शाब्दिकसिद्धान्तदार्ढ्याय परोक्तं व्यपेक्षावादिमतं खण्डयितुं

तन्मतानुवादः प्रस्तूयते।

**व्यपेक्षावादिनां मतनिरूपणम् -**

नैयायिकाः मीमांसकाश्च व्यपेक्षा एव सामर्थ्यम् इति वदन्ति, अत एव तेषां व्यपेक्षावादिन इति व्यवहारः। तेषां मतन्त्वित्थम् – समासे शक्तिः न कल्प्या, अत्र समासपदस्य वृत्तिसामान्यम् अर्थः। राजपुरुष इत्यादौ राजपदस्यैव लक्षणया राजसम्बन्धी अर्थः, तस्य अभेदेन पुरुषे अन्वयात् राजसम्बन्धवदभिन्नः पुरुष इति बोधः भवति। एवञ्च राजपदस्य राजसम्बन्धिनि लक्षणायां सम्बन्धभानसम्भवे तदर्थं समुदायशक्तिकल्पनानावश्यकी। समासादौ लक्षणास्वीकारादेव राजपुरुष इत्यत्र राजपदार्थः राजसम्बन्धी, तत्र एकदेशः राजन्शब्दः, तस्मिन् ऋद्धस्य इत्यादिपदं विशेषणतया नान्वेति। "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति न्यायात्। तथा "सविशेषणानां वृत्तिः न, वृत्तस्य च विशेषणयोगो न" इति वचनाच्च। विशेषणयुतस्य पदस्य वृत्तिः समासादिः न भवति, समासे कृते समस्तं पदं यद्भवति तत्र विशेषणस्य अन्वयः न भवति इति तदर्थः।

**अत्र व्यपेक्षावादिनं प्रति प्रश्नः** – यदि सासे शक्तिः न कल्प्यते लक्षणया एव निर्वाहसम्भवात्। तथा सति घनश्यामः, निष्कौशाम्बिः, गोरथ इत्यादौ घनादेः शब्दस्य घनसदृशे लक्षणा इत्यादिरीत्या लक्षणाङ्गीकारात् इवादिनिपातानां प्रयोगापत्तिः।

**व्यपेक्षावादिनः उत्तरम् -** घनश्यामः, निष्कौशाम्बिः, गोरथ इत्यादौ घनादेः शब्दस्य घनसदृशे लक्षणा इत्यादिरीत्या लक्षणाङ्गीकारात् इवादिनिपातानां प्रयोगापत्तिरापाद्यते भवता सा न। सादृश्याद्यर्थस्य लक्षणयैव उक्तत्वात्। उक्तार्थानामप्रयोगः इति नियमात् घनादिपदैरेव लक्षणावृत्त्या सादृश्याद्यर्थाः उक्ताः, अतः पुनः तदर्थे शब्दः प्रयोगः न करणीय इत्यर्थकात् न इवादिप्रयोगापत्तिरितिः।

**व्यपेक्षापक्षे लाघवमित्यर्थे युक्तिप्रदर्शनम् -**

यथा वृत्तौ लक्षणया विशिष्टशक्त्यस्वीकारात् लाघवं भवति। तथैव वृत्तौ शक्त्यस्वीकारात् समासवैकल्पिकत्वसाधनार्थं "विभाषा" इति सूत्रं नावश्यकमित्यपि

लाघवं वर्तते। राजसम्बन्ध्यभिन्नः पुरुष इति बोधनाय इच्छा यदा वर्तते तदा राजपुरुष इति समस्तपदम्, राजसम्बन्धवान् पुरुष इति बोधनाय इच्छा यदा वर्तते तदा राज्ञः पुरुष इति वाक्यमिति प्रयोगव्यवस्थायाः सम्भवात् "विभाषा" इति सूत्रमनावश्यकमित्यर्थः।

एवमेव पङ्कजादिशब्दे समुदायशक्तिः वर्तते तं दृष्टान्तमाश्रित्य **"समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्"** इति समासेऽपि समुदायशक्तिः कल्प्यते शाब्दिकैः। तद्वक्तव्यस्य अपेक्षा नास्ति। पङ्कजादिपदे अवयवशक्तिमजानतोऽपि पुरुषस्य पद्मत्वावच्छिन्नविषयकबोधः अनुभवसिद्ध इत्यतः।

पङ्कजादिस्थले तु शक्तिज्ञानाभावात् शक्यस्यार्थस्यानुपस्थितिरित्यतः शक्यसम्बन्धरूपलक्षणायाः कल्पयितुमशक्यतया लक्षणया पद्मरूपार्थबोधः नैव सम्भवति अतस्तत्र समुदायशक्तिरावश्यकी। परन्तु इयं स्थितिः राजपुरुष इत्यादौ समासे नास्ति। तत्र राजपुरुष इत्यादौ राजाद्यवयवार्थशक्तिग्रहाभावे लक्षणया विशिष्टार्थबोधासम्भवात् राजपदादिशक्त्यग्रहे न राजपुरुष इत्यादिषु राजसम्बन्ध्यभिन्नः पुरुषः इति शाब्दबोधासम्भवः। यतः अवयवशक्तिज्ञानाभावः ततः शाब्दबोधाभावः (अवयवशक्तिज्ञानस्य विशिष्टार्थबोधप्रयोजकत्वादेवेति कार्यकारणभावस्वीकारादेव न राजपुरुष इत्यादिषु राजसम्बन्ध्यभिन्नः पुरुषः इति शाब्दबोधासम्भवः इति पूर्वपङ्क्तेराशयः)। एतादृशस्थले अवयवशक्तिज्ञानाभावदशायां शाब्दबोधाभावः सर्वानुभवसिद्धः। तेन तत्र समुदायशक्तिः स्वीकर्तुं न शक्यते इत्यभिप्रायः।

परन्तु नैयायिकमते राजपुरुषादिस्थले अवयवशः शक्त्यभावे प्रत्येकं ज्ञानाभावात् अर्थज्ञानाभावे लक्षणयैव अपेक्षितार्थस्य ज्ञानं कर्तव्यम्। अतोऽत्र निर्वाहः सम्भवति समुदायशक्त्यभावेऽपि इति दृष्टान्त दार्ष्टान्तिकयोः वैषम्यं प्रतीयते एव। एतत् प्रसङ्गादुक्तं भवतां ज्ञानाय यत् व्यपेक्षावादिना समुदायशक्तिनिराकर्तुं यः दृष्टान्तः प्रदर्शितः स न समाचीनः। अग्रे अस्माभिः निराकरिष्यते विस्तरेण व्यपेक्षावादिमतम्।



**अत्र पूर्वपक्षिणः आक्षेपः व्यपेक्षावादिनं प्रति** – चित्रगुरित्यादौ लक्षणासम्भ-

वेऽपि अषष्ठ्यर्थबहुव्रीहौ लक्षणा न सम्भवति। **अयं भावः** - चित्रगुः इत्यत्र षष्ठ्यर्थबहुव्रीहौ गोशब्दस्य गोस्वामिनि लक्षणया चित्रशब्दस्य तत्र अन्वये चित्रगोस्वामिरूपेऽर्थे कथञ्चित् सिद्धेऽपि द्वितीयाद्यर्थबहुव्रीहिविषये नामार्थयोरभेदेन अन्वयः इति न्यायात् प्राप्तोदको ग्रामः इत्यत्र प्राप्तिकर्त्रभिन्नमुदकम् इत्यादिबोधात् परं प्राप्तिकर्त्रभिन्नोदकसम्बन्धिनि ग्रामेलक्षणास्वीकारेऽपि उदककर्तृप्राप्तिकर्म ग्रामः इत्यर्थः न सिद्ध्येत्, प्राप्तेत्यत्र क्तप्रत्ययस्य गत्यर्थाकर्मक इत्यादिसूत्रात् कर्त्रर्थत्वस्वीकारात्, क्तप्रत्ययस्यैव कर्मणि लक्षणा इत्युक्ते समानाधिकरणनामार्थयोरभेदान्वयनियमस्य भङ्गापत्तिरूपदोषः। अथ उदकाभिन्नकर्तृका प्राप्तिरिति बोधोत्तरं प्राप्तिसम्बन्धिग्राम इति लक्षणास्वीकारात् इष्टार्थलाभ इति चेत् प्राप्तेः धात्वर्थस्य क्तप्रत्ययार्थकर्तृनिरूपितं विशेष्यत्वम् अङ्गीकर्तव्यं स्यात्, तेन प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यम् इति न्यायस्य विरोधः प्राप्नोति, तथैव धात्वर्थस्य विशेष्यत्वे तस्यैव प्रकृते नामार्थत्वात् उदकेन सह अभेदान्वयः वक्तव्यः स्यात् एतस्य सर्वस्य परिहारः कथमिति पूर्वपक्ष्याक्षेपाशयः।

**अत्र पूर्वपक्षिणं प्रति समाधानम्** – प्राप्तोदक इत्यादिस्थले उदकपदे एव लक्षणा स्वीक्रियते। उदकपदस्य शीघ्रोपस्थितिकत्वरूपविनिगमकत्वात् उदकप्राप्तिकर्म इत्यर्थे लक्षणा। प्राप्तपदं तु तात्पर्यग्राहकं बोध्यम्। अत्रोदकपदे एव लक्षणास्वीकारे किं बीजमिति प्रश्नश्चेत् तत्र शीघ्रोपस्थितिकत्वरूपविनिगमकं सूचितमेव। प्राप्त इति पूर्वपदस्य यौगिकत्वेन नाम योगः = प्रकृतिप्रत्ययसम्बन्धः, तत आगत इत्यधिकारे विद्यमानेन योगाद्यच्च इति सूत्रेण ठञ् प्रत्यये कृते यौगिक इति शब्दः निष्पन्नः। तेन प्रकृतिप्रत्ययसम्बन्धज्ञानपुरस्सरं ज्ञेयत्वेन इत्यर्थः यौगिकत्वेनेत्यस्य। एवञ्च पूर्वपदस्य यौगिकत्वेन तत्र लक्षणास्वीकारार्थं धातुप्रत्यययोः तदर्थयोश्च ज्ञानमावश्यकम्, तद्ज्ञानपूर्विका च प्राप्तेत्यादि पूर्वपदे या लक्षणेति सा विलम्बेन साध्या। अतः उदकपदे एव लक्षणायाः स्वीकारः, इति युक्तिः अस्मन्मते।

एवमपि व्युत्पत्तिपक्षे उदकपदस्यापि यौगिकत्वं तुल्यमिति प्रश्नः यदि भवता क्रियते चेत् शृणु – प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वम् इति व्युत्पत्तिब-

लेन यथा राजपुरुषमानय इत्यादौ राजपुरुषशब्दोत्तरस्य द्वितीयाविभक्तिप्रत्ययार्थस्य तत्सन्निहिते पुरुषे एवान्वयः, न तु राज्ञि। अन्यथा द्विवचनापत्तिः। एवमेव पुरुषे आनयनकर्मत्वविरहग्रहदशायां राजनि आनयनकर्मत्वान्वयतात्पर्येण राजपुरुषमानयेति प्रयोगापत्तिश्च। तादृशश्रवणानन्तरं तदर्थबोधे सति राजानयनापत्तिश्च। तस्मादुक्तव्युत्पत्तिबलादुदकपद एव लक्षणाश्रयणस्यौचित्यं वर्तते।

**अत्र व्यपेक्षावादिनं प्रति पुनः आक्षेपः** – यथा प्रत्ययानां स्वसन्निहितपदार्थगतस्वार्थबोधकत्वमिति व्युत्पत्तिः तव वर्तते, तथा घटः इत्यादौ घटादिपदघटकस्य चरमवर्णस्यैव वाचकत्वं भवतु तुल्यन्यायादिति।

**अत्र व्यपेक्षावादिनः समाधानम्** – घटादिपदेषु प्रत्येकं वर्णेषु बोधकत्वसामर्थ्ये सत्यपि अतिरिक्ता शक्तिः कल्प्यैव, कौशादौ विशिष्टस्यैव घटाद्यर्थे सङ्केतदर्शनात्। चरमवर्णस्य प्रत्ययेन सह अत्यन्तसान्निध्येऽपि तथा बोधाननुभवात् समुदायस्यैव वाचकत्वकल्पना युक्ता। समासस्थले तु प्राप्तोदक इत्यादौ प्रत्ययस्य अत्यन्तं सन्निधिः उत्तरपदेनैव वर्तते इत्यतः तत्रैव लक्षणा स्वीक्रियत इति विशेषः। किञ्च घटादिपदेषु चरमवर्णस्यैव वाचकत्वं मीमांसकैरङ्गीक्रयत एवेति भवतु तत्रापीष्टापत्तिः।

**व्यपेक्षावादखण्डनम् -**

एतावत्पर्यन्तं सङ्ग्रहेण समासे विशिष्टा शक्तिः न स्वीक्रियते इति वदतां व्यपेक्षावादिनां पूर्वपक्षमनूदितमासीत् सम्प्रति तत् खण्डनाय युक्तयः प्रदर्श्यन्ते। तथा हि – समासे विशिष्टशक्तेः अस्वीकारे विशिष्टस्य अर्थवत्त्वं न स्यात्, ततः प्रातिपदिकत्वं न स्यात्, अर्थवत एव शब्दस्य प्रातिपदिकसंज्ञाविधानात्। अर्थवत्सूत्रस्य भाष्यमपि उक्तार्थे प्रमाणम् तत्र भाष्ये – "अर्थवदिति किम् – अर्थवतां समुदायोऽनर्थकः – दश दाडिमानि षडपूपाः कुण्डमजाऽजिनम्" इति प्रत्युदाहृतम्। अत्रार्थवतां पदानां समुदाये प्रत्येकम् पदस्य अर्थवत्त्वेऽपि समुदायस्य निरर्थकतया तत्र प्रातिपदिकसंज्ञावारणार्थम् अर्थवत् पदमिति। एवञ्च समुदायव्यावृत्तये अर्थवदिति उक्तं भाष्यकृता।



समासे शक्त्यस्वीकारे राजपुरुषपदयोः भवन्मते प्रत्येकमर्थवत्त्वेऽपि समुदाये शक्त्य-

भावात्, समुदायानर्थक्याच्च तुल्यन्यायात् दशदाडिमानि इत्यादिवत् प्रातिपदिकत्वं न स्यात्।

**अत्र नैयायिकः** – समुदायानर्थक्यात् "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इति सूत्रेण प्रातिपदिकसंज्ञा मा भवतु, किन्तु "कृत्तद्धितसमासाश्च" इति सूत्रेण समासस्य प्रातिपदिकसंज्ञा उक्तैव, तेन प्रातिपदिकसंज्ञा समासस्य भवेत् खलु इति। चेत् -

**अत्र वैयाकरणः** – "कृत्तद्धितसमासाश्च" इति सूत्रे समासपदेन नियमः क्रियते इति – अर्थवत्समुदायानां समासग्रहणं नियमार्थम् इत्यादिवाक्येन भाष्यकृता प्रतिपादितत्वात्। अन्येन सूत्रेण सिद्धे सति यस्य पुनः विधानं तस्यैव नियमार्थता न्याय्या, अस्य पदस्य नियमार्थता भाष्यकारेण प्रतिपादिता, अस्मन्मते भाष्यकारस्यैव परमप्रमाणत्वात् "कृत्तद्धितसमासाश्च" इति सूत्रे समासग्रहणं नापूर्वं समासपदेषु प्रातिपदिकसंज्ञाविधायकम्, अत एव राज्ञः पुरुषः, देवदत्तः पचति, मूलकेनोपदंशम् इत्यादौ वाक्ये अर्थवत्समुदाये न प्रातिपदिकसंज्ञा, अत्र राज्ञः पुरुष इत्यादौ वाक्ये नैयायिकैरपि शक्तिः नाङ्गीक्रियतेऽतोऽर्थवत्त्वाभावात् प्रातिपदिकत्वं न भवत्येव, किन्तु मूलकेनोपदंशम् इत्यत्र "कृत्तद्धितसमासाश्च" इति सूत्रेण प्रातिपदिकसंज्ञा प्राप्नोतीति दोषान्तरमुक्तम्, तेषां मते अर्थवत् इति पदं पूर्वसूत्रात् नानुवर्तते, अतः "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्" इति परिभाषया मूलकेनोपदंशमित्यत्रापि वाक्ये प्रातिपदिकसंज्ञा प्राप्नोति, अतः समासे विशिष्टा शक्तिः आश्रयणीया, तेनैव प्रातिपदिकसंज्ञायाः सिद्धिरिति।

**समासे लक्षणया निर्वाह इति निरसनम् -**

किञ्च समासे विशिष्टशक्त्यस्वीकारे शक्यार्थस्यैवाभावात् शक्यसम्बन्धरूपलक्षणायाः असम्भव एव, अतः लाक्षणिकार्थवत्त्वस्याप्यभावात् कथमप्यर्थवत्तानिश्चयाभावात् प्रातिपदिकसंज्ञाभावे, "अपदं न प्रयुञ्जीत" इति भाष्यकारेष्ट्या स्मृत्युक्तनिषेधेन च समासपदानां प्रयोग एव न स्यात्।



**समासे प्रातिपदिकत्वोपपादनाय प्रस्तावितोपायान्तरस्य निरासः –**

इदानीं नैयायिकः समासे शक्तिमस्वीकुर्वन्नेव प्रकारान्तरेण समासे पदत्वसाधनार्थं प्रयतते –

तथा ह्यत्र **नैयायिकः** – अर्थवदधातुरप्रत्ययः प्रातिपदिकम् कृत्तद्धितसमासाश्च इति सूत्रद्वयेन प्रातिपदिकसंज्ञा विहिता, तत्स्थाने तिप्तस्झीत्यत्र तीत्यारभ्य स्वौजसमौट्छस् इत्यादिसूत्रे ङ्योस्सुप् इत्यत्र पकारपर्यन्तं तिप् इति भाष्याद्यादृतं प्रत्याहारमाश्रित्य तद्भिन्नस्य "अतिप्प्रातिपदिकम्" इति न्यासेन सुबन्त-तिङन्तभिन्नस्य प्रातिपदिकसंज्ञा विधातुं शक्या, "समासश्च" इति न्यासान्तरमपि करणीयम्, समासस्यापि तिङन्त-सुबन्तभिन्नत्वात् आद्येनैव न्यासेन प्रातिपदिकसंज्ञासिद्धौ न्यासान्तरारम्भः नियमार्थः भवति, अतः गुरुभूतेन सूत्रद्वयकरणेन किमपि विशिष्य साध्यं नास्ति। अतो गुरुभूतं सूत्रद्वयं न करणीयमिति सिद्धमिति।

**अत्र वैयाकरणस्य समाधानम्** – भवदुक्तन्यासरीत्या प्रत्येकं वर्णानां सुबन्ततिङन्तभिन्नत्वात् तत्रापि प्रातिपदिकसंज्ञा स्यात्, ततः सुबाद्युत्पत्तिः स्यात्, तद्वारणार्थं अर्थवत् इत्यपेक्षितमेव। तव मते समासे विशिष्टशक्त्यभावात् तिबन्तभिन्नत्वेऽपि सुबन्तभिन्नत्वेऽपि अर्थवत्त्वाभावात् प्रातिपदिकसंज्ञायाः अप्राप्त्या विध्यर्थमेव समासश्च इति न्यासान्तरमपीति नियमार्थत्वाभावात् वाक्यस्य सञ्ज्ञा दुर्वारा। तादृशपदसमुदाये प्रातिपदिकसंज्ञारूपकार्यविधानमेव समासे अर्थवत्त्वस्यानुमापकम्, समासोऽर्थवान् प्रातिपदिकत्वात्, यन्नार्थवत् तन्न प्रातिपदिकम् यथा – भू सत्तायाम् इत्यादौ अनुकार्यानुकरणयोरभेदविवक्षया अर्थवत्त्वाभावात् न प्रातिपदिकसंज्ञा, इत्यनुमानस्वरूपम्।

**व्यपेक्षावादिमते दूषणान्तराणि -**

क) समासे एकार्थीभावस्य = एकार्थोपस्थितिजनकत्वरूपस्य स्वीकारे एव अवयवानां निरर्थकत्वात् तत्र विशेषणाद्यन्वयः न भवतीति सविशेषणानां वृत्तिर्न इत्यादिन्यायसिद्धम्, तथैव पदार्थः पदार्थेनान्वेति इत्यादिव्युत्पत्तिरपि सिद्धा, तव तु व्यपेक्षासामर्थ्यात् सर्वमिदं वाचनिकमेवेति गौरवम्।



ख) व्यपेक्षावादिभिः भवद्भिः दण्डिनमानय इत्यादौ दण्डसम्बन्धिनः पुरुषस्य

आनयनक्रियायां कर्मत्वमिष्टम्, न तु दण्डे अतः प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वमिति न्यायस्याश्रयणं कृतं वर्तते ।

तन्न सम्यक् । उपकुम्भम्, अर्धपिप्पली इत्यादौ प्रत्ययस्य सन्निहितपदार्थगतस्वार्थबोधकतेति वक्तुमशक्यत्वात्, उपकुम्भ इत्यादिपदोत्तरं विभक्तिप्रत्ययस्य पूर्वपदार्थे असन्निहिते अन्वयात् व्यभिचाराच्च । अस्माभिस्तु पूर्वोक्तस्थले दोषवारणाय प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम् इति व्युत्पत्तिरङ्गीक्रियते, दण्डिन् इत्यत्र तद्धितप्रत्ययविशिष्टस्यैव प्रकृतित्वात्, विशिष्टस्यैव अर्थवत्त्वात् तत एव विभक्तिप्रत्ययस्य उत्पत्तेः न दोषः ।

ग) किञ्च भवद्भिः राजपुरुष इत्यत्र राजपदे लक्षणा उक्ता, सा सम्बन्धिनि सम्बन्धे वा इति प्रश्नविकल्पः तिष्ठति । सा आद्ये विकल्पे सम्बन्धिनि वक्तुं न शक्या । विवरणवाक्येन = राज्ञः पुरुष इति विग्रहेण, विरोधात् । वृत्तिसमानार्थकवाक्यस्यैव विग्रहत्वात्, वृत्तिविग्रहयोः समानार्थकतेति सिद्धान्तात् । अन्यथा शक्तिनिर्णयः न स्यात् ।

नापि द्वितीये सम्बन्धे सा वक्तुं शक्या । राजसम्बन्धरूपपुरुष इत्यन्वयप्रसङ्गात्, तादृशस्यान्वयस्य अविवक्षिततत्वात् । अतः भवद्भिः समासे विशिष्टा शक्तिरङ्गीकर्तव्या, लक्षणया किमपि साधयितुं न शक्यते इति ।

**व्यपेक्षावादिनः वैयाकरणं प्रति आक्षेपः तत्समाधानञ्च -**

**अत्र व्यपेक्षावादी नैयायिकः पुनः आक्षिपति** – भवता राजपुरुष इत्यत्र राजपदे राजसम्बन्धिनि लक्षणास्वीकारे विग्रहवाक्येन सह समानार्थत्वभङ्गापत्तिः दोष इत्युक्तम् । भवतां मते क्वचित् वृत्तिविग्रहयोः समानविशेष्यप्रकारकप्रतीतिजनकत्वरूपं समानार्थकत्वं न वर्तते तद्यथा – वैयाकरणः पाचक इत्यादौ । तथा हि – वैयाकरण इति पदस्य व्याकरणमधीते वेत्ति वा इति विग्रहः । अत्र विग्रहवाक्यात् बोधः = वर्तमानकालिकम् एककर्तृकं व्याकरणकर्मकमध्ययनम् इति व्यापारमुख्यविशेष्यकबोधः । तिङन्ते "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थः प्रधानम्" इति न्यायस्य सङ्कोचादप्रवृत्तेः अत्र न कर्तृविशेष्यको बोधः । तद्धितवृत्तौ वैयाकरण

इत्यत्र बोधः = वर्तमानकालिकः व्याकरणाध्ययनकर्ता इति कर्तृविशेष्यको बोधः। अत्र वृत्ति-विग्रहवाक्ययोः विशेषणविशेष्यभावव्यत्यासरूपः समानार्थत्वभङ्गः इति स्पष्टमेव। अतः राजपुरुष इत्यादौ लक्षणास्वीकारे समानार्थत्वभङ्गापत्तिं दोषमुक्त्वा समासे विशिष्टशक्तिः अङ्गीकरणीयेति न वक्तव्यमिति।

अत्र वैयाकरणानां **समाधानम्**–

**आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम्।**
**गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः॥**

**अयमर्थः** – आख्यातम् = तिङन्तम्, तद्धितकृतोः = तद्धितान्त-कृदन्तयोः, यत्किञ्चिदुपदर्शकम् = यत्किञ्चिदर्थबोधकम्, तत्र = अलौकिकविवरणवाक्ये गुणप्रधानभावादौ = विशेष्यविशेष्यभावादौ, विपर्ययः = व्यत्यासः दृष्टः = लक्षितः।

**कारिकाया अयमर्थः** – तद्धित-कृद्वृत्त्योः अर्थबोधकं यदाख्यातम् = तिङन्तम्, तस्य विशेषणविशेष्यभावव्यत्यासः विवरणवाक्ये वृत्तौ च दृष्ट इति। तथा हि – आक्षिकः इत्यादि तद्धितान्तस्य अक्षकरणकव्यापाराश्रयः अर्थः, पाचक इत्यादि कृदन्तस्य पाकानुकूलव्यापाराश्रयः अर्थः, तथा कुम्भकार इति कृदन्तस्य कुम्भोत्पत्त्यनुकूलव्यापाराश्रय इति अर्थः, अत्र सर्वत्र आश्रयविशेष्यकः बोधः। तद्विव्रियमाणवाक्यानि तु – अक्षैर्दीव्यति, पाकं करोति, कुम्भं करोति इत्यादीनि। अत्र सर्वत्र देवनानुकूला भावना, उत्पत्त्यनुकूला भावना इत्यादिभावनाविशेष्यको बोधः। अत्र अलौकिकविग्रहवाक्ये वृत्तिजन्यबोधसमानविषयकबोधजनकत्वरूप विग्रहत्वसाधनाय ईषत् विशेष्यविशेषणभावव्यत्यासोऽङ्गीक्रियते, तेन वृत्तिविग्रहयोः समानार्थताभङ्गापत्तिरूपदोषो वारयितुं शक्यते, अतः समासादौ विशिष्टा शक्तिः अङ्गीकरणीया।

**एकार्थीभावसमर्थने युक्तिप्रदर्शनम्** - अत्र नैयायिकः आक्षिपति यत् रथन्तर इत्यादिस्थले विशिष्टशक्तिसत्त्वात् एकार्थीभावस्वीकारे रथेन तरतीति विग्रहात् रथकरणकतरणकर्तृत्वं रथिकस्यापि वर्तते अतः तस्यापि बोधो भवतु। तस्यार्थस्यापि विशिष्टत्वात्। इति चेन्न। एकार्थीभावस्वीकृतेऽपि न तादृशः बोधः। यतोऽत्र रूढि-

योगार्थमपहरति इति न्यायेन न रथिकस्य बोधः। अपितु सामविशेषस्यैव। अतः नायं दोष अस्मत्पक्षे, व्यपेक्षापक्षे तु वर्तते इति भावः।

किञ्च व्यपेक्षापक्षे राजपुरुष इत्यादौ यथा प्रत्येकपदार्थोपस्थितावाकाङ्क्षया विशिष्टार्थबोधः, तथा पङ्कजशब्देऽपि विशिष्टार्थप्रत्ययोत्पत्त्या रूढेरुच्छेदः स्यादिति यद् दूषणं तत्तु अस्माकमेकार्थीभाववादिनां विशिष्टशक्तिसाधने भूषणमेवेति। एवञ्च वृत्तिषु विशिष्टैवशक्तिः।

**अत्र नैयायिकस्य प्रश्नः** – वृत्तौ विशिष्टशक्तिस्वीकारे पङ्कजादिपदे अवयवार्थप्रतीतिः न स्यात्, कमलादिपदेभ्यः यथा पुष्पविशेषबोधः तथा समुदायशक्त्यैव पङ्कजादिपदात् पुष्पविशेषः इत्येव बोध इति वक्तव्यम् इति।

**वैयाकरणस्य समाधानम्** – "जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी" इति अभियुक्तैरुक्तत्वाद् यत्र रूढेः विरोधो वर्तते वृत्तौ तत्रैव जहत्स्वार्था अङ्गीकार्या, पङ्कजादिपदे तु अवयवार्थसंवलितसमुदायार्थः – वृत्त्यर्थः तेन अत्र अजहत्स्वार्था वृत्तिरेव। अत्र अवयवार्थसंवलितो विशिष्टार्थः पङ्कजपदस्येति विशेषः।

अवयवार्थसंवलितः विशिष्टार्थः पङ्कजपदस्येति प्रसङ्गात् शब्दस्य चातुर्विध्यं निरूप्यते। तथा हि – शब्दः चतुर्विधः - रूढः, योगरूढः, यौगिकः, यौगिकरूढश्चेति। अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेण अर्थबोधकत्वं रूढत्वम्। यथा रथन्तरम् इत्यादिशब्दाः। अत्र समुदायात् सामवेदमन्त्रविशेषबोधः, रथकरणकतरणकर्तृरूपस्य अवयवार्थस्याप्रतीतिरेव। अवयवार्थसंवलितसमुदायार्थः यत्र वर्तते तत्र योगरूढ इति व्यवहारः यथा पङ्कजादिशब्दाः, अत्र समुदायस्य पद्मरूपः अर्थः, पङ्कजनिकर्तृत्वरूपस्य अवयवार्थस्यापि रूढ्यर्थेन सहाविरोध इति। अवयवशक्त्यैव अर्थबोधकत्वम् – यौगिकत्वम्। यथा – पाचकः, पाठक इत्यादि पाककर्ता इति कर्त्रर्थे पच्धातोः ण्वुल् प्रत्ययः। अवयवशक्त्या समुदायशक्त्या च अर्थबोधकत्वम् यस्मिन् शब्दे सः यौगिकरूढशब्दः। मण्डप इत्याद्युदाहरणमत्र मण्डनपानकर्तृपरः, गृहविशेषपरोऽपि मण्डपशब्द उदाहरणं भवति।



**व्यपेक्षापक्षे दूषणं वृत्तौ शक्तिसाधकमिति निरूपणम् -**

अधुना व्यपेक्षासामर्थ्यदूषणं विशिष्टशक्तिसाधकमिति निरूपयितुं दीक्षितकृत-कारिकोपन्यासः । तद्धि **समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् । अस्यायमर्थः** – पङ्कजादिशब्दे योगार्थमात्राङ्गीकारे शैवलादेरपि ततः बोधः स्यात्, अतः अवयव-शक्त्यतिरिक्ता पद्मत्वावच्छिन्ननिरूपिता समुदायशक्तिर्यथाङ्गीक्रियते तथा वृत्तावपि समुदाये शक्तिः स्वीकार्या इति ।

एकार्थीभावस्वीकारे लाघवं च वर्तते –

**बहूनां वृत्तिधर्माणां वचनैरेव साधने ।**
**स्यान्महद्गौरवं तस्मात् एकार्थीभाव आश्रितः ॥ इति**

**अयमर्थः** - वृत्तेः धर्माः = विशेषणस्य असम्बन्धः, लिङ्गसंख्याद्यसम्बन्धश्च, विशेषणवतां पदानां वृत्तिः न भवति, इत्यादयः । व्यपेक्षासामर्थ्याङ्गीकारे ते सर्वेऽपि धर्माः सविशेषणानां वृत्तिर्न इत्यादिभिः वचनैः साध्याः । एकार्थीभावरूपविशिष्ट-शक्तिस्वीकारे ते धर्माः समेऽपि तन्महिम्ना स्वतः सिद्धाः भवन्तीति तदर्थे वचनानि न करणीयानीति लाघवम् । तस्मात् व्यपेक्षासामर्थ्यं वाक्ये एव । वृत्तौ तु एकार्थी-भाव इति च व्यवस्था भाष्यकारसम्मता । तदुक्तं समर्थसूत्रभाष्ये – किं समर्थन्नाम – पृथगर्थानामेकार्थीभावः समर्थवचनम् । क्व पुनः पृथगर्थानि क्व एकार्थानि – वाक्ये पृथगर्थानि राज्ञः पुरुष इति । समासे पुनः एकार्थानि राजपुरुष इति ।किञ्च व्यपेक्षा-पक्षे दूषणान्तरमपि वर्तते–

**चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।**
**कर्तव्यं ते न्यायसिद्धं त्वस्माकन्तदिति स्थितिः ॥ इति ।**

व्यपेक्षासामर्थ्यस्वीकारे वाक्ये इतरेतरयोगाद्यर्थं प्रयुज्यमानचकारादिनिपातानां वृत्तौ निषेधः वचनेन कर्तव्यः, तत्र पदानां स्वार्थमात्रबोधकत्वात् । यथा घटश्च पटश्च इ-त्यत्र वृत्तौ साहित्यसहविवक्षाद्योतकचकारनिषेधः वक्तव्यः, घन इव श्याम इत्यादौ सादृश्यद्योतकः इव शब्दः वाक्ये वर्तते, तस्य वृत्तौ घनश्याम इत्यादौ निषेधो वचनेन वक्तव्यः । अस्माकं तु एकार्थीभावमहिम्नैव साहित्याद्यवच्छिन्ने एव शक्तिस्वीकारात् तेषामर्थानां न्यायतः सिद्धः उक्तार्थानामप्रयोग इति न्यायात् वृत्तौ चादीनामप्रयोग

एव ।

तथा बहुव्युत्पत्तिभञ्जनम् = अषष्ठ्यर्थबहुव्रीहौ प्राप्तोदक इत्यादौ व्यपेक्षासामर्थ्याङ्गीकारे पदानां स्वार्थमात्रे स्थितानाम् आकाङ्क्षादिवशादन्वये कृते प्राप्तिकर्त्रभिन्नमुदकमित्यर्थे ज्ञाते तत्सम्बन्धिग्रामे लक्षणायामपि उदककर्तृकप्राप्तिकर्मग्राम इत्यर्थस्याऽलाभे, प्राप्तेत्यत्र क्तप्रत्ययस्य गत्यर्थाकर्मक इत्यादिसूत्रेण विहितस्य कर्त्रर्थकस्य कर्मण्यर्थे लक्षणायां स्वीकृतायां नामार्थयोरभेदः संसर्ग इति न्यायादुदकाभिन्नं प्राप्तिकर्म इत्यर्थः स्यात्। उदककर्तृकप्राप्तिरित्यर्थे तु नामार्थयोरभेदान्वय इति व्युत्पत्तेर्भङ्गः स्यादिति दोषः। एकार्थीभावस्वीकर्तॄणामस्माकं मते तु वृत्तौ व्यपेक्षानङ्गीकारात् समासस्यैकपदरूपत्वाद् विशिष्टार्थबोधकत्वाच्च नामार्थद्वयाभावान्न व्युत्पत्तिभञ्जनं न वा कश्चिदनुपपत्तिलेश इति सर्वं सुस्थम्।

एवमनेन प्रबन्धेन समासे विशिष्टशक्तिस्वीकारः एकार्थीभावरूपः भाष्यकारादिसम्मतः इति भाष्यादिप्रामाण्यप्रदर्शनपुरस्सरं सङ्ग्रहेण प्रत्यपादि।

॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ
समासशक्तिसिद्धान्तनिरूपणम् ॥

# अथ निपातार्थसिद्धान्तनिरूपणम्

अथेदानीं निपातानां द्योतकत्वं वाचकत्वं वाऽर्थस्येति निर्णयाय तद्विषयकसिद्धान्त उपस्थाप्यते। अत्रेदं संक्षेपेण ज्ञातव्यम् – (१) शाब्दिकाः धातूनामेव वाचकत्वं निपातास्तु तत्तदर्थस्य द्योतकाः। उपसर्गाणां येन हेतुना द्योतकत्वं तेनैव हेतुना तदतिरिक्तनिपातानामपि द्योतकत्वमेवेति दीक्षितादयो वैयाकरणाः। निपातानां च केषाञ्चित् वाचकत्वमपि।

(२) धातोरतिरिक्ततया यः अधिकार्थः प्रतीयते स निपातानामिति स्वीकृत्य तद्विपरीततया नैयायिकाः उपसर्गाणां द्योतकत्वं तदतिरिक्तनिपातानां वाचकत्वमिति अभिप्रयन्ति।

(३) अन्ये केचित् उपसर्गाणां निपातानां च वाचकत्वमेवेति पक्षान्तरमपि स्वीकुर्वन्ति।

एवञ्च पक्षत्रये स्थिते कतमः पक्षः ज्यायानिति विस्तरेणात्र विचार्यते।

**निपातानां द्योतकत्वनिर्णये शाब्दिकमतम् –**

'अनुभूयते सुखम्' 'साक्षात्क्रियते गुरुः' इत्यादौ निपातानां द्योतकत्वेन अनुभवसाक्षात्काररूपफलयोर्धात्वर्थत्वेन सकर्मकत्वम्। कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वमिति निष्कृष्टमतेऽपि फलाश्रयतया कर्मसंज्ञकस्य धात्वर्थफले एवान्वयौचित्येन द्योतकत्वमावश्यकम्।

**अयमर्थः** – नैयायिकाः उपसर्गाणां द्योतकत्वं निपातानां च वाचकत्वमिति वैषम्यं प्रकटयन्ति। अत्र निपाता इत्युक्तेः "चादयोऽसत्त्वे" (पा.सू. १-४-५७) इति सूत्रोक्ताः अद्रव्यार्थाः चादयः, "प्रादयः" (पा.सू. १-४-५८) इति सूत्रोक्ता अद्रव्यार्थाः प्रादयश्च गृह्यन्ते। क्रियायोगे तु एषां प्रादीनामुपसर्गसंज्ञा विहिताः। तत्र यथा

शाब्दिका उपसर्गाणां द्योतकत्वमभिप्रयन्ति तथैव नैयायिका अपि। परन्तु निपातविषये तु ते धातोरतिरिक्ततयाऽत्राधिकार्थस्य प्रतीतेः सोऽर्थः निपातानामिति वाचकत्वं हि तेषामिति साधयितुं प्रयतन्ते। तन्निराचिकीर्षयोच्यते यत् यदि निपातानां द्योतकत्वं न स्यात् तर्हि अनुभूयते सुखम्, साक्षात्क्रियते गुरुः इत्यादौ धातोः सकर्मकत्वमादाय कर्मणि लकारो न स्यात्।

अत्रैवं पक्षत्रयं सम्भवति – अनुभूयते सुखम्, साक्षात्क्रियते गुरुः इत्यादौ प्रतीयमानानुभवसाक्षात्काराद्यर्थनिरूपिता शक्तिः (१) धातोः, (२) उपसर्गस्य (३) उपसर्गविशिष्टधातोः वा।

तत्र न तावदाद्यस्य। तथा सति उपसर्गरहिते भवतीत्यादावपि अनुभवादिरूपार्थस्य प्रतीतिः स्यात्। न च भवति।

न द्वितीयस्य। अनुभवरूपार्थस्य उपसर्गार्थत्वे तु तस्याः अप्रकृत्यर्थतया तत्राख्यातार्थस्यान्वयो न स्यात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः। प्रत्यया हि प्रकृत्यर्थेनान्वितं स्वार्थं बोधयन्ति इति तदर्थः। एवमेव अनुगच्छतीत्यादावपि अनुभवादिरूपार्थस्य प्रतीतिश्च स्यादित्यपि दोषः अस्मिन् पक्षे।

तृतीयस्यापि न। विशिष्टानुपूर्व्याः शक्ततावच्छेदकत्वे विनिगमनाविरहादव्यवहितोत्तरत्वसम्बन्धेन अनुविशिष्टभूशब्दस्य अव्यवहितपूर्वत्वसम्बन्धेन भूशब्दविशिष्टस्य अनोः वा वाचकत्वकल्पने गौरवं भवति, यत् अनुविशिष्टस्य भूशब्दस्य उत भूविशिष्टानु'इत्यस्य इत्यत्र कस्यचित् एकस्य वाचकत्वे दृढतरयुक्त्यभाव इत्यर्थः। किञ्च विशिष्टस्य प्रकृतित्वाभावेन तदर्थे प्रत्ययार्थान्वयाऽनापत्तिरूपदोषोऽपि भवति।

तेनानुभवाद्यर्थः धातोरेव उपसर्गस्तु तस्य द्योतक इति निष्कर्षः। अत एव अनुभवसाक्षात्काररूपफलवाचकत्वेन कर्मणि लडादिव्यवस्था सिद्ध्यतीति। एवञ्च पूर्वोक्तरीत्या निपातानां द्योतकत्वसिद्धेः किं नाम द्योतकत्वमिति जिज्ञासायां तल्लक्षणमुच्यते। तथा हि –



**द्योतकत्वस्वरूपम् –**

**"द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वम्"** इति। अत्र स्वं नाम द्योतकत्वेनाभिमतम् उपसर्गादिपदं, तत्समभिव्याहृतं नाम तेन सहोच्चारितं धातुपदं, तन्निष्ठा या वृत्तिः = अनुभवसाक्षात्काराद्यर्थनिरूपिता, तस्याः उद्बोधकत्वं निपातानामिति कृत्वा लक्षणसमन्वयः।

क्वचित् हि **"क्रियाविशेषाक्षेपकत्वं द्योतकत्वम्"** इति। यथा 'प्रादेशं विलिखति' इत्यादौ 'वि'-इति मानक्रियाक्षेपकः। प्रादेशं विमाय = परिच्छिद्य लिखति इत्यर्थः। अत्र प्रादेशस्य लेखनकर्मत्वासम्भवेन कर्मकारकविभक्तेः लिखति इत्यनेन योगाभावात् वि-इत्यनेन मानक्रियाऽऽक्षिप्यते। तेन विलिखति इत्यस्य पूर्वोक्तः विमाय लिखति इत्यर्थः उपपद्यते, प्रादेशस्य च कर्मत्वेनाक्षिप्तक्रियायामन्वयः। एतादृशस्य क्रियाविशेषाक्षेपकत्वरूपद्योतकत्वस्वीकारे प्रमाणमप्यस्ति। भाष्यप्रदीपे "अथ शब्दानुशासनम्" इत्यत्र अथशब्दस्य क्रियाक्षेपकत्वं कैयटेनोक्तम्। यदि क्रियाक्षेपकत्वरूपद्योतकत्वं न स्यात् तर्हि कैयटोक्तस्य असङ्गतिः। तत्र हि प्रदीपे – "अनेकक्रियाविषयस्यापि शब्दानुशासनस्य प्रारभ्यमाणताऽथशब्दसन्निधानेन प्रतीयते। तत्रोद्योतकारः – एतावतैव द्योतकत्वमिति भावः" इत्यादिः। विलिखति, अथ शब्दानुशासनमित्यादिषु स्वसमभिव्याहृतत्वादिरूपद्योतकत्वस्याभावात् क्रियाक्षेपकत्वरूपद्योतकत्वस्य स्वीकारः।

क्वचित्तु पूर्वोक्तोभयरूपद्योतकत्वस्यासम्भवात् **"सम्बन्धपरिच्चछेदकत्वं द्योतकत्वम्"** इति स्वीक्रियते। यथा कर्मप्रवचनीयानाम्। इदं हि "कर्मप्रवचनीयाः" इति भाष्यानुरोधेन। तत्र हि भाष्ये – **"कर्म = क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः, के पुनस्तथा? ये सम्प्रति क्रियान्नाहुः। येऽप्रयुज्यमानस्य क्रियामाहुस्ते कर्मप्रवचनीयाः"** इत्यन्वर्थसंज्ञात्वमुक्तम्। तदेव वाक्यपदीयेऽपि कथितम्–

**क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः।**
**नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः॥ इति।**(वा.प. २/२०४)

अनेन भाष्येण 'क्रियामाहु'रित्यत्र क्रियापदं क्रियासम्बन्धपरमिति ज्ञायते। विशिष्टस्य न वाचकतवमिति तृतीयकल्पं इदमपि ज्ञातव्यं यत् उपसर्गसहितस्य धा-

तुत्वे किं बाधकमिति चेत् – 'अनुभू'इत्यादिविशिष्टस्य धातुपाठे अपाठात् न धातुत्वम्। किञ्च विशिष्टस्य धातुत्वे अडाद्यव्यवस्था च स्यात्। **अयं भावः** – यदि विशिष्टस्य धातुत्वमङ्गीक्रियेत तदा तस्यैव अङ्गसंज्ञायां "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति सूत्रेण उपसर्गात् प्रागेव अडागमः स्यात्, एवमेव हलादिधातुनाम् अप-अनु-उप-इत्याद्यजाद्युपसर्गयोगे विशिष्टस्य धातुत्वात् अजादित्वापत्तिः तेन तत्रापि "आडजादीनाम्" इत्यनेन आडागमश्च स्यात् क्वचित्। अपि च "लिटिधातोरनभ्यासस्य" इत्यनेन विधीयमानं द्वित्वमपि विशिष्टस्य प्रथमैकाज्भागस्य भवेत् तेन चापद्येत महदनिष्टम्। तेन केवलस्यैव धातुत्वं निपातोपसर्गाणां तु द्योतकत्वमेवेति सिद्धम्।

**निपातानां वाचकत्वनिर्णये तार्किकमतम्** –

तार्किकास्तु उपसर्गाणां द्योतकत्वं तदितरनिपातानां वाचकत्वमिति अङ्गीकुर्वन्ति। तत्र कोशप्रमाणञ्च प्रदर्शयन्ति "साक्षात्प्रत्यक्षतुल्ययोः" इति। एवमेव नमः पदेन 'देवाय नमः' इत्यादौ नमस्कारार्थस्य, दानावसरे 'गवे नमः' इत्यत्र पूजार्थस्य प्रसिद्धत्वमिति।

**अयं भावः** – प्रत्यक्षतुल्ययोरित्यत्र सप्तम्या वाचकत्वेन प्रत्यक्षतुल्ययोर्वाचकः साक्षाच्छब्द् इति कोशात् गम्यते। अत एव कोशे वाचकानामेव पाठ इत्युक्तिरपि सङ्गच्छते। निपातानां वाचकत्वादेव नमः पदस्यार्थभेदः देवाय नमः, गवे नमः इत्यादौ।

**अत्र नैयायिकं प्रति प्रश्नः** – "साक्षात्क्रियते गुरुः" इत्यादौ कर्मणि लकारो न स्यात्, तथा हि केवलकृञ्धातोः सकर्मकत्वेऽपि साक्षात्कारार्थे सकर्मकत्वाभावः, स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वलक्षणस्य असत्त्वात्। यतः साक्षात्कारादिफलं निपातवाच्यम्, न तु धातुवाच्यम्। सकर्मकत्वं च तत्रैव यत्र फलं धातुवाच्यं स्यात्। एवञ्च निपातवाच्यस्य साक्षात्काररूपफलस्य आश्रयत्वं गुरोः न सम्भवति इत्यतः तत्र लकारो न स्यात्।

**नैयायिकस्योत्तरम्** – अस्माकं मते निपातानां वाचकत्वेऽपि 'साक्षात्क्रियते गुरुः' इत्यादौ कर्मणि लकारो भवत्येव। यतः अस्मन्मते सकर्मकत्वं हि "स्व-

स्वसमभिव्याहृतनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वम्" इति। अत्र स्वं = धातुः, स्वसमभिव्याहृतः = धातुसमभिव्याहृतः निपातः, तदन्यतरस्य अर्थः यत् फलं, तादृशफलव्यधिकरणव्यापारवाचकत्वम्। एवञ्च प्रकृते साक्षात्काररूपार्थस्य निपातवाच्यत्वेऽपि न धातोः सकर्मकत्वहानिः, न वा कर्मणि लकारानुपपत्तिः।

**पुनः प्रश्नः** – एवमपि कर्मत्वं नाम धात्वर्थफलाश्रयत्वमित्येव। तादृशधात्वर्थफलाश्रयत्वरूपकर्मत्वस्य अत्र असत्त्वात् कथं गुरोः कर्मत्वमिति? यतोऽत्र यत् फलं तन्निपातवाच्यं न तु धातुवाच्यम्।

**अत्रोत्तरम्** – कर्मत्वञ्चात्र सकर्मकत्ववदेव स्वीक्रियताम्। तथा हि – "स्वस्वसमभिव्याहृतनिपातान्यतरार्थफलशालित्वं कर्मत्वम्" इति। अत्रापि स्वं नाम धातुः, धातुसमभिव्याहृतं नाम निपातः तदन्यतरवाच्यं यत् फलम्, तच्छालित्वमिति गुरोः तादृशफलशालित्वात् उपपद्यते एव गुरोः कर्मत्वम्।

**तार्किकमतखण्डनम्** –

पूर्वोक्तरीत्या तार्किकैः यथा निपातानां वाचकत्वं समर्थितम्, तत्समर्थनाय च सकर्मकत्व-कर्मत्वञ्च यथा परिष्कृतं, तदयुक्तम्। तथा हि – उपसर्गाणां द्योतकत्वं तदितरनिपातानां वाचकत्वम्, अत्र वैषम्ये बीजं किमपि नास्ति। प्रादयो हि क्रियायोगे उपसर्गसंज्ञका भवन्ति। एतावदेव तयोरन्तरम्। समानप्रकृतिकानां केषाञ्चिदर्थद्योतकत्वमितरेषां तद्वाचकत्वमिति न युक्त्या प्रतिपद्यते।

किञ्च अनुभूयते इत्यनेन साक्षात्क्रियते इत्यस्य समत्वमेव, न तत्र भेदः। यथा अनुभूयते इत्यत्र अनुभवरूपार्थः धातोरेव न तु अनु इत्यस्य, तथैव साक्षात्काररूपार्थोऽपि धातोरेव। निपातस्य वाचकत्वस्वीकारे तु कर्मणि लकारो न स्यादिति पूर्वमेव निरूपितमित्यतः उभयोः समत्वमित्यभिप्रायः।

अपि च नामार्थधात्वर्थयोः भेदेन साक्षादन्वयाभावात् निपातार्थधात्वर्थयोः अन्वयस्यैव असम्भवः। प्रकृते साक्षात्काररूपफलं निपातार्थः व्यापारमात्रं कृञ्धात्वर्थः। तथा च फलस्यानुकूलत्वसम्बन्धेन व्यापारेऽन्वयेन साक्षात्कारानुकूलो व्यापार

इति बोधो न स्यात्। अत्र विभक्त्यर्थद्वारा तु अन्वयो भवत्येव परन्तु साक्षात् न भवति। नामार्थधात्वर्थयोः साक्षाद्भेदेन अन्वयोऽव्युत्पन्नः इति व्युत्पत्तौ निपातेतरत्वेन संकोचे तु न मानम्। एवञ्च नामार्थधात्वर्थयोः साक्षाद्भेदेन अन्वयोऽव्युत्पन्नः इति व्युत्पत्त्या साक्षात्काररूपनिपातार्थस्य व्यापाररूपकृञ्धात्वर्थे अनुकूलत्वरूपभेदसम्बन्धेन अन्वयो न भवितुमर्हति इति अभिप्रायः। यदा तु अन्वयो नास्ति तदा साक्षात्कारानुकूलव्यापार इति बोधोऽपि न। यदि च तथाऽन्वयो अभ्युपगम्येत तर्हि तण्डुलं पचति इतिवत् तण्डुलः पचति इति प्रयोगस्यापि कर्मत्वेनान्वये प्रामाण्यता स्यात्।

किञ्च स्व-स्वसमभिव्याहृतनिपातान्यतरार्थफलशालित्वं कर्मत्वम् इति कर्मलक्षणकथनेन निपातार्थफलाश्रयत्वेऽपि धात्वर्थान्वयं विना कर्मत्वस्य अनुपपत्तिः। अस्यायमाशयः – प्रयागात् काशीं गच्छति देवदत्ते उत्तरदेशसंयोगानुकूलव्यापारप्रयोज्यविभागरूपफलाश्रयत्वात् प्रयागस्यापि कर्मत्वं प्राप्नोति, तद्वारणाय व्यापारप्रयोज्यफलशालित्वं कर्मत्वमित्यत्र फले धात्वर्थविशेषणं देयम्, अर्थात् कर्मत्वमत्र धात्वर्थव्यापारप्रयोज्यधात्वर्थफलाश्रयत्वं इति। प्रकृते साक्षात्काररूपार्थस्य निपातार्थतया धात्वर्थत्वाभावात् कर्मत्वं नोपपद्यते। अनेन साक्षात्काररूपार्थः निपातवाच्य इति समर्थनाय तार्किककृतकर्मत्वलक्षणपरिष्कारः प्रत्युक्तः। अस्मन्मते निपातानां द्योतकत्वात् साक्षात्कारादिरूपार्थस्य धातुनैव प्रतिपाद्यत्वात् तदाश्रयस्य कर्मत्वं सूपपन्नम्।

**भूषणकारमतानुवादः –**

यदपि केचिच्छाब्दिकाः – निपातानां वाचकत्वे 'शोभनः समुच्चयः' इतिवत् 'शोभनश्च' इत्यापत्तिः। 'घटस्य समुच्चय' इतिवत् 'घटस्य च' इत्यापत्तिः। घटं पटञ्च पश्य इत्यादौ षष्ठ्यापत्तिश्चेत्याहुः।

**अस्यायम्भावः** – भूषणकारादयः शाब्दिकाः निपातानां वाचकत्वमिति नैयायिकमतनिराकरणाय 'शोभनः समुच्चयः' इतिवत् 'शोभनश्च' 'घटस्य समुच्चय' इतिवत् 'घटस्य च' इत्यापत्तिं प्रदर्शयन्ति। तत्र हि समुच्चयशब्दस्य समुच्चयार्थवाच-

कत्वात् यथा शोभनरूपविशेषणान्वयो भवति। तथैव निपातानां वाचकत्वे सति च शब्दोपस्थाप्ये शोभनान्वय आपद्येत। चशब्दोपस्थाप्यस्य विशेष्यतया भानं स्यादित्यर्थः। एवमेव निपातानां वाचकत्वे नामार्थयोः विभिन्नविभक्तिकयोः भेदेनान्वये घटपटयोः समुच्चय इतिवत् घटस्य च पटस्य च इत्येव स्यात्। अन्यथा अन्वयः नोपपद्येत। घटं पटं च पश्य इत्यादौ घटस्य चकारेण सहान्वयात् क्रियया सहान्वयाभावेन घटपदात् षष्ठीविभक्तिप्राप्तिरित्याद्यापत्तयः।

**परमलघुमञ्जूषाकृद्रीत्याभूषणकारमतखण्डनम् –**

उपर्युक्तभूषणकारमतखण्डनाय परमलघुमञ्जूषाकृद् कथयति – शब्दशक्तिस्वभावेन निपातैः स्वार्थस्य परविशेषणत्वेनैव बोधनेन विशेषणान्वयाप्रसङ्गात्। षष्ठ्यप्राप्तेश्चेत्यादि।

**अयं भावः** – निपातशब्दैः प्रतीयमानः अर्थः सहैव विशेषणतया एव भासते शब्दशक्तिस्वभावात्। अतः चशब्दार्थे शोभनपदार्थस्य विशेषणतया अन्वयो नैव सम्भवति। नापि घटपदार्थस्यान्वयः चार्थेन भवति। यदा सिद्धमेतत् निपतार्थः सर्वदा विशेषणतयैव भासते तर्हि तत्र विशेषणान्तरस्य अन्वयासम्भवेन षष्ठ्यपि न। अतः अनेन निपातार्थस्य विशेष्यतया भानं स्यात्, षष्ठ्यापत्तिश्चेति भूषणकारोक्तापत्तिद्वयमपि अयुक्तमेव।

किञ्च घटं पटं च पश्य इत्यादावपि घटस्य दृशिक्रियायामेवान्वयः। तेनैव च तत्र द्वितीया च सिध्यति। क्रियायामन्वयाभावेन तु दृशिक्रियानिरूपितकर्मत्वाभावात् तत्र द्वितीयैव न स्यात्। अत एव घटसमुच्चयवन्तं पटं पश्य इति बोधः। ततः समुच्चयस्य प्रतियोग्याकाङ्क्षायाः सन्निहितत्वात् घटः प्रतियोगी भवति। घटस्य समुच्चये प्रतियोगित्वेन अन्वयः। अत्र पूर्वमेव कर्मत्वनिरूपिकाद्वितीयायाः सत्त्वात् षष्ठी न। एवमेव पटे समुच्चयस्य अनुयोगितानिरूपकत्वसम्बन्धेनान्वयो भवति, न तु पटस्य समुच्चये अन्वयः। पटस्य समुच्चये अन्वये सत्येव भेदनिरूपिका षष्ठी। चशब्दद्योत्यस्य समुच्चयस्य असत्त्वभूतत्वात् तत्र लिङ्गसंख्याद्यन्वयाभावात् षष्ठ्याः अप्राप्तिरेवेत्यर्थः। अनेन सिद्धं यत् पटस्य न विशेषणत्वं, षष्ठी तु विशेषणवाचकादेव।

अत एव राज्ञः पुरुष इत्यत्र राजपदोत्तरषष्ठी। नामार्थयोः अभेदान्वयव्युत्पत्तिस्तु निपातातिरिक्तविषया। तेन नामार्थयोः अभेदान्वयस्तु भवति यतः प्रातिपदिके लिङ्गसंख्याद्यन्वयो भवति, निपाते तु न तथा। अनेन निपातानां प्रातिपदिकत्वमेव न। अत एव नामार्थयोः अभेदान्वयः इति व्युत्पत्तिनिपातातिरिक्तविषया इति स्वीकार्यम्।

**द्योतकत्वेऽपि निपातानां सार्थकत्वप्रतिपादनम्** –

एतावता निपातानां द्योतकत्वं निरूपितम्। तथा सति तेषां पृथगर्थाभावेनार्थवत्त्वाभावात् प्रातिपदिकत्वं न स्यात्। तन्मनसि निधाय -

**अत्र प्रश्नः** – एवमुक्ते चादिनिपातानां द्योतकत्वेनार्थवत्त्वाभावात् प्रातिपदिकत्वानापत्त्या पदत्वाभावेन वा भवति वा गच्छति इत्यादिवाक्येषु "तिङ्ङतिङः" इति निघातो न स्यात्।

**अत्रोत्तरम्** – निपातानामर्थवत्त्वमपि द्योत्यार्थमादायैव। शक्तिलक्षणाद्योतकताऽन्यतमसम्बन्धेन बोधकत्वस्यैवार्थवत्वात्। अत एव अर्थवत्सूत्रे शक्तिलक्षणान्यतरूपवृत्त्यर्थबोधजनकत्वरूपार्थवत्त्वस्य निवेशः। अन्यथा निपातेषु शक्तिलक्षणान्यतरवृत्त्यर्थबोधजनकत्वरूपार्थवत्त्वस्य असत्त्वात् तेषामर्थवत्वं न स्यात्। अनेन द्योतकत्वेनापि अर्थवत्त्वं सिध्यति, न तु वाचकत्वेनैव इति आयातम्। एतदर्थमेव व्यञ्जनावृत्तिस्वीकारश्च। तदुक्तमासीत् व्यञ्जनानिरूपणावसरे अत एव निपातानां द्योतकत्वं स्फोटस्य च व्यङ्ग्यता सिद्धेति।

एवमपि उत्तरपदार्थप्रधानः तत्पुरुषः इति लक्षणासङ्गतिः नञ्समासविषये, नञः वाचकत्वे तु तस्यैव प्राधान्यं स्यात्। अतः अत्रापि नञ्समासे उत्तरपदार्थस्य प्राधान्यं द्योत्यार्थापेक्षयैवेति स्वीकार्यम्। अत एवोक्तं भूषणसारेऽपि

**"नञ्समासे चापरस्य प्राधान्यात्सर्वनामता।**
**आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्यतिसर्ववत्॥" इति।**

एवञ्च 'अब्राह्मणः' इत्यादौ आरोपितब्राह्मणत्वरूपद्योत्यार्थे प्रकारतायाः सत्त्वात् नञः सार्थकत्वेन ब्राह्मणस्योत्तरपदत्वेन तत्प्राधान्यरूपतत्पुरुषसिद्धिः।

एतावता निपातानां द्योतकत्वं सार्थकत्वं च निरूपितम्। सम्प्रति उपसर्गाणां द्योतकत्वं निरूप्यते।

**उपसर्गाणामर्थद्योतकत्वप्रतिपादनम् –**

**अत्र पूर्वपक्षी –** यदि निपातानामिव उपसर्गाणामपि अर्थद्योतकत्वमेव तर्हि गतिनिवृत्तिवाचकाद् स्था धातोः 'प्रतिष्ठते' इत्यादौ कथं गत्यर्थप्रतीतिः ? उपसर्गस्य वाचकत्वे तु यो हि गत्यर्थः प्रतीयते स उपसर्गस्य इति न काचिदन्या कल्पना तत्र कर्तव्येति, उपसर्गरहितस्थाधातोश्च गतिनिवृत्तिरर्थवाचकत्वमपि अस्मिन् पक्षे न हीयते।

**अत्र सिद्धान्ती –** निपातानामिव उपसर्गाणामपि द्योतकत्वमेव। द्योतकत्वाद् 'प्रतिष्ठते' इत्यादौ तिष्ठतेरेव गतिवाचित्वम्, धातूनामनेकार्थत्वात्। प्रशब्दस्तु तदर्थगत्यादिमत्वस्यद्योतकः। स्था-धातुः गतिनिवृत्तिवाची। अतः प्रशब्दस्य द्योतकत्वे गतिवाचकत्वाभावात् कथं गतिवाचित्वमिति चेत् धातूनामनेकार्थत्वम् अस्मन्मते स्वीक्रियते। तेन यो योऽर्थः प्रतीयते सर्वोऽपि धातोरेव प्रशब्दस्तु तद्योतक इति सिद्धान्तः। धातूनामनेकार्थत्वन्तु "भूवादयो धातवः" इति सूत्रे भाष्ये स्पष्टम्। तत्र हि – "इह तर्हि व्यक्तमर्थान्तरं गम्यते तिष्ठति प्रतिष्ठते इति। तिष्ठति इति व्रजिक्रियाया निवृत्तिः प्रतिष्ठते इति व्रजिक्रिया गम्यते। तेन मन्यामहे उपसर्गकृतमेतद् येन व्रजिक्रिया गम्यते। बह्वर्था अपि धातवो भवन्तीति। तद्यथा – वपिः प्रकिरणे दृष्टः छेदने चापि वर्तते। केशश्मश्रू वपतीति। ईडिः स्तुति चोदनायाञ्चापि दृष्टः प्रेरणे चापि वर्तते। 'अग्निर्वा इतो वृष्टिम् ईट्टे मरुतोऽमुतश्च्यावयन्ति'। एवमिहापि तिष्ठतिरेव व्रजिक्रियामाह तिष्ठतिरेव व्रजिक्रियाया निवृत्तिम्"। अनेन भाष्येण धातूनामनेकार्थत्वे प्रमाणं प्रस्तुतम्। तस्य च भाष्यस्य उपसर्गाणां द्योतकत्वे एव पर्यवसानञ्च।

उपसर्गाणामर्थद्योतकत्वे प्रमाणोपन्यासः –

उपसर्गाणां द्योतकत्वादेव "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण" इति सिद्धान्तितं "सुड्कात्पूर्वः" "उपपदमतिङ्" इति सूत्र भाष्ये। तेन "प्रत्ययः" "णे-

रध्ययने" इत्यादि निर्देशाः सङ्गच्छन्ते। पूर्वमुपसर्गयोगे तु सवर्णदीर्घे उक्तनिर्देशा-सङ्गतिः। इण्-गतौ धातोः अचि निष्पन्नः प्रत्ययशब्दः। प्रति+इ+अ इत्यवस्थायां यदि पूर्वमुपसर्गयोगः स्यात्तर्हि सवर्णदीर्घे प्रती+अ इत्यवस्थायाः कथमपि प्रत्यय इति न रूपं न निष्पद्यते। एवमेव अध्ययने इत्यत्रापि अधि+इ+ल्युट् इत्यवस्थायां समानापत्तिः पूर्वमुपसर्गयोगे।

एवमेव 'उपास्यते गुरुः' इत्यादौ यदि धातुः पूर्वमुपसर्गेण युज्यते पश्चात् साध-नेन इति पक्षः तदा अडादिद्वित्वादिव्यवस्थोच्छेदः स्यात्। यदा तु धातुः पूर्वं साधनेन युज्यते पश्चात् उपसर्गेण इति पक्षः तदा कर्मणि लकारः न स्यात् असेः अकर्मक-त्वात्। उपसर्गयोगात्पूर्वं धातोः कर्मरूपसाधनान्वययोग्यार्थेन सकर्मकत्वाभावात् कर्मरूपसाधनप्रयुक्तलडादिकार्ययोगः असम्भवीत्यर्थः। तस्मात् कतरः पक्षः ज्या-यानिति अपेक्षायामुच्यते पूर्वं धातूपसर्गयोः अभिसम्बन्धमभ्यन्तरं कृत्वा धातुः सा-धनेन युज्यते इति सर्वं सुस्थम्। उपास्यते इत्यत्र उपेन सह धातोः योऽभिसम्बन्धः तस्याभ्यन्तरीकरणेन धातोः सकर्मकत्वात् कर्मणि लकारः, प्रातिष्ठतेत्यादौ तिष्ठतेः प्राक् अडागमश्च।

इमामेव व्यवस्थां मनसिकृत्य तत्र भाष्ये – "**पूर्वं धातुरूपसर्गेण युज्यते, प-श्चात् साधनेनेति। नैतत्सारम्, पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण, साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टीति, सत्यमेवेतत्। यस्त्वसौ धातूपसर्ग-योरभिसम्बन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते। अवश्यं चैतद् विज्ञेयम्, यो ह्येवं मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति तस्य 'आस्यते गुरुणा इत्यकर्मकः उपास्यते गुरुरिति केन सकर्मकः स्यात्' इति।**" अत्र साधनं = कारकं तत्प्रयुक्तकार्येण, उपसर्गेण = उपसर्गसंज्ञकशब्देनेति तद्भाष्याशयः।

धातूपसर्गयोरभिसम्बन्धमभ्यन्तरीकृत्य धातुः साधनेन युज्यत इत्यत्र हरिका-रिकापि प्रमाणम्। तथा हि–

**धातोः साधनयोगस्य भाविनः प्रक्रमाद्यथा।**
**धातुत्वं कर्मभावश्च तथान्यदपि दृश्यताम्॥**

**बुद्धिस्थादभिसम्बन्धात् तथा धातूपसर्गयोः ।**

**अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥ इति ।** यथा भाविनः साधनयोगस्य धातोः प्रक्रमात् धातुत्वं क्रमभावः च तथा अन्यदपि दृश्यताम् । तथा बुद्धिस्थादभिसम्बन्धाद् धातूपसर्गयोरभ्यन्तरीकृतो भेदः पदकाले प्रकाशते इत्यन्वयः ।

**अस्यार्थः** – यथा भाविसाधनसम्बन्धाश्रयेण क्रियावाचित्वमाश्रित्य धातुसंज्ञोच्यते यथा च सन् प्रत्यये चिकीर्षिते भावि इषिकर्मत्वमाश्रित्य उपक्रमे एव विशिष्टक्रियावाचकत्वं दृश्यताम् । धातूपसर्गयोः सम्बन्धं बुद्धिविषयीकृत्योपसर्गार्थकृतो विशेषो धातुनैवाभ्यन्तरीकृतः पदप्रयोगकाले उपसर्गसम्बन्धे सति प्रकाशते । श्रोतुरितिशेषः । उपसर्गयोगात् प्रागेव धातुनैव उपसर्गार्थविशिष्टः स्वार्थ उच्यते इति तात्पर्यम् । पूर्वं धातुः उपसर्गेण युज्यते पश्चात् साधनेनेति तु तदर्थस्य धात्वर्थान्तर्भावाद् व्यवहारः ।

**इवशब्दार्थनिरूपणम् -**

एतावता निपातसामान्यनिरूपणं कृतमासीत् सामान्यज्ञानं विशेषज्ञानं प्रति कारणमिति कृत्वा अधुना निपातविशेषार्थनिरूपणप्रसङ्गे 'इव' इति निपातस्य कोऽर्थः इति निरूप्यते ।

**तत्र चन्द्र इव मुखमित्यादौ चन्द्रपदस्य स्वसदृशेऽप्रसिद्धा शक्तिरेव लक्षणा । सा च चन्द्रनिष्ठप्रतियोगितानिरूपकसादृश्यतावतीत्यर्थः । तेन चन्द्रनिष्ठप्रतियोगितानिरूपकसादृश्यतावन्मुखमिति बोधः ।** अत्र चन्द्रपदार्थः इवपदार्थे सादृश्ये प्रतियोगितया (भेदेन) अन्वेति । सादृश्यञ्च आश्रयतासम्बन्धेन मुखशब्देऽन्वेति । इयं च लक्षणा 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इति न्यायात् । नञ्युक्तम् इवयुक्तं च पदं स्वबोध्यार्थात् भिन्नस्य स्वबोध्यार्थेन सदृशस्य च द्योतकम्, तदधिकरणम् = विषयः अर्थो वा, तस्मिन् तथा अर्थगतिः ज्ञानमित्यर्थः तन्न्यायस्य । तत्र भाष्ये "भृशादिभ्यः भुव्यच्वेर्लोपश्च हलः" इति सूत्रे अच्विशब्दार्थनिर्णयप्रकरणे वार्तिकमिदं स्मृतम् । यस्य नञ्युक्त-इवयुक्तो वा शब्दस्तच्छब्दद्भिन्ने किन्तु तत्सदृशे कार्यवान् भवति, यतो हि निपातयुक्तशब्देनतादृशः अर्थबोधः सम्पाद्यते

इत्याशयः। यथा अब्राह्मणमानय इत्यत्र ब्राह्मणभिन्नब्राह्मणसदृशक्षत्रियादिरानीयते न तु अचेतनपाषाणादिरिति। इदमेव वार्तिकं पश्चान्न्यायरूपेण प्रसिद्धिमागतम्। एतदनुसारेण इवश्दसमभिव्याहृतः शब्दः स्वभिन्नः किन्तु स्वसदृशमर्थं बोधयति लक्षणया अप्रसिद्ध्या शक्त्या वा। अत एव चन्द्र इव मुखमित्यत्र चन्द्रशब्दो हि चन्द्रसदृशार्थबोधकः इवशब्दस्तु तस्य तात्पर्यग्राहकः। **तात्पर्यग्राहकत्वञ्च** – **"स्वसमभिव्याहृतपदस्यार्थान्तरशक्तिद्योतकत्वम्"** इत्यागतम् इवनिपातस्य द्योतकत्वम्। अत्र स्वं नाम निपातः, तत्समभिव्याहृतं पदं चन्द्रादिपदं, तस्य योऽर्थः तं परित्यज्य अर्थान्तरे या शक्तिः सादृश्यार्थे तस्याः द्योतकत्वमिति लक्षणसमन्वयः।

**इवार्थविषये नैयायिकमतानुवादः तद्दूषणञ्च** –

**अत्र नैयायिकाः** – इवार्थः सादृश्यं, तत्र प्रतियोग्यनुयोगिभावेनैव चन्द्रमुखयोरन्वयोपत्तौ किं लक्षणया ? तथा च चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमिति बोधः। **अयं भावः** – नैयायिकाः चन्द्रपदस्य चन्द्र एव अर्थः। इवार्थः सादृश्यम्। तस्य च इवनिपातः वाचकः। तत्र चन्द्रस्य प्रतियोगितया मुखस्य अनुयोगितया इवार्थसादृश्येऽन्वयः भवति। तथा हि इवार्थः सादृश्यं तस्मिन् प्रतियोगितानिरूपकत्वसम्बन्धेन चन्द्रपदार्थस्यान्वयः, तस्य च आश्रयतया मुखेऽन्वयः, तेन चन्द्रप्रतियोगितानिरूपकसादृश्यवन्मुखमिति बोधः शक्त्यैव सम्पद्यते। एवञ्च लक्षणां परित्यज्य निपातानां वाचकत्वमेवाङ्गीकार्यम्।

**न्यायमतखण्डनम्** – नैयायिकोक्तं न सम्यक्। तथा हि – 'चन्द्र इव मुखं दृश्यते' 'चन्द्रमिव मुखं पश्यामि' इत्यादौ चन्द्रपदस्य मुखरूपकर्मकसामानाधिकरण्याभावात् उक्तानुक्तत्वप्रयुक्तविभक्त्यनापत्तिः षष्ठ्यापत्तिश्च। अयम्भावः – यथा हि 'चन्द्र इवमुखं दृश्यते' इत्यत्र इव शब्दः सादृश्यस्य वाचकः तदा मुखस्य चन्द्रेण समानाधिकरणता न सम्भवति यत इवशब्दवाच्यार्थसादृश्ये चन्द्रपदार्थः प्रतियोगी भवति। येन एकत्र विशेषणं नापरत्रेति नियमानुसारेण चन्द्रमुखयोः प्रतियोग्यनुयोगिभावः नैव सम्भवति। तयोः सामानाधिकरण्याभावेन तिङा चन्द्रशब्दो नैवाभिहितो भवति, येन प्रथमाविभक्तिः तत्र स्यात् कर्तरि अभिहित एव प्रथमाया नि-

यमात्। एवमेव 'चन्द्रमिव मुखं पश्यामि' इत्यत्र नापि द्वितीया स्यात् अनभिहिते कर्मणि एव द्वितीयाविधानात्। एवञ्च मुखेन सामानाधिकरण्याभावात् मुखवृत्तिककर्तृत्वकर्मत्वोक्तावपि चन्द्रवृत्तितदनुक्तत्वात् उक्तानुक्तत्वप्रयुक्तविभक्त्यानपत्तिरित्याशयः।

एतदतिरिक्तम् इवशब्दार्थभूतसादृश्यस्य प्रतियोगित्वात् चन्द्रपदार्थस्य इवशब्दार्थेन सह भेदसम्बन्धाच्च चन्द्रपदे षष्ठीविभक्तिः प्राप्नोति, यतो हि द्वयोर्नामार्थयोः भेदसम्बन्धप्रतिपादनाय साक्षादन्वयबोधस्य अव्युत्पन्नत्वात् कस्या अपि विभक्तेः आश्रयणीयतया राज्ञः पुरुष इत्यादाविवात्रापि विशेषणभुतचन्द्रशब्दे षष्ठ्येव प्राप्नोति।

**नागेशमते इवार्थः -**

सम्प्रति इवार्थविषयकं नैयायिकोक्तं निरस्य नागेशमतं प्रस्तूयते। नागेशमते इवशब्दस्योपमानताद्योतकत्वम्। उपमानत्वञ्च उपमानोपमेयोभयनिष्ठसाधारणधर्मवत्त्वेन ईषदितरपरिच्छेदकत्वम्। तद्धर्मवत्तया = उभयवृत्तिसाधारणधर्मवत्तया परिच्छेद्यत्वञ्च उपमेयत्वम्। साधारणधर्मसम्बन्धश्च क्वचिद्विशेषणतयाऽन्वेति क्वचिद्विशेष्यतया। एवं चन्द्र इवाह्लादकं मुखमित्यादौ आह्लादकोपमानभूतचन्द्राभिन्नमाह्लादकं मुखमिति बोधः। चन्द्र इव मुखमाह्लादयति इत्यादौ चोपमानभूतचन्द्रककर्तृकाह्लादाभिन्नो मुखकर्तृकाह्लादः इति बोधः। इदम् "उपमानानि सामान्यवचनैः" इत्यत्र भाष्ये स्पष्टम्।

अत्राद्ये चन्द्रस्य चन्द्रमुखोभयनिष्ठाह्लादकत्वरूपसाधारणधर्मवत्त्वेन स्वल्पभेदवन्मुखपरिच्छेदकत्वं मुखस्य आह्लादकत्वेन परिच्छेद्यत्वम्। अत्रेदमवधेयम् – यत्साधारणधर्मो हि उभयनिष्ठो भवति किन्तु उपमाने तस्याधिक्यं भवति तदपेक्षया उपमेये न्यूनतापि। साधारणधर्मसम्बन्धेनैव उपमानं हि उपमेयं बोधयति, उपमेयश्च उपमानेन बोध्यो भवति। साधारणधर्मश्च विशेषणविशेष्योभयरूपेणोपस्थितो भवति स्थानमादृत्य। यत्र हि प्रातिपदिकमस्य वाचकं तत्रायं विशेषणरूपेण यत्र तु तिङन्तपदमस्य वाचकं तदा विशेष्यरूपेण अयमुपतिष्ठते। यथा चन्द्र इव आह्ला-

दकं मुखमित्यत्र चन्द्रः आह्लादकमुखस्य विशेषणम्। एतादृशं मुखं यद्धि चन्द्रवत् आहलादकमिति बोधः। अत्र साधारणधर्मो विशेषणत्वेन वर्तते। 'चन्द्र इव मुखमाह्लादयति' इत्यत्र तु साधारणधर्मभूतः आह्लादः विशेष्यः, यस्य मुखकर्तृकः, चन्द्रकर्तृकाह्लादाद् अभिन्न इति द्वे विशेषणे। येन एतादृश आह्लादः, यस्य कर्तृ मुखं तस्माद् आह्लादाद् अभिन्नो यस्य कर्ता चन्द्र इति बोधः। इत्येतावता इवार्थो निरूपितः। सम्प्रति नञर्थः निरूप्यते।

**नञर्थः -**

नञाख्यः निपातो द्विविधः। तत्रेयं प्रसिद्धा कारिका –

**द्वौ नञौ समाख्यातौ पर्युदासप्रसज्यकौ।**
**पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्॥ इति।**

अनया कारिकया स्पष्टं यत् नञ् द्विविधः। **पर्युदासः प्रसज्यप्रतिषेधश्च**। तत्र कः पर्युदासः कश्च प्रसज्यप्रतिषेध इत्यत्रापि द्वाभ्यां कारिकाभ्यामित्थमुच्यते –

**प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता।**
**पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥**
**अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।**
**प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्॥ इति।**

एताभ्यां कारिकाभ्यां सङ्क्षेपेण द्विविधस्यापि नञः स्वरूपं प्रतिपादितम्। अत्र द्विविधनञ्मध्ये कस्य कोऽर्थ इति प्रतिपाद्यते।

**पर्युदासविचारः –**

**आरोपविषयत्वं नञ्पर्युदासद्योत्यम्। आरोपविषयद्योतकत्वञ्च नञः स्वसमभिव्याहृतघटादिपदानामारोपितप्रवृत्तिनिमित्तबोधकत्वे तात्पर्यग्राहकत्वम्।** प्रवृत्तिनिमित्तं घटत्वब्राह्मणत्वादि। तस्मात् अब्राह्मणेत्यादौ आरोपितब्राह्मणत्ववान् क्षत्रियादिरिति बोधः। अत एव उत्तरपदार्थप्राधान्यं नञ्-तत्पुरुषस्येति प्रवादः सङ्गच्छते। **अस्यायं भावः** – आरोपविषयत्वं नाम अतद्वति = तदभाववति तत्प्रकारकं ज्ञानमारोपः, तस्य आरोपितज्ञानस्य विषयत्वं नाम

विषयभावः इत्यर्थः। परिष्कृत्य एवमपि वक्तुं शक्यं यत् तदभाववन्निष्ठ-विशेष्यतानिरूपिततन्निष्ठप्रकारताकप्रतीतिविषयत्वमारोपितत्वम्। तथा च 'अब्राह्मणः' इत्यनेन ब्राह्मणत्वाभाववत्क्षत्रियादिनिष्ठविशेष्यतानिरूपित-ब्राह्मणत्वनिष्ठप्रकारताकप्रतीतिविषयीभूताऽब्राह्मणक्षत्रियादिरिति बोधः। अत्र तदभाववति = ब्राह्मणत्वाभाववति क्षत्रियनिष्ठा विशेष्यता, तन्निरूपिता या ब्राह्मणत्वनिष्ठा प्रकारता तन्निरूपिका या प्रतीतिः तत्प्रतीतिविषयभूत अब्राह्मणक्ष-त्रियादिरिति समन्वयः।

स्वसमभिव्याहृतेत्यत्र तु – स्वं नाम नञ् तत्सहोच्चारितानि यानि घटादिपदानि तेषाम् आरोपितप्रवृत्तिनिमित्त बोधकत्वे तात्पर्यग्राहकत्वम्। अब्राह्मणमित्यत्र नञा सहोच्चारितम् ब्राह्मणपदं तदारोपितप्रवृत्तिनिमित्तं ब्राह्मणत्वादि, यतः ब्राह्मणसदृश-क्षत्रियमुद्दिश्य ब्राह्मणपदं प्रयुक्तम्। अतः आरोपितब्राह्मणत्ववान् इति बोधस्तत्र। अत एव चोत्तरपदार्थप्राधान्यं नञ्तत्पुरुषस्येति प्रवादः। यतस्तत्र ब्राह्मणाद्युत्तरप-दस्यैवार्थे प्रधानता।

नञ्-तत्पुरुषे उत्तरपदार्थप्रधानताया सत्त्वादेव 'अतस्मै ब्राह्मणाय' 'असः शिवः' इत्यादौ सर्वनामकार्यम्। उत्तरपदार्थभूतसर्वनामस्य प्राधान्यात् हि तत् सि-द्ध्यति, गौणत्वे तु न स्यात्।

प्रवृत्तिनिमित्तारोपस्तु सदृशे एव भवतीति "पर्युदासः सदृशग्राही" इति प्र-वादः। पर्युदासे यः निषेधः स तु आर्थः। अत एव कारिकायामुक्तमासीत् - तत्र वि-धेरेव प्राधान्यात् यो निषेधार्थः स अर्थसम्बद्ध न तु साक्षात् नञ्-शब्देन। अन्यस्मिन् = क्षत्रियादो अन्यधर्मारोपस्तु = ब्राह्मणादेः य इतरधर्मः ब्राह्मणत्वादिः तदारोपः आहार्यज्ञानरूपः कल्पितः इत्यर्थः। बाधकालिकमिच्छाजन्यं ज्ञानं तु आहार्यमिति वृद्धाः। सादृश्यादयस्तु प्रयोगोपाधयः पर्युदासे तु आर्थिकाः अर्थाः। तदुक्तं हरिणा –

**तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।**
**अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥ इति।**

कारिकाया अर्थस्तु स्पष्ट एव। नञर्था षडिति। तदुदाहरणेन स्पष्टं भवति। तथा हि – तत्सादृश्यं गर्दभे अनश्वोऽयमित्यादौ अश्वसदृश इत्यर्थः। अभावस्तु प्रसज्यप्रतिषेधे निरूप्यते अपापम् इत्यादौ पापस्य अत्यन्ताभावादि। तदन्यत्वम् 'अमनुष्यं प्राणिनमानय' इत्यादौ मनुष्येतरं प्राणिनमित्यर्थः। तदल्पता अनुदरा कन्या इत्यादौ अल्पोदरेत्यर्थः। अप्राशस्त्यम् ब्राह्मणे अब्राह्मणोऽयमिति प्रयोगः। विरोधः असुरः अधर्म इत्यादौ सुरविरुद्धार्थस्य धर्मविरुद्धार्थस्य तत्र प्रतीतेः।

प्रायेण पर्युदासः स्वसमभिव्याहृतपदेन सह समस्तरूपेणैव भवति, क्वचित्तु समासस्यापि विकल्पदर्शनात् असमस्तेऽपि दृश्यते। तदुक्तं नागेशोपाध्यायेन – "पर्युदासस्तु स्वसमभिव्याहृतपदेन सामर्थ्यात् समस्ते एव। क्वचित्तु 'यजतिषु ये यजामहं करोति नानुयाजेषु' इत्यादौ घटः अपटो भवति इत्यर्थके घटो न पटः इत्यादौ च समासविकल्पादसमासेऽपि। अत्र अन्योन्याभावः फलितो भवति"।

**प्रसज्यप्रतिषेधः -**

**नञो द्वितीयो भेदो भवति प्रसज्यप्रतिषेधः। अयं हि समस्तोऽसमस्तश्चेति द्विविधः।** तत्र विशेष्यतया क्रियान्वयनियमात् सुबन्तेन असामर्थ्येपि "असूर्यललाटयोः दृशितपोः" इत्यादि ज्ञापकात् समासः। तदुक्तम् – "प्रसज्यप्रतिषेधो हि क्रियया सह यत्र नञ्" इति। अत्र क्रियापदं गुणस्याप्युपलक्षणमिति बहवः। अत एव नञ्-सूत्रे भाष्ये "प्रसज्यायं क्रियागुणौ ततः पश्चात् निवृत्तिं कुरुतः" इत्युक्तम्। उदाहरणन्तु 'नास्माकमेकं प्रियम्' इति। एकप्रियप्रतिषेधे बहुप्रियप्रतीतिः। एवं न सन्देहः नोपलब्धिरित्याद्युदाहरणं गुणस्य सन्देहादीनां गुणत्वात्। क्रियोदाहरणञ्च "अनचि च", गेहे घटो नास्तीत्यादि।

**अत्रेत्थं विवरणम्** – प्रसज्यप्रतिषेधे नञ् क्रियया सहान्वेति विशेष्यरूपेण। सुबन्तेन सह तु एकार्थीभावाभावात् सामर्थ्यहीनतया "समर्थः पदविधिः" इति नियमानुसारेण कथं समास इति चेदुच्यते – सामान्यतया प्रसज्यप्रितषेधे सुबन्तेन सह न समासावसरः तथापि कतिपयप्रयोगे अपवादरूपेण समासप्रयोगोपि दृश्यते "असूर्यललाट. दृशितपोः" ति सूत्रे। असूर्यम्पश्या राजदारा इत्युदाहरणम्। सू-

र्यमपि न पश्यन्ति इत्यर्थः। सूत्रमिदम् 'असूर्यवाचकादुपपदे दृशधातोः खशं विदधाति। अत्र नञ् सम्बन्धः दृशिक्रियया सहैव न तु सूर्यशब्देन। सूर्यं न पश्यन्तीति विग्रहात्। अतो नञ्-सूर्ययोः परस्परानन्वितरूपासामर्थ्यात् समासावसराभावेऽपि व्यवहारे तथा प्रयोगदर्शनात् पाणिनिना सूत्रं प्रणीतम्। अनेन सिद्ध्यति यत् क्वचित् सामर्थ्याभावेऽपि सामसो भवतीति। अयं हि असमर्थसमास इति कथ्यते।'

अत्र क्रियापदं गुणस्योपलक्षणमिति कथितम्। **तस्यायं भावः – नञ्सूत्रे भाष्ये "नञ्-समासे उत्तरपदार्थप्राधान्ये सति इदं सङ्गृहीतं भवति। किम्? अनेकमिति। किमत्र सङ्गृहीतम्? एकवचनम्। कथं पुनरेकस्य प्रतिषेधे बहूनां सम्प्रत्ययः स्यात्? प्रसज्यायं क्रियागुणौ ततः पश्चात् निवृत्तिं करोति। तद्यथा आसय, शायय, भोजय अनेकम्। अत्र कैयटः – निराश्रययोश्च क्रियागुणयोरसम्भवादनियतसंख्यद्रव्याक्षेपे सत्येकप्रतिषेधाद् बहूनां प्रतीतिरित्यर्थः। एतच्च प्रसज्यप्रतिषेध उच्यते। अग्रे च भाष्ये "यद्यपि तावत् अत्रैतद् शक्यते वक्तुं यत्र क्रियागुणौ प्रसज्येते। यत्र तु खलु पुनर्न प्रसज्यते तत्र कथम् – अनेकं तिष्ठति। कैयटोऽत्र – यत्र तु पूर्वमेव प्रतिषेधः पश्चात् क्रियागुणविधानं तत्र कथं बहूनां सम्प्रत्यय इति प्रश्नः।** भाष्ये "भवति चैवंजातीयकानामप्येकस्य प्रतिषेधेन बहूनां सम्प्रत्ययः। तद्यथा न न एकं प्रियम्। न न एकं सुखम्।इत्यादि" अनेन भाष्येण प्रसज्यप्रतिषेधस्य क्रियागुणविषयत्वमुक्तम्। नाम अयं प्रतिषेधः क्रियायां गुणे चान्वेति इत्यर्थः। अत्र "न न एकं प्रियम्" इति भाष्योक्तोदाहरणे द्वितीयं न इत्यस्य अस्माकमित्यर्थः इति सूचितम्। तदेव विवरणतयोक्तं नास्माकेमकं प्रियम् इति। अत्र नञः सम्बन्ध एकत्वसंख्यया न तु क्रियया। तेन एकप्रियप्रतिषेधे एकाधिकप्रियावभासनम्। संख्याया गुणत्वात् गुणविषये उदाहरणमिदम्। अन्यान्युदाहरणानि न सन्देहः, नोपलब्धिः इत्यादि। सन्देहोपलब्धीनां गुणत्वात्। क्रियोदाहरणन्तु "अनचि च" इति सूत्रम् तत्र "अचः परस्य यरो द्वे वा स्तः न तु अचि" इत्युक्तम्। अचि सति नेति तदर्थः। यद्यत्र पर्युदासः स्यात् तर्हि लाघवात् हलि इत्येव वदेत्। एवमेव गेहे घटो नास्ति इत्यत्र नञः अस्तिक्रियायामन्वयः। गेहनिरूपितविषयतावद्घटकर्तृका या सत्ता तत्प्रति-

योगिताकः अभावः इत्यर्थः। सत्ताया अत्र प्रतिषेधः।

**समस्तासमस्तनञर्थः -**

एतावता प्रसज्यप्रतिषेधरूपनञ् समस्तासमस्ततया द्विविध इत्युक्त्वा तत्र समस्तस्य असमस्तस्य च कः अर्थ इति प्रतिपाद्यते।

**समस्तनञस्तु अत्यन्ताभाव एवार्थः। असमस्तस्य तु अत्यन्ताभावः अन्योन्याभावश्च। तत्र तादात्म्येतरसम्बन्धाभावः अत्यन्ताभावः। तादात्म्यसम्बन्धाभावः अन्योन्याभावः भेदः इत्यर्थः।** तत्र समस्तप्रसज्यप्रतिषेधस्योदाहरणम् – 'असूर्यम्पश्या राजदारा' इति। अत्र राजदाराणां यः सूर्यदर्शनक्रियाया अभावः सः अत्यन्ताभावः, यतः अत्र तादात्म्येतरसम्बन्धस्य = समवायसम्बन्धस्य अभावः। दर्शनकर्तरि दर्शनक्रिया समवायेन तिष्ठति, तस्या अभावः समवायसम्बन्धाभाव एव। अत्र सूर्यकर्मकदर्शनप्रतियोगिकाभाववन्तः राजदाराः इति बोधः। 'गेहे घटो नास्ति', 'घटो न पटः' इति असमस्तस्य प्रसज्यप्रतिषेधस्योदाहरणम्। आद्ये घटककर्तृकसत्ताया अभाव तादात्म्यसम्बन्धभिन्नसम्बन्धाभाव एव, अतः अत्यन्ताभावोऽत्र। गेहनिरूपितविषयतावद्घटकर्तृकसत्ताप्रतियोगिताकोऽभावः इति बोधः। अन्त्ये पटे यो घटत्वाभावः स तादात्म्यसम्बन्धाभाव एव, अतोऽयमन्योन्याभावः। अत्र आरोपितपटत्ववान् घटः इति घटत्वावच्छिन्नप्रतियागितानिरूपकभेदविशिष्टो घट इति बोधः।

**अत्र प्रश्नः** - 'इह घटो भविष्यति' इत्यत्र भविष्यतः घटस्य स्वाधिकरणे कपालादौ योऽभावः स प्रागभावः, एवमेव भूतस्य घटस्य 'घटो नष्टः' इत्यादिस्थले प्रध्वंसाभाव इत्युच्यते। अनयोरपि अभावत्वात् नञ्द्योत्यत्वं स्यादिति चेत् –

**अत्रोत्तरम्** - प्रागभावप्रध्वंसाभावौ तु न नञ्द्योत्यौ। अनयोर्नञ्द्योत्यत्वं तु शब्दशक्तिस्वभावात् प्रतीयते।

**नञर्थः विशेष्यः क्रियागुणौ प्रति इति निरूपणम् –**

तत्र नञ्-द्योत्ययोर्द्वयोर्मध्ये अत्यन्ताभावो विशेष्यतया तिङर्थक्रियान्वयी एव। नञर्थः अत्यन्ताभावविशेष्यकबोधे तिङ्समभिव्याहृतधातुजन्योपस्थितेः का-

रणत्वात्। तथा च 'घटो नास्ति' इत्यत्र घटकर्तृकसत्ताप्रतियोगिताकोऽभाव इति बोधः। अत एव अहं नास्मि, त्वं नासि इत्यादौ घटौ नस्तः घटा न सन्ति इत्यादौ च पुरुषवचनव्यवस्था उपपद्यते। अन्यथा युष्मदादेः तिङ्सामानाधिकरण्याभावात् मद्भावोऽस्ति इत्यादाविव सा न स्यात्।

**अयं भावः** – अत्यन्ताभावस्थले नञर्थो योऽत्यन्ताभावः तस्य विशेष्यतया भानात् स विशेष्यः, अत्यन्ताभावः विशेष्यः यस्मिन् बोधे तादृशे अत्यन्ताभावविशेष्यकबोधे तिङ्समभिव्याहृतपदजन्योपस्थितिः कारणम्। अत्र तिङ्पदं कृदन्तस्यापि उपलक्षणम्। तथा च नञर्थ-अत्यन्ताभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधं प्रति क्रियात्व-गुणत्व-एतदन्यतरवाचकपदजन्या उपस्थितिः कारणम् इति कार्यकारणभावः फलति। घटो नास्ति इत्यादौ घटकर्तृकसत्ताप्रतियोगिताकः अभावः इत्यत्र समन्वयः – घटो नास्ति इत्यत्र नञर्थः अत्यन्ताभावः, स च विशेष्यः, विशेष्यता अभावनिष्ठा, सत्ता प्रकारः, प्रकारता सत्तायां, तत्रैव च सत्तायां अस्-धातुजन्योपस्थितिरपि वर्तते। एवञ्च अत्यन्ताभावनिष्ठा या विशेष्यता तन्निरूपिता या प्रकारता (अस्धातूपस्थाप्यसत्तायाम्), तेन प्रकारताख्यसम्बन्धेन शाब्दबोधनिष्ठा या कार्यता तत्कार्यत्वावच्छिन्नकार्यं प्रति क्रियात्व-गुणत्वान्यतरवाचकं यत् पदं प्रकृते 'अस्ति' इति क्रियापदं, तत्पदजन्या या उपस्थितिः सत्तारूपव्यापारार्थिका उपस्थितिः, तस्याः कारणत्वम्। तिङर्थक्रियोपस्थाप्यसत्तायां प्रकारता वर्तते सा च अत्यन्ताभावनिष्ठविशेष्यतानिरूपिता। अत्र सत्तारूपव्यापारस्य कर्ता घटः इत्यतः घटकर्तृका या सत्ता, सा च सत्ता अभावस्य प्रतियोगिनी इति कृत्वा घटकर्तृकसत्ताप्रतियोगिताकः(निरूपकः) अभाव इति बोधो भवति।

अत एव = नञर्थात्यन्ताभावस्य क्रियागुणौ प्रति विशेष्यत्वात् एव अहं नास्मि, त्वं नासि इत्यादौ घटौ न स्तः, घटा न सन्ति इत्यादौ च पुरुषवचनव्यवस्था च सङ्गता भवति। अभावोऽत्र प्राधान्येन वर्तते, यस्य सत्ता विशेषणम्। सत्ता हि अभावस्य प्रतियोगिनी इति पूर्वमेव उक्तम्। अहं, त्वं, घटौ घटा इत्येते कर्तृत्वेन वर्तन्ते। सत्ताऽभावयोः सामानाधिकरण्यात् तदनुसारेण पुरुषवचनव्यवस्था

उपपद्यते। एतद्विपरीतं यदि नञर्थस्य विशेषणत्वं क्रियायाश्च विशेष्यत्वं तदा मद्भावोऽस्ति इत्यादिवत् मत्प्रतियोगिकाभावकर्तृकसत्तार्थप्रतीत्या अभावस्य कर्तृत्वेन तेन सह सत्ता क्रियाया सामानाधिकरण्यात् अभावमनुसृत्य अन्यपुरुषैकवचनप्रयोगः क्रियते। तथा अहं नास्मि इत्यत्रापि मत्कर्तृकसत्ताप्रतियोगिताकोऽभावः इत्येतस्य स्थाने अस्मत्प्रतियोगिकाभावकर्तृकसत्ता इति बोधात् अभावस्य सत्ताया विशेषणत्वेन क्रियाया अभावेन सह सामानाधिकरण्यात् अस्मि इत्येतस्य स्थाने अस्ति इति प्रयोगः स्यात् इति दोषः। एवमेव घटौ न स्तः, घटाः न सन्ति इत्यत्रापि घटकर्तृकसत्ताप्रतियोगिताकः अभावः इत्यपेक्षया घटप्रतियोगिकाभावकर्तृकसत्ता इति बोधे द्विवचनबहुवचनापेक्षया अभावस्य कर्तृत्वात् एकवचनं च स्यात् इत्यपि दोषः। तस्मात् नञर्थः विशेष्यतया तिङन्तार्थक्रियान्वयी इत्येव स्वीकार्यम्।

**अत्र प्रश्नः** – असन्देह इत्यादौ समासे अभावविशेष्यकप्रतीतौ उत्तरपदार्थप्राधान्यमिति प्रतिपादकभाष्यग्रन्थस्य असङ्गतिः। कथमत्र निर्वाहः?

**अत्रोत्तरम्** – असन्देह इत्यादौ तु आरोपितार्थकनञैव समासः। आरोपितार्थकनञा इत्युक्ते पर्युदासः अत्र ग्राह्यः, न तु प्रसज्यप्रतिषेधः। तर्हि अत्यन्ताभावस्य प्रतीतिः कथमिति चेत् तत्तु फलितार्थतया।

एवमेव वायौ रूपं नास्ति इत्यत्र तात्पर्यानुपपत्त्या रूपप्रतियोगिताकात्यन्ताभावे लक्षणा। तेन वाय्वधिकरणिका रूपाभावकर्तृका सत्ता इति बोधः। वस्तुतस्तु समनियताभावैक्यमाश्रित्य = समनियतौ समानाशयौ यौ अभावौ रूपकर्तृकसत्ताभावः रूपाभावश्च तौ, तयोरैक्यमाश्रित्य रूपाभावः इति फलितार्थ एव। अरूपमस्तीत्यर्थकं वा तत्। अरूपमिति समस्तं पदं पर्युदासप्रतिषेधात्मकं यत्र वायौ रूपमारोप्यते नञा तद्ग्राहित्ये। तेन आरोपितरूपत्ववद्-वाय्वधिकरणकस्पर्शादिकर्तृकसत्ता इति बोधः। आरोपितरूपवान् यो वायुः तदधिकरणकस्पर्शादिकर्तृकसत्तेति बोधो यतो रूपाभावप्रतीतिरिति। उक्तमेव पूर्वं यत् अत्यन्ताभावेऽपि प्रसक्तं हि प्रतिषिध्यते इति न्यायेन आरोपितप्रसङ्गस्यैव निषेधः। तेन वायौ रूपं नास्ति इत्यादावपि वायौ रूपारोपं कृत्वैव निषेधो नञा बोध्यते।

अनेन अत्यन्ताभावप्रकारकक्रियाविशेष्यको बोधः इति तार्किकोक्तमपि निरस्तम्। ते हि अत्यन्ताभावः प्रकारः क्रिया च विशेष्यमिति यत्र तादृशबोधः अत्यन्ताभावस्थले जायते इति वदन्ति। परन्तु पूर्वोक्तव्याख्यानेन स्पष्टं यत् प्रसज्यप्रतिषेधे अत्यन्ताभाव एव विशेष्यः क्रिया च विशेषणमिति।

**तार्किकमतखण्डनम् -**

**नञर्थबोधविषये तार्किकमतखण्डनम् –**

अत्र तार्किकः – एतावता भवता कृतेन निरूपणेन घटो नास्ति इत्यादौ घटकर्तृकसत्तादिप्रतियोगिताकाभावः इति बोधः अङ्गीक्रियते। तथा च तिङर्थप्रकारकनञर्थात्यन्ताभावविशेष्यकबोधस्यात्र स्वीकारे, अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात् पूर्वं प्रतियोगिनः घटकर्तृकसत्तारूपपदार्थस्य उपस्थितिर्भवति, तेन घटरूपोऽर्थः प्रथमं बुद्धः = ज्ञातः पश्चान्नञा निवर्तयितुं न शक्यते। विद्यमानस्य नञ्-सहस्रेणापि निवर्तयितुमशक्यत्वात्। अविद्यमानस्य च पदार्थस्य स्वतः एव असिद्धत्वात् तस्य निषेधस्य वैयर्थ्याच्च। तदुक्तं श्रीहर्षेण खण्डनखण्डखाद्यग्रन्थे–

**सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते।**
**जगत्येन न्यायेन नञर्थः प्रलयं गतः॥ इति।**

इति कारिकया इदमेव प्रतिपादितम्। एवञ्च सत्पदार्थानां निषेधः नास्ति, असत्पदार्थानां च निषेधो न। अतः "नासतो विद्यते भावो नाभावो विद्यते सतः" इति न्यायेन नञर्थः यत्किञ्चित् नास्ति जगति इत्यर्थः।

**अत्र नागेशः** – खण्डनकारोक्तरीत्या नञर्थः नास्ति एवेति वक्तुं न शक्यते। यतः बौद्धो हि शब्दः वाचकः, बौद्ध एव अर्थः वाच्यः इत्युक्तत्वात् बुद्धिसतोऽप्यर्थस्य नञा बाह्यसत्तानिषेधः भवत्येव। बुद्धौ सन्नपि घटो बहिः नास्तीत्यर्थात्। यतः यस्य घटस्य निषेधः क्रियते स बुद्धिस्थस्तु वर्तते एव। स बुद्धौ वर्तमानोऽपि बहिः नास्ति इत्यर्थः वक्तव्यः। अत एव शशशृङ्गादीनां निषेधः प्रातिपदिकत्वञ्च सिद्धम्। एतत्सर्वं शक्तिप्रकरणे बौद्धपदार्थनिरूपणप्रसङ्गे प्रतिपादितमस्माभिः।



**अत्राक्षेपः** – बौद्धार्थस्वीकारेण नञा बाह्यसत्ताशून्यस्यापि निषेधः सम्भवति

इति क्लिष्टकल्पनापेक्षया घटपद-अस्तिपदाभ्यां या घटविषयाबुद्धिः जायते सा नञा निवर्त्यते इति उच्यताम्, बौद्धार्थस्वीकारः किमर्थः ?

**अत्र समाधानम्** – बुद्धिर्हि न शब्दवाच्या। केनापि शब्देन बुद्धेः वाच्यत्वं न सम्भवति, अतः नञा तस्याः निषेध एव कर्तुं न शक्यते। शब्दवाच्यस्यैव नञा निषेधसम्भवात्। नञः असत्त्वे येन शब्देन यस्यास्तित्वं प्रतिपाद्यते तस्यैवाभावः नञा बोध्यते अर्थात् घटः अस्ति इत्यत्र नञ् नास्ति अतः घटस्यास्तित्वं प्रतीयते। यदा तु अत्र वाक्ये घटो नास्ति इति नञ् प्रयुज्यते तदा घटस्याभावः प्रतीयते नाम घटस्यास्तित्वं निषिध्यते नञा। एवञ्च अनेन स्पष्टं यत् बुद्धेः शब्दवाच्यत्वाभावात् नञा तस्याः निषेधस्य असम्भवात् नैयायिकैः शशश‍ृङ्गो नास्ति इत्यत्र श‍ृङ्गे शशीयत्वभ्रमः इति क्लिष्टकल्पना कृता सा अनपेक्षिता। यतः तस्य बौद्धार्थत्वस्वीकारादेव सरलतया उपपत्त्या भ्रमत्वादिकल्पना अन्याय्या। बुद्धिप्रदेशे तु सर्वस्यापि पदार्थस्य सत्ता भवत्येव। बाह्य जगति तस्य अस्तित्वद्योतनाय 'अस्ति' इति प्रयुज्यते, अभावद्योतनाय 'नास्ति' इति प्रयुज्यते इति।

**घटो न पट इत्यत्र तार्किकमतखण्डनम् –**

**अत्राक्षेपः** – 'घटो न पटः' इत्यत्र नञो भेदवाचकत्वे भेदे घटस्य प्रतियोगितासम्बन्धेनान्वयोपपादनार्थं "नामार्थयोरभेदातिरिक्तः सम्बन्धः अव्युत्पन्नः" इति व्युत्पत्तौ निपातातिरिक्तविशेषणदाने गौरवं खलु ! इति चेत्

**अत्र समाधानम्** – घटो न पट इत्यत्र घटपदस्य घटप्रतियोगिकभेदाश्रये अप्रसिद्धा शक्तिरेव लक्षणा, नञ्पदं तात्पर्यग्राहकम्। तात्पर्यग्राहकत्वञ्च द्योतकत्वमेवेति पूर्वमेव निरूपितम्। अत एव अन्योन्याभावबोधे प्रतियोग्यनुयोगिपदयोः समानविभक्तिकत्वं नियामकमिति वृद्धोक्तं सङ्गच्छते।

**अयं भावः** – घटो न पट इत्यत्र घटप्रतियोगिताकभेदाश्रयः पटः इति बोधः। नञः भेदवाचकतया घटस्य प्रतियोगितया भेदे अन्वयः, भेदस्य चाश्रयतया पटे अन्वयः, तेन घटपदस्य तिङ्सामानाधिकरण्याभावात् प्रथमा न स्यात्। अत्र घटपदस्य प्रतियोगितया भेदे अन्वयात् तिङा तस्य सामानाधिकरण्यं नास्ति। अतस्तत्र प्रथ-

मानापत्तिः। अत एवास्माभिः घटप्रतियोगिकभेदाश्रये लक्षणा उच्यते न तु साक्षात् भेदः नञा उच्यते। नञा तु घटस्य यः भेदः पटे तस्य द्योतनं क्रियते। भेदाश्रये पटे लक्षणया भेदः लक्ष्यते। अतः नञः द्योतकत्वस्वीकारे नास्ति व्युत्पत्तौ निपातारिक्तविशेषणस्यापेक्षेत्यर्थः।

**अत्र तार्किकमतम्** – तार्किकास्तु घटपदं घटप्रतियोगिके लाक्षणिकं, नञ् पदं तु तद्भेदवति। भेदवत् इत्यस्य भेदाश्रयः इत्यर्थः। अतो घटप्रतियोगिकभेदवान् (भेदाश्रयः) पट इति बोधः इत्याहुः। अयमभिप्रायः – घटपदं घटप्रितयोगिके लाक्षणिकम्, तस्य घटप्रतियोगिकस्य (घटस्य) प्रतियोगितासम्बन्धेन भेदवति लाक्षणिके नञर्थैकदेशे भेदेऽन्वयः। तेनोक्तबोधः।

**अत्र नागेशः** – भेदवति नञर्थे भेदस्यैकदेशत्वात् तत्र घटार्थानन्वयापत्तेः। "पदार्थः पदार्थेनान्वेति न तु तदेकदेशेन" इति न्यायात्। पदद्वये लक्षणास्वीकारे गौरवाच्च। भाष्यमते लक्षणाया निपातानां वाचकत्वस्य च स्वीकाराभावदिति संक्षेपः। एवञ्च निपातानां वाचकत्वस्वीकारे लक्षणाङ्गीकारे च भाष्यविरोधात् तार्किकोक्तं न स्वीक्रियते।

**एवार्थनिरूपणम् -**

तत्र "एवे चानियोगे" इति वार्तिकेन एवनिपातस्य अनियोगार्थे पूर्वरूपं भवतीति तस्य एवस्य द्वौ अर्थौ निर्धार्येते। नियोगोऽनियोगश्च। तत्र वार्तिकव्याख्यावसरे कैयटः नियोगो नाम अवधारणम्, तदभावः असम्भवश्च इति प्रत्यपादयत्। अनयोर्थयोः एवशब्दः द्योतकः। द्योतक इति कथनेन एतस्य वाचकत्वं निराक्रियते। एतावता निपातानां द्योतकत्वस्य एव सिद्धान्ततया प्रतिपाद्यमानत्वात्।

अस्य द्योतकत्वादेव यत्र वाक्ये एवशब्दः नास्ति तत्रापि तदर्थप्रतीतिः भवति, सर्वं वाक्यं सावधारणमिति वृद्धोक्तिश्च सङ्गच्छते। एवशब्दाभावेऽपि तदर्थप्रतीतौ पस्पशाभाष्यं प्रमाणम्। तथा हि – "सन्ति एकपदान्यप्यवधारणानि। तद्यथा – अब्भक्षो वायुभक्ष इति। अप एव भक्षयति। वायुमेव भक्षयतीति गम्यते।" अत्र 'एकपदानि' इति एवशब्दरहितानि इत्यर्थः।

आलङ्कारिकास्तु एवशब्दस्य अर्थान्तरमपि गृह्णन्ति। यथा 'लवणमेवासौ भुङ्क्ते' इत्यादौ प्राचुर्यार्थः गम्यते। लवणमाधिक्येन स्वीकरोति इत्यर्थः। 'घट एव प्रसिद्धः' इत्यादौ अप्यर्थकः एवशब्दः। घटोऽपि प्रसिद्ध इत्यर्थः। 'क्वेव भोक्ष्यसे' इत्यादौ असम्भवार्थकः एवशब्दः। क्वचिदपि भोक्तुमसम्भव इत्यर्थः।

**अवधारणत्रैविध्यम् -**

उपर्युक्तः एवशब्दद्योत्यः अवधारणं त्रिविधमस्ति। (१) विशेष्यसङ्गतैवकारे अन्ययोगव्यवच्छेदरूपम्, (२) विशेषणसङ्गतैवकारे अयोगव्यवच्छेदरूपम् (३) क्रियासङ्गतैवकारे अत्यन्तायोगव्यवच्छेदरूपञ्च। तदुक्तं–

**अयोगमन्ययोगञ्च ह्यत्यन्तायोगमेव च।**
**व्यवच्छिनत्ति धर्मस्य एवकारस्त्रिधा मतः॥ इति**

**आद्यस्यार्थः** विशेष्यसङ्गतैवकारे = विशेष्येण सम्बद्धो य एवकारः तस्मिन्, अन्ययोगव्यवच्छेदः = अन्यस्मिन् योगो विशेषणीभूतधर्मः सम्बन्धः तस्य व्यवच्छेदो निषेधः तद्रूपम्।

**द्वितीयस्य** – विशेषणेन सम्बद्धो य एवकारः तस्मिन्, अयोगव्यवच्छेदः = अयोगो नाम विशेष्ये विशेषणस्य असम्बन्धः तस्य व्यवच्छेदो निषेधः तद्रूपम्।

**अन्त्यस्य तु** – क्रियया सम्बद्धो य एवकारः तस्मिन्, अत्यन्तायोगव्यवच्छेदः = अत्यन्तः नाम सर्वदा यः अयोगः असम्बन्धः तस्य व्यवच्छेदः निषेधः तद्रूपम् इति।

तत्र प्रत्येकमुदाहरणानि – विशेष्यवाचकपदसमभिव्याहृत एवशब्दः विशेष्याद्भिन्ने विशेषणीभूतधर्मस्य सम्बन्धं वारयति। यथा 'पार्थ एव धनुर्धरः' इत्यत्र पार्थाद्भिन्ने पुरुषे धनुर्धरत्वस्य सम्बन्धं वारयन् पार्थे तद्धनुर्धरत्वं नियमयति। अतः पार्थेतरावृत्ति यद् धनुर्धरत्वं तादृशधनुर्धरत्ववान् पार्थ इति बोधो जायते। अन्ययोगव्यवच्छेदः एवशब्दस्यार्थः। अत्र अन्यः = भेदाश्रयः, योगः = सम्बन्धः, व्यवच्छेदः = अभावः।

विशेषणसङ्गतैवकारस्य अयोगः अर्थः। तत्र विशेष्ये विशेषणस्य अयोगम् = असम्बन्धं व्यवच्छिनत्ति एवकारः। अत्र असम्बन्धस्य अभाव इति कथनेन नञ्द्वयमायातम्। असम्बन्ध इत्यत्र एकः नञ् सम्बन्धाभाव इत्यर्थः, अभावाख्यः अपरः नञ् सम्बन्धाभावाभावः इत्युक्ते सम्बन्ध इत्यर्थः। नञ्द्वयेन सम्बन्धस्य दृढता सम्पाद्यते 'नञ्द्वयं प्रकृतार्थं दृढयति' इति न्यायेन। यथा 'शङ्खः पाण्डुर एव' इत्यत्र द्वाभ्यां निषेधाभ्याम् = अभावाभ्याम् प्रकृतार्थस्य = पाण्डुरत्वाद्यर्थस्य दृढता बोध्यते। अत्र एवकारः विशेष्ये शङ्खे विशेषणनिष्ठपाण्डुरत्वधर्मसम्बन्धाऽभावं व्यवच्छिद्य शङ्खस्य पाण्डुरत्वं नियमयति। तेन पाण्डुरत्वसन्बन्धाभावाभाववान् शङ्ख इति बोधः, न तु नील इति।

क्रियासङ्गतैवकारः अत्यन्तायोगं व्यवच्छिनत्ति। अत्यन्तः = अतिशयितः अयोगः = सम्बन्धाभावः तस्य व्यवच्छेदः = अभावः क्रियासङ्गतैवकारेण बोध्यते। यथा नीलं सरोजं भवत्येव इत्यत्र कदाचिन्नीलत्वगुणवदभिन्नं यत्सरोजं तत्कर्तृता सत्ता इति बोधः। सरोजे नीलभवनाभावाभावः बोध्यते। अत्र नीलाभिन्नसरोजकर्तृका अतिशयितसम्बन्धाभावाभाववती सत्तेति बोधात् इदं ज्ञायते यदनेन सकले कमले नीलत्वं न नियम्यते, नापि अकमले अनीलत्वम्। अपि तु यस्मिन् कस्मिन्नपि कमले नीलत्वं द्योत्यते। तेन कमलं अन्यश्वेतादिगुणयुतोऽपि भवति इति प्रतीतिर्जायते।

**एवशब्दाभावेऽपि अवधारणप्रतीतौ प्रमाणोपन्यासः –**

क्वचिदेवशब्दाभावेऽपि नियमप्रतीतिः। तदुक्तं भाष्ये – "अभक्ष्यो ग्राम्यकुक्कुटः" इत्युक्ते गम्यते एतदारण्यो भक्ष्य इति। सर्वं वाक्यं सावधारणं भवतीति न्यायात्। वाक्यमेतत् पस्पशायां शब्दोपदेशप्रसङ्गे 'किं शब्दोपदेश कर्तव्य उत अपशब्दोपदेश आहोस्वित उभयोपदेश' इति प्रश्ने अन्यतरोपदेशेन निर्वाहः इति समर्थने उक्तमिदम्। अत्र रागतो ग्राम्यारण्यकुक्कुटसामान्ये प्राप्तस्य भक्षणस्य विशेषांशे (ग्राम्यकुकक्कुटे) निषेधश्रुत्या इतरांशे (आरण्यकुक्कुटे) भक्षणस्यानुज्ञानियमः प्रतीयते। ग्राम्य एव न भक्ष्य आरण्यस्तु कुक्कुटः भक्ष्य इति।

आलङ्कारिका अपि परिसंख्यालङ्कारप्रकरणे प्रमाणान्तरेण प्राप्तस्यैव वस्तुनः पुनः शब्देन प्रतिपादनं प्रयोजनान्तराभावात् स्वतुल्यन्यायव्यवच्छेदं गमयतीति। परिसंख्याया लक्षणन्तु–

**किञ्चिद् दृष्टमदृष्टं वा कथितं प्रकल्पते।**
**तादृगन्यव्यपोहाय परसंख्या तु सा स्मृता॥**

(का.प्र. १०/११९)

इति कारिकया परिसंख्याया लक्षणं कथितं तद्व्याख्यातं च वृत्तिकृता – **प्रमाणान्तरेण (शास्त्रपुराणादिरूपमानान्तरेण) अवगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्यतरव्यवच्छेदाय यत्तु पर्यवस्यति सा परिसंख्या।** उदाहरणन्तु–

**कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते।**
**काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति॥ इति।**

अत्र कौटिल्यं कचनिचये एव न तु हृदये, रागः करचरणाधरदलेषु एव नान्यस्मिन् जने, काठिन्यं कुचयुगले एव न तु हृदये, तरलत्वं नयनयोरेव न तु मनसीति परिसंख्या सदृशवस्त्वन्तरव्यवच्छेदात् इति। अस्तु प्रकृतमनुसरामः। एवञ्च आलङ्कारिकोक्त परिसंख्यालङ्कारे एवं विनापि अवधारणप्रतीतिरिति प्रतिपादितम्।

अत्र प्रमाणान्तरमपि वर्तते

तदुक्तं भागवतमहापुराणे–

**लोके व्यवायामिषमद्यसेवा, नित्यास्तु जन्तोर्न हि तत्र चोदना**
**व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा॥ इति।**

(भागवते ११.५.११)

अत्र व्यवायो = मैथुनम्, आमिषम् = मत्स्यादि, मद्यम् एतेषां सेवा जन्तोः = प्राणिमात्रस्य नित्या = रागतः प्राप्ता। अतस्तत्र चोदनाविधिर्नास्ति।

**प्रश्नः –** मैथुन-मांसभक्षण-सुरापानादिषु मानवानां रागतः प्रवृत्तिदर्शनात् तत्र विधानस्य न कापि आवश्यकता। तथा सति 'ऋतौ भार्यामुपेयात्' 'हुतशेषं भक्षयेत्'

'सौत्रामण्यां सुराग्रहान् गृह्णाति' इत्यादिविधानस्य वैयर्थ्यम्? इति चेत्

**उत्तरम्** – एते विधयः तत्तद्विशेषावसरेषु एव मैथुनादीनां पुनर्विधानं सूचयन्ति। पुनर्विधानस्य फलं तु एतद्व्यतिरिक्तावसरे मैथुनादीनां निवृत्तिः। अत्रापि एवशब्दाभावे नियमप्रतीतिः पुनर्विधानसामर्थ्यात्। सिद्धे सति आरभ्यमाणो विधिर्नियमाय भवति इति न्यायात्। अत्र त्रिविधनियमप्रतीतिरिति बोध्यम्। तथा हि – (१) ऋतावेव (२) भार्यामेव (३) उपेयादेव इति। नारीणां रजोदर्शनादनन्तराः षोडश निशाः ऋतुकालः इति कथ्यते। तत्र प्रथमेन ऋतुभिन्नकाले भार्यागमननिवृत्तिः फलम्। द्वितीयेन विवाहेतरस्त्रीगमननिवृत्तिः फलम्। तृतीयेन अनृतौ अनुपगमे ब्रह्मचर्यमुक्तम्। तेन ऋतुकाले तु गम्यैव। अत एव "ऋतुस्नातां तु यो भार्यां न गच्छति स मूढधीः।" इत्यादिरीत्या स्मृतिषु प्रायश्चित्तमित्यादि उक्तम्। एवञ्च नियमेन अन्यनिवृत्तिफलकत्वमित्यायातम्। तदुक्तं मीमांसाशास्त्रे–

**विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।**
**तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥ इति।**

तन्त्रवार्तिके (१-२-३४)

**अत्रायं भावः – यस्य यदर्थत्वं प्रमाणान्तरेणात्यन्तमप्राप्तं यो विधिः सोऽपूर्वविधिः।** यथा – स्वर्गकामो यजेत। अत्र यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण प्राप्तम्, किन्तु अनेनैव विधिनेति भवत्यपूर्वविधिः।

**पक्षेऽप्राप्तस्य तु यो विधिः स नियमविधिः।** यथा – व्रीहीन् अवहन्ति इत्यत्र नखविदलनादिनाऽवहननेन च वैतुष्यसम्भवे पाक्षिकत्वेन नियमः क्रियते अवहननेनैव वैतुष्यं कार्यम्।

**उभयस्य युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्या।** यथा – पञ्च पञ्चनखा भक्ष्या इत्यत्र क्षुत्प्रतिघातो यद्यपि शशकादिमांसैः श्वादिमांसैश्च भवति तथापि शशकादिमांसैरेव कर्तव्य इति परिसंख्यायते पञ्च पञ्चनखा भक्ष्या इत्यनेन। यद्यपि परिसंख्यायां नियमे च (१) स्वार्थहानिः = श्रुतस्य स्वार्थस्य पञ्चनखभक्षणस्य हानिः नाम परित्यागः, (२) प्राप्तबाधः = प्राप्तस्य च पञ्चातिरिक्तपञ्चनखभक्षणस्य बाधः,

(३) परार्थकल्पना = अश्रुतकल्पना अश्रुतपञ्चातिरिक्तपञ्चनखभक्षणनिवृत्तिकल्पनमिति दोषत्रयं तथाप्यनन्यगत्या स्वीक्रियते इति वृद्धाः। पञ्च एव पञ्चनखा भक्ष्या इति तात्पर्येण भाष्येऽस्य नियमत्वेन व्यवहारान्नियमपदेन परिसंख्यापि व्याकरणे गृह्यत इति ज्ञातव्यम्। अन्यनिवृत्तिरूपफलस्यात्रापि तुल्यत्वात्।

**॥ इति पङ्कजकुमारव्यासप्रणीतवैयाकरणसिद्धान्तकल्पतरौ**
**निपातार्थसिद्धान्तनिरूपणम् ॥**

**मञ्जूषाभूषणे यस्य वर्तेते मूलभूषणम्।**
**सोऽयं कल्पतरुर्ग्रन्थः कुर्यादध्येतृमङ्गलम् ॥**

इति राजस्थानप्रदेशस्थकोटामण्डलान्तर्गतचेचटग्रामवास्तव्येन श्रीजानमद्दिरामकृष्णवेङ्कटरमणगुरुचरणचञ्चरीकेण श्रीपङ्कजकुमारव्यासेन प्रणीतो वैयाकरणसिद्धान्तकल्पतरुस्सम्पूर्णः ।।